# अजितागमः

## क्रियापादः

## प्रथमः पटलः

## तन्त्रावतारः

श्रीमद्गिरिवरे रम्ये मन्दरे चारुकन्दरे
देवदानवगन्धर्वदैत्यदिव्याङ्गनागणैः १
यक्षराक्षसनागेन्द्रभूतप्रेतपिशाचकैः
मातृकिंपुरुषैश्चैव प्रमथैर्वैनतेयकैः २
विद्याधरैश्च विविधैः किन्नरैर्मुनिभिस्तथा
अष्टादशगणैरेतैर्जुष्टे तुष्टिप्रदे सदा ३
हृष्टपुष्टान्यपुष्टाद्यैः पतङ्गैः परिनादिते
पुष्पभारावनम्रैश्च फलभारावनम्रकैः ४
नानावृक्षलतागुल्मैः परितः परिशोभिते
हरिचन्दनमन्दारपारिजातैः सकल्पकैः ५
सन्तानैश्च कृतोद्याने गङ्गास्रोतःसमाकुले
हंसकारण्डवक्रौञ्चचक्रवाकादिसंतते ६
मत्तमातङ्गसिंहर्क्षमृगशाखामृगादिभिः
नानासत्त्वगणैर्मुक्तवैरभावैः समाकुले ७
आसीनमासने दिव्ये धर्माद्यैः परिकल्पिते
उमेशं देवदेवेशं सोमं सोमविभूषणम् ८
ब्रह्मेन्द्रधनदार्केन्दुवरुणान्तकवायुभिः
वस्वादित्यैश्च रुद्राद्यैः सर्वदेवैरुपासितम् ९
विनयेनाच्युतो गत्वा पृच्छति स्म जगद्गुरुम्
अच्युत उवाच
भगवन्देवदेवेश त्रिपुरान्तक शंकर १०

अजितं नाम यत्तन्त्रं शिवात्प्राप्तं त्वया पुरा
तन्ममाचक्ष्व देवेश तस्योत्पत्तिपुरः सरम् ११
एवमुक्तो महादेवः स्फुरन्निटिललोचनः
उवाच तन्त्रं हृष्टात्मा गिरिजापतिरव्ययः १२
यथाश्रुतं तत्सुशिवादच्युताय महात्मने
महेश्वर उवाच
शब्दब्रह्मस्वरूपम्
आसीत्पूर्वं हि सर्गादौ व्योमरूपात् पराच्छिवात् १३
शब्दस्ततोऽक्षरस्तस्माच्छब्दराशिरनुत्तमः
नववर्गसमायुक्तः पञ्चाशद्भेदभेदितः १४
नवपर्वक्रमस्तत्र पञ्चाशद्भेदसंयुतः
योनिबीजात्मकश्चापि स भेदोऽत्र निगद्यते १५
अ आ इ ई उ ऊ चैव ऋ ॠ ऌ ॡ तथैव च
ए ऐ ओ औ च अं अश्च वर्गोऽयं प्रथमो भवेत् १६
ककारश्च खकारश्च गघौ ङश्च द्वितीयकः
तृतीयस्तु चकारश्च छकारो जझञास्तथा १७
चतुर्थस्तु टकारश्च ठकारश्च डकारकः
ढणौ चैव तथौ चैव दधौ चैव न एव च १८
पञ्चमः स्यात्तथा षष्ठः पफौ बभौ म एव च
यकारो रेफकश्चैव लकारो वश्च सप्तमः १९
शकारश्च षकारश्च सकारश्चाष्टमः स्मृतः
हळौ च नवमो वर्गो भवेत्पर्वक्रमो ह्ययम् २०
योनिबीजात्मना भिन्नो वाचामङ्कुररूपधृत्
अकारादिविसर्गान्तं बीजं षोडशमुच्यते २१

योनिः स्याद्धि चतुस्त्रिंशदक्षराणि ततः परम्
पञ्चाशदक्षरैरेतैर्ग्रन्थराशिः समुत्थितः २२
वेदादिज्ञानभेदेन शिवज्ञानं विभेदितम्
तस्माद्धि कारणं विष्णो तारकं ज्ञानसंज्ञकम् २३
गुह्यमेकाक्षरं तद्धि प्रणवः परिकीर्तितः
त्रिगुणं त्रिजगच्चापि त्रिवेदांस्त्रिसुरानपि २४
त्रिकलं च त्रितत्त्वं च तमवेहि जनार्दन
ब्रह्मद्वयं समुद्दिष्टं शब्दब्रह्म परं च यत् २५
परं तच्छिवमुद्दिष्टं ब्रह्मशब्देन शब्दितम्
शब्दब्रह्ममयं यत्तत्सदाशिवमिति स्मृतम् २६
सदाशिवतनुः साक्षात् प्रणवः स्याज्जनार्दन
सर्वकारणभूतोऽसौ देवदेवः सदाशिवः २७
तस्यापि कारणत्वेन संस्थितः स परः शिवः
वाङ्मनोऽतीतरूपत्वात् परत्वेन स कथ्यते २८
तस्मात्कारणभूतो यः स एवात्र शिवः स्मृतः
सदाशिवस्तु कर्ता च भर्ता वै परमेश्वरः २९
तस्मान्महेश्वरो जातस्तस्माद्रुद्रोऽहमेव च
मत्तस्त्वं भवतश्चापि ब्रह्मा लोकपितामहः ३०
एवमस्मात्समुत्पन्नो मूलदेवः सनातनः
सोऽनुग्राह्य महेशादीञ्जगदीशान् सदाशिवः ३१
अस्मद्विश्वजगद्भूतिमस्माभिः कर्तुमुद्यतः
पञ्चवक्त्रधरो भूत्वा पञ्चभिस्तैर्मुखैरपि ३२
वेदादिग्रन्थजालं यत्तत्सर्वमवदत्प्रभुः
यदि शब्दमयं ज्योतिर्दीप्यते न जगत्स्वतः ३३

अज्ञानेनान्धतमसा भवेदस्तं गतं जगत्
इति संचिन्त्य देवेशः समुत्पाद्य दशात्मजान् ३४
तेषां ज्ञानं ददौ पूर्वं दशभेदेन भेदितम्
कामिकं प्रणवाख्यस्य सुधाख्यस्य च योगजम् ३५
चिन्त्यं सुदीप्तसंज्ञस्य कारणं कारणस्य च
इदं सुशिवसंज्ञस्य दीप्तमीशस्य चैव हि ३६
सूक्ष्मतन्त्रं तु सूक्ष्मस्य कालस्योक्तं सहस्रकम्
सुप्रभेदं दिशेशस्य चाम्बुनाम्नस्तथांशुमत् ३७
शिवभेदमिति प्रोक्तं तन्त्राणां दशकं हरे
दशानां पुनरप्येषां वक्ष्याम्यन्यं गुरुक्रमम् ३८
प्रणवात्रिकलः प्राप्तः कामिकं त्रिकलाद्धरः
योगजं तु सुधासंज्ञाद्भस्मसंज्ञस्ततः प्रभुः ३९
चिन्त्यं सुदीप्तरुद्रात्तु गोपतिश्च ततोऽम्बिका
कारणात्कारणं शर्वस्ततश्चापि प्रजापतिः ४०
शिवाच्चेदमहं प्राप्तो मत्तस्त्वं प्राप्तवानसि
दीप्तमीशात्त्रिमूर्तिश्च ततस्तस्माद्धुताशनः ४१
सूक्ष्माद्वै श्रवणः प्राप्तस्तस्माच्चापि प्रभञ्जनः
कालनाम्नः सहस्राख्यं भीमो धर्मस्ततो हरे ४२
सुप्रभेदं दिशेशात्तु विघ्नेशश्च ततः शशी
अम्बुसंज्ञादंशुमन्तं प्राप्तो ह्युग्रस्ततो रविः ४३
शिवभेदः समाख्यातो रुद्रभेदमथ शृणु
रुद्रानष्टादशोत्पाद्य शिवस्तत्संख्यया पुनः ४४
तन्त्राण्येषां ददौ तांश्च शृणु वक्ष्ये जनार्दन
रुद्रस्यानादिनाम्नस्तु विजयं दत्तवाञ्शिवः ४५

श्रीरूपस्य परं तन्त्रं परमेशप्रभाषितम्
दशार्णस्य तु निश्वासं प्रोद्गीतं शूलिनस्ततः  ४६
मुखबिम्बं तु शान्तस्य बिन्दोः सिद्धाख्यमेव हि
सन्तानं शिवनिष्ठस्य सौम्यस्योक्तं नृसिंहकम्  ४७
चन्द्रज्ञानमनन्तस्य विमलं निखिलात्मनः
निधनस्य स्वयंभूतं वीरं तत्तेजसः स्मृतम्  ४८
रौरवं ब्रह्मणेशस्य शिवसंज्ञस्य माकुटम्
किरणं देवताद्দर्यस्य ललितं चालयस्य तु  ४९
अनलं व्योमनाम्नस्तु शिवाख्यस्य च वातुलम्
एते रुद्राः शिवाज्ञाता लब्धतन्त्राः शिवाज्ञया  ५०
एते प्राथमिकाः प्रोक्ता द्वितीयानप्यथ शृणु
संप्राप्तोऽनादिरुद्रात्तु विजयं परमेश्वरः  ५१
श्रीरूपात्पारमेशं तु संप्राप्तो ह्युशना मुनिः
निश्वासं तु दशार्णात्तु संप्राप्ता शैलसंभवा  ५२
प्रोद्गीतं शूलिनः प्राप्तः कवचो मुनिसत्तमः
मुखबिम्बं प्रशान्तात्तु दधीची मुनिसत्तमः  ५३
सिद्धं बिन्दोस्ततः प्राप्तस्तन्त्रं चण्डेश्वरो गणः
सन्तानं शिवनिष्ठाच्च संप्राप्तः शंशपायनः  ५४
सौम्यात्तु नारसिंहाख्यं नृसिंहः प्राप्तवान्महत्
चन्द्रज्ञानमनन्तात्तु प्राप्तो देवपुरोहितः  ५५
निखिलात्मनस्तु विमलं वीरभद्रो गणाधिपः
निधनाच्च स्वयंभूतं संप्राप्तः पद्मसंभवः  ५६
तेजसो वीरसंज्ञं तु संप्राप्तस्तु प्रजापतिः
ब्रह्मणेशात्तु संप्राप्तो रौरवं नन्दिकेश्वरः  ५७

मकुटं शिवसंज्ञात्तु महादेवश्च लब्धवान्
किरणं देवताद्दर्यात्तु प्राप्तः संवर्तको मुनिः ५८
ललितं चालयात्प्राप्तो रुद्रभैरवरूपधृत्
अनलं व्योमसंज्ञाच्च संप्राप्तस्तु हुताशनः ५९
शिवाख्याद्वातुलं तन्त्रं महाकालस्तु लब्धवान्
अष्टाविंशतिभेदेन भिन्नेष्वेतेषु यो हरे ६०
प्रतितन्त्रं श्रुतो भेदो वद्त्ये तदग्रन्थसंख्यया
वक्तारं नारसिंहाख्यं भैरवोत्तरसंज्ञकम् ६१
कामिकस्य त्रयो भेदाः संख्या तस्य परार्धकम्
वीणाख्यं तारकाख्यं च शिवोत्तरमतः परम् ६२
आत्मयोगं च पञ्चैते श्रुताः सन्तादिना सह
योगजस्य तु भेदाः स्युर्ग्रन्थसंख्या तु लत्तकम् ६३
सुचिन्त्यं सुभगं वामं पापनाशं परोद्भवम्
सुधाबिम्बाख्यतन्त्रं च षड्भेदाश्चिन्त्यसंज्ञिते ६४
तस्यैव ग्रन्थसंख्या तु त्रिलत्तमभिधीयते
पावनं मारणं दौर्गं माहेन्द्रं भीमसंहिता ६५
विद्वेषं कारणं चैते भेदाः सप्तैव कारणे
ग्रन्थसंख्या च कोटिः स्यात्पार्वतीयाख्यमेव च ६६
प्रभूतं च परोद्भूतं पद्मं चेत्यजितस्य तु
भेदाश्चत्वार उद्दिष्टा अयुतं ग्रन्थसंख्यया ६७
अमितौजसमानन्दमद्भुतं चाब्दसंज्ञितम्
अमेयाख्यं तथाच्छाद्यं माधवोद्भूतमेव हि ६८
असंख्यममृतं चेति दीप्तभेदा नव स्मृताः
ग्रन्थसंख्या च नियुतं सूद्त्मभेदो न विद्यते ६९

ग्रन्थसंख्या तु पद्मं स्यादजितं विबुधं तथा
विशुद्धमङ्गसंज्ञं च हस्तं चाप्यथ जातिभाक् ७०
अलंकारं सुबोधं च प्रबुद्धं चाप्रमेयकम्
दश भेदाः सहस्रे तु संख्या शङ्खं तु तद्गता ७१
वासवं काश्यपं नीललोहितं भूततन्त्रकम्
विद्यापुराणमैन्द्रं चाप्यात्मालंकारमेव च ७२
वासिष्ठं गौतमं ब्राह्ममीशानोत्तरमेव च
प्रकरणं चापि भेदाः स्युर्द्वादशांशुमतः स्मृताः ७३
ग्रन्थसंख्या भवेद्विष्णो पञ्चलक्षेण लक्षिता
सुप्रभेदे न भेदोऽस्ति संख्या कोटित्रयं भवेत् ७४
अथोद्भवं च विजयं सौम्यं वै मृत्युनाशनम्
अघोरं चाथ कौबेरं महाघोरं तथैव च ७५
विमलं चेति भेदाः स्युर्विजयं च त्रिकोटिकम्
पद्मं हंसं च सामान्यं मातङ्गं यक्षकं तथा ७६
पुष्कलं सुप्रियायोगं पारमेशे प्रकीर्तिताः
भेदाः सप्त भवेदग्रन्थो लक्षद्वादशसंयुतः ७७
निश्वासोत्तरनिश्वासे तथा निश्वासकारिका
निश्वासनयनं चैव गुह्यनिश्वासमेव च ७८
अघोरनिश्वासमेवाथ निश्वासस्य मुखोदयम्
सुधानिश्वासमेवाथ निश्वासश्चाष्टधा भवेत् ७९
निश्वासस्यैव संख्या तु कोटिरित्यभिधीयते
वारुणं कवचं चैव पाशबन्धं तु पिङ्गलम् ८०
कुशं वै दण्डधारं च धनुर्वेदं तथापरम्
शिवज्ञानं तथा कोशं कालज्ञानं च गीतकम् ८१

भरतं सर्पभृष्टं चाप्यायुर्वेदं धनुर्धरम्
आतोद्यमिति भेदाः स्युः प्रोद्गीते षोडशैव हि ८२
तस्य स्याद्ग्रन्थसंख्या तु लक्षत्रितयसंमिता
चतुर्वक्त्रं च संस्तोभं प्रतिबिम्बमयोगजम् ८३
अर्थालंकारमैशान्यं तुटिनीरं तु कोटिकम्
कुट्टिमाख्यं तुलायोगं तुलाप्रत्ययमेव च ८४
महाविद्या महासौरं पट्टशेखरमेव च
नैर्ऋतं चेति भेदाः स्युर्बिम्बे पञ्चदशैव हि ८५
ग्रन्थसंख्या तु लक्षं स्यादत्र भेदेव्यवस्थिता
सारोत्तरमौशनसं शालाख्यं शशिमण्डलम् ८६
सिद्धे भेदास्तु चत्वारः संख्या कोटिस्तु सार्धका
लिङ्गाध्यक्षं सुराध्यक्षं शंकरं च महेश्वरम् ८७
असंख्यमनलं द्वन्द्वं सन्ताने सप्त भेदकाः
ग्रन्थसंख्या तु लक्षं स्यात्सन्ताने तु प्रकीर्तिता ८८
ईशानं शिवधर्मं च शिवधर्मोत्तरं तथा
दिव्यप्रोक्तं कुबेराख्यमिति भेदस्य पञ्चकम् ८९
नारसिंहे तु तत्संख्या द्विलक्षमिति कीर्तितम्
स्थिरं स्थाणु महान्तं च नन्दीशं नन्दिकेश्वरम् ९०
एकपादपुराणं च शांकरं नीलरुद्रकम्
शिवं चन्द्रं कल्पभेदं शिवशासनमेव च ९१
शिवशेखरसंज्ञं च देव्यास्तु मतमेव च
चतुर्दशेन भेदेन चन्द्रज्ञानं त्रिकोटिकम् ९२
अनन्तं भोगमाक्रान्तं वृषगुह्यमतः परम्
वृषभं वृषोदरं चैव व्यतिभूतं तु रौद्रकम् ९३

सुदन्तं भेदकं चैवाप्यारेवतमलंकृतम्
अतिक्रान्ताट्टहासाख्ये भद्रमच्छिद्रमेव च  ९४
विमले षोडशोक्ता हि भेदाः कोटित्रयान्वितम्
प्रजापतिमतं पद्ममिति भेदद्वयं मतम्  ९५
स्वायंभुवे तु तद्ग्रन्थसंख्या कोटिस्तु सार्धका
प्रस्तरं फुल्लममलं प्रबोधकमतः परम्  ९६
अमोहं मोहसमयं शाकटायितमेव च
भद्रं विलेखनं वीरं हलं वै बोधबोधके  ९७
भेदास्त्रयोदश प्रोक्ता वीरे नियुतसंख्यया
कालाख्यं कालदहनं रौरवं रौरवोत्तरम्  ९८
महाकालमतं चैन्द्रं षड्भेदा रौरवे स्थिताः
अस्मिंस्तन्त्रोत्तमे प्रोक्तं ग्रन्थसंख्यार्बुदाष्टकम्  ९९
मकुटोत्तरं तु मकुटं मकुटं द्विविधं स्मृतम्
ग्रन्थसंख्या तु तस्यैव लक्षमेकं प्रकीर्तितम्  १००
गारुडं नैरृतं नीलं रुक्षभानु यवं तथा
धर्माख्यं च कलाख्यं च प्रबुद्धं धेनुसंज्ञितम्  १०१
नव भेदाः समाख्याताः किरणे कोटिपञ्चकम्
ललितोत्तरं च कौमारं द्विभेदौ ललिते स्मृतौ  १०२
ग्रन्थसंख्या भवेत्तत्र सहस्राणां तथाष्टकम्
आग्नेये तु न भेदोऽस्ति ग्रन्थसंख्यायुतत्रयम्  १०३
वातुलोत्तरसंज्ञं च कालज्ञानं पुरोहितम्
सर्वं सर्वात्मकं नित्यं श्रेष्ठं शुद्धं महात्मकम्  १०४
विश्वं विश्वात्मकं तत्त्वं द्वादशैवात्र वातुले
भेदास्तद्ग्रन्थसंख्या स्यादेकलक्षेण लक्षिता  १०५

कामिकं योगजं चिन्त्यं कारणं चाजितं तथा
दीप्तं सूक्ष्मं सहस्राख्यं चांशुमत्सुप्रभेदकम् १०६
तन्त्राणां दशकं ह्येतदुपभेदसमन्वितम्
वेदाः साङ्गाश्च चत्वारः शिवस्योर्ध्वमुखोद्भवाः १०७
विजयं पारमेशं च निश्वासाख्यमतः परम्
प्रोद्गीतं मुखबिम्बं च सद्योजातमुखोद्भवाः १०८
सिद्धं सन्तानसंज्ञं च नृसिंहं चन्द्रभासकम्
विमलं चेति पञ्चैते वामदेवमुखोद्भवाः १०९
स्वायंभुवं तथा वीरं रौरवं तन्त्रमुत्तमम्
मकुटं किरणं चैते घोरवक्त्रसमुद्भवाः ११०
ललितं च तथाग्नेयं वातुलं चेति तत्त्रयम्
सोपभेदं समुद्भूतं पुरुषाख्यमुखाम्बुजे १११
अष्टाविंशतिभेदेन भिन्नेऽस्मिंस्तन्त्रसागरे
दध्नीव सर्पिः संव्याप्तं पुरुषार्थचतुष्टयम् ११२
त्वयापि पालकेनाद्य जगतां पुरुषोत्तम
धर्मार्थकाममोक्षार्थं यततां दातुमुत्तमम् ११३
लघूपायं महार्थं तु तन्त्रं पृष्टोऽहमस्मि यत्
तद्दामि शिवेनोक्तं शिवमुद्दिश्य निर्मितम् ११४
तनोति विपुलानर्थांस्तत्त्वमन्त्रसमाश्रितान्
त्राणं च कुरुते पुंसां तेन तन्त्रमिति स्मृतम् ११५
शिवरूपमिदं तन्त्रं प्रथमं वच्मि तत्त्वतः ११६

इत्यजिताख्ये महातन्त्रे क्रियापादे तन्त्रावतारो नाम प्रथमः पटलः

## द्वितीयः पटलः

## शिवस्वरूपकथनम्

शिवः सर्वोत्तरः स्थाणुः परमात्मा महेश्वरः
सच्चिदानन्दरूपी यः सदसद्व्यक्तिवर्जितः १
स एव सर्वगः सद्भिर्ब्रह्मशब्देन शब्दितः
स्थूलं सूक्ष्मं परं चैव व्यक्ताव्यक्तोभयं तथा २
बाह्यमाभ्यन्तरं चैव बाह्याभ्यन्तरमेव च
नित्यं चैव तथानित्यं नित्यानित्यं तथैव च ३
पुंलिङ्गं चैव स्त्रीलिङ्गं नपुंलिङ्गं तृतीयकम्
जाग्रत्स्वप्ने सुषुप्तिश्च भूतं भव्यं भविष्यकम् ४
अदृश्यं च तथा दृश्यं दृश्यादृश्यं तथैव च
वाचिकं मानसं कर्म मानं माता च मेयकम् ५
आत्मविद्याशिवाख्यं च भोक्ता भोज्यं च भोग्यकम्
मायेयमाणवं कर्म ज्ञानमज्ञानमेव च ६
प्रकाशं तिमिरं चैव स्थूलं सूक्ष्मं तथैव च
अन्तिकं च तथा दूरं हेयोपादेयमेव च ७
नित्यं नैमित्तिकं चैव परं चापरमेव च
संहृतं च प्रकीर्णं च सत्यं चासत्यमेव च ८
सच्चासच्च सुरश्रेष्ठ कर्तृ भर्तृ तथैव च
हृद्यं चैव तथाहृद्यं हृद्याहृद्यं तथैव च ९
वाच्यं च वाचकं यत्तदाधाराधेयमेव च
शीतमुष्णं च यत्प्रोक्तं सुखदुःखं तथैव च १०
पवित्रं चापवित्रं च मृदु तीक्ष्णं तथैव च
रागद्वेषं च जन्तूनां यत्नालस्यं तथैव च ११

उन्नतं च नतं चैव संपच्चासंपदेव च
सुस्थितं दुःस्थितं चैव चलं चाचलमेव च १२
सर्वमेतत्स एवेशस्तस्मादन्यन्न विद्यते
प्रकृतिश्च महांश्चैवाप्यहंकारक एव च १३
शब्दमात्रं स्पर्शमात्रं रूपमात्रं तथा परम्
रसमात्रं गन्धमात्रं श्रोत्रत्वक्चक्षुरेव च १४
जिह्वा घ्राणं च वाक्पाणिपादं पायुरुपस्थकम्
मनसा च पृथिव्यादिपञ्चकं पुरुषेण तु १५
रागो माया च विद्या च कला नियतिरेव च
विद्येशश्चैव शक्तिश्च शुद्धमाया तथैव च १६
शुद्धविद्या शुद्धकला सदाशिवशिवं विदुः
ईश्वरश्च स एव स्यात्स एवाहं भवांस्तथा १७
स एव देवो ब्रह्मादिकाश्यपाद्याः प्रजासृजः
स एव मुनयः सप्त चन्द्रादित्यौ ग्रहेश्वरौ १८
स एव देवराजोऽपि कुबेरवरुणौ तथा
स यमोऽग्निश्च नागेशो निर्ऋतिर्वायुरेव च १९
ईशानो गणपाः सर्वे वसवोऽष्टौ तथैव च
रुद्रा एकादशान्येऽपि देवदानवपुङ्गवाः २०
दैवमष्टविकल्पं च तैर्यग्योनं च पञ्चकम्
मानुष्यं च जगत्कृत्स्नं स एव शिव उच्यते २१
चत्वारश्च तथा वेदा रहस्येन वदन्ति तम्
सिद्धान्ते भूततन्त्रे च वामे स्रोतसि दक्षिणे २२
भैरवे च तथान्येषु पशुपाशुपतादिषु
विष्णुतन्त्रे च बौद्धे च तथा दिक्पालदर्शने २३

अष्टादशपुराणेषु षडङ्गेष्वपरेषु च
योगशास्त्रेषु सर्वेषु न्यायवैशेषिकादिषु २४
यैर्यैर्यद्यत्परीक्ष्यैव तत्त्वमित्युच्यते बुधैः
तत्तत्स एव देवेशः शिवसंज्ञः सनातनः २५
आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे २६
दिक्कालाद्यनवच्छिन्नो वाङ्मनोऽतीतगोचरः
निष्कलो निष्क्रियश्चापि सर्वगः सर्वदृक्सदा २७
अन्तर्यागो हि तत्पूजा योगिनामेव सा भवेत्
योगाभ्यासरतैः पुंभिर्हृत्कुशेशयमध्यमे २८
यमाद्यष्टाङ्गयोगेन विमलीकृतमानसैः
पूज्यते नेतरैस्तस्य पूजाकृत्यं विशिष्यते २९
हित्वा तदर्चनां नान्यैः श्रेयो भवति देहिनाम्
अन्तर्यागाधिकारोऽत्र क्वचित्कस्यापि जायते ३०
बहिर्यागाधिकारोऽयं किंचिज्ज्ञानां च जायते
इत्यवेद्य स देवेशः शिवः सर्वान्तरस्थितः ३१
लोकानुग्राहको भूत्वा जन्तूनां भुक्तिमुक्तिदः
पञ्चब्रह्मतनुः साक्षात् स शिवोऽभूत्सदाशिवः ३२
तस्मादीश्वर उत्पन्नः सर्वदेवादिरव्ययः
ततोऽहं च भवान्मत्तः समुत्पन्नो जगद्गुरुः ३३
त्वन्नाभिकमलोद्भूतो ह्यजो लोकपितामहः
शिवाश्रिता भवेद्विद्या सैव मायेति कीर्तिता ३४
मूलप्रकृतिरित्यन्ये सापि पञ्चसु मूर्तिषु
कार्यकारणभावेन स्थिता तस्याः स्थितिं शृणु ३५

तस्या मनोन्मनी देवी सदाशिवसमाश्रिता
तस्याश्च गौरी संभूता महेश्वरसमाश्रिता ३६
तस्या उमा सा संजाता मदीया स्याद्भवप्रिया
पद्मा तस्याश्च संभूता भवन्तं विष्णुमाश्रिता ३७
तस्याश्चापि समुद्भूता वाणी ब्रह्माणमाश्रिता
पितामहेन सृष्टं हि जगत्सर्वमशेषतः ३८
त्वया च पालितं तद्वत्संहृतं च मया तथा
कार्यकारणभावत्वमेवमस्मास्ववस्थितम् ३९
सदाशिवादिष्वेतेषु तनुता शिव उच्यते
केवलं कारणत्वं तु तस्मिन्नेकं व्यवस्थितम् ४०
सोऽयं सदाशिवो लोके महेश्वरपुरःसरैः
अस्माभिः पूज्यते लिङ्गे सर्वजन्तुभिरव्ययः ४१
इत्यजिताख्ये महातन्त्रे क्रियापादे शिवस्वरूपकथनं नाम द्वितीयः पटलः

## तृतीयः पटलः

## लिङ्गोत्पत्तिविधिः

लिङ्गोत्पत्तिं ततो वक्ष्ये शृणु वारिजलोचन
पुरुषस्य तु यच्चिह्नं पुरुषव्यक्तिकारणम् १
सदाशिवस्य तल्लिङ्गं शिवलिङ्गमिति स्मृतम्
कूटस्थश्च महादेवः सर्वकारणकारणम् २
त्वदादेर्यो ममादिस्तु तस्याप्यादिः सदाशिवः
युवां मोहार्तमनसौ सर्वज्ञावपि सर्वगौ ३
मां वेत्तुमसमर्थौ हि नारायणपितामहौ

परस्परबलाधिक्याद्दर्पमोहसमन्वितौ ४
मत्तोऽधिकोऽन्यो नास्तीति परस्परगतेर्ष्यया
जिघांसू द्वौ मिथो रुष्टौ प्रलये समुपस्थितौ ५
ततस्तु युवयोर्मोहमीदृग्भूतं सुरेशयोः
संवीक्ष्य सर्वदेवादिः शब्दब्रह्मतनुः शिवः ६
बोधार्थं युवयोश्चापि ज्वलनस्तम्भरूपधृत्
योऽतिष्ठत्परमेशानो मध्ये त्वाश्चर्यसंयुतः ७
युवां तेन परं गत्वा विस्मयं सुरपुङ्गवौ
किमिदं न्विति संचिन्त्य तत्परीक्षासमुद्यतौ ८
गतावूर्ध्वमधस्तात्तु लिङ्गरूपस्य तस्य हि
हंसक्रोडशरीरेण तत्पर्यन्तदिदृक्षया ९
सर्वलोकेश्वरौ देवौ निवृत्तावकृतार्थकौ
नत्वा स्तुत्वाथ देवेशं युवां तत्पार्श्वयोः स्थितौ १०
युवयोर्भक्तिमन्वीक्ष्य सर्वदेवेश्वरः शिवः
ईश्वरं तु तदा तत्र ज्ञानदं युवयोरपि ११
विसृज्य सोऽपि देवेशो युवां चैव स शंकरः
युवां न वेत्थ देवेशं सर्वकारणमव्ययम् १२
सदाशिवं महादेवमीशानं सुरनायकम्
अहं रुद्रो युवां चैव सर्वे तस्य प्रसादजाः १३
तस्य लिङ्गमिदं तावदहं रुद्रश्च सर्वदा
युवां चेदृशमुत्पाद्य नानाद्रव्यैर्यथेच्छया १४
पूजयामोऽथ देवेशं पूजितो लिङ्गमूर्धनि
ज्ञानं दास्यति सर्वज्ञः सदा मोहोपशान्तये १५
अस्मत्पूजाविधिं दृष्ट्वा चतुर्दशविधिं जगत्

पूजयिष्यति लिङ्गं तत् पूजा श्रेयोऽथ दास्यति १६
इत्युक्त्वा सह लिङ्गेन तिरोऽभूत्सपदीश्वरः
लयं गच्छन्ति भूतानि संहारे निखिलानि च १७
निर्गच्छन्ति यतश्चापि लिङ्गोक्तिस्तेन हेतुना
तस्मिन्समरर्चिते लिङ्गे सर्वे देवाः समर्चिताः १८
एतत्कर्म त्वदीयत्वाज्ज्ञातमेव पुरा त्वया
तथापि कथितं विष्णो तन्त्रस्याथ क्रमागतम् १९

इत्यजिताख्ये महातन्त्रे क्रियापादे लिङ्गोत्पत्तिविधिर्नाम
तृतीयः पटलः

## चतुर्थः पटलः
## लिङ्गलक्षणविधिः

अतः परमिदं वक्ष्ये लिङ्गलक्षणमुत्तमम्
लिङ्गं तु त्रिविधं प्रोक्तं व्यक्ताव्यक्तोभयात्मकम् १
व्यक्तं यत्प्रतिमाव्यक्तं शिवलिङ्गमिति स्मृतम्
मुखलिङ्गं भवेदन्यत्तृतीयमुभयात्मकम् २
सदाशिवं तदुद्दिष्टमव्यक्तं लिङ्गमुत्तमम्
ऐश्वरं मुखलिङ्गं स्याद्रौद्रं व्यक्तमिदं भवेत् ३
मदीयमिति तद्विद्धि व्यक्तलिङ्गं जनार्दन
अव्यक्तं प्रथम तेषां वदामि सुरसत्तम ४
तत्तत्प्रासादमानेन तन्मानात्तद्भवेदथ
प्रासादमादौ निश्चित्य तद्गर्भकरतोऽपि वा ५
द्वारमानेन वा कुर्यादेकैकं नवभेदतः
सर्वार्थसाधनं लिङ्गं ब्रह्मविष्णुशिवात्मकम् ६

प्रासादगर्भे शरभागभागे श्रेष्ठोत्तमं स्याद्गुणभागलिङ्गम्
गर्भार्धमानं त्वधमाधमं स्यादन्यानि लिङ्गानि वदामि सप्त ७
यतस्ततः श्रेष्ठकनिष्ठयोस्तत्कृत्वाष्टभागं गगनांशवृद्ध्या
अन्त्यान्त्यलिङ्गान्नवलिङ्गक्लृप्तिं श्रेष्ठोत्तमान्तं विदधीत विद्वान् ८
हस्तैकलिङ्गं नवभिर्विदध्याच्छ्रेष्ठोत्तमं हीनकनिष्ठलिङ्गम्
हस्तेन चैकैककराभिवृद्ध्या नवैव लिङ्गं तु यथाक्रमेण ९
श्रेष्ठोत्तमं द्वारसमुच्छ्रयेण द्वारे गुणांशे गगनांशकेन
अन्त्यान्त्यलिङ्गान्नवलिङ्गक्लृप्तिर्मध्येऽष्टभागे सति पूर्ववत्स्यात् १०
रत्नं शिलाधातुमहीरुहाश्च शस्ता ह्यमी मृत्तिकयापि पञ्च
लिङ्गार्थमेषामथ वच्मि भेदं रत्नादिकानां शृणु तत्समस्तम् ११
नवप्रकारं कथितं तु रत्नं शैलं चतुर्धाष्टविधं च धातु
दारूद्भवं स्यान्नवधा हि लिङ्गं तत्पार्थिवं च द्विविधं प्रदिष्टम् १२
माणिक्यमुक्ते त्वथ वज्रनीलौ वैडूर्यसंज्ञं हरिताश्मना च
पुष्यादिरागस्फटिकप्रवाला नवैव रत्नानि भवन्त्यमूनि १३
शिला सिता रक्तनिभा च पीता कृष्णा च विप्रादिषु योजनीया
ग्राह्यानुलोमेषु च साथ कृष्णा सर्वेषु वर्णेषु च कल्पनीया १४
कल्याणरूप्ये त्वथ कांस्यताम्रे त्रप्वारकूटायससीसकानि
धातूनि लिङ्गस्य विधावमूनि शुद्धानि चाष्टौ कथितानि विष्णो १५
बिल्वः शमी चन्दनदेवदारू लिङ्गार्थमश्वत्थकरञ्जवृक्षौ
अरिष्टवृक्षः खदिरो मधूको नवात्र वृक्षाः कथिताः ससाराः १६
यत्पार्थिवं तद्द्विविधं प्रदिष्टं पक्वामभेदेन शिवस्य लिङ्गम्
संस्कारमस्यास्त्वथ मृत्तिकाया वदामि यत्तच्छृणु दार्ढ्यकारि १७
या मृत्सिता रक्तनिभा च पीता लिङ्गस्य निर्माणविधौ प्रदिष्टा
शुद्धे तु तां संप्रतिगृह्य देशे विशोध्य सिञ्चेत्त्रिफलोदकेन १८

प्रसेचितायां मृदि तत्र विष्णो क्षीरद्रुमत्वग्भव चूर्णमिश्रम्
गोधूममाषोद्भवमाज्ययुक्तं पयोदधी तैलयुतं क्षिपेच्च १९
सगुग्गुलुं बिल्वफलस्य सारं प्रक्षिप्य तस्यां बहुशो विलोड्य
लिङ्गं तया लक्षणतो विदध्यान्मृदा तु मासोषितया शिवस्य २०
इष्टेन लिङ्गं कुर्वीत द्रव्येष्वेतेषु पञ्चसु
चलं चाचलसंज्ञं च चलं शैवांशमेव हि २१
तालादङ्गुलपर्यन्तं तल्लिङ्गं चलमुत्तमम्
अचलं यत्तु तल्लिङ्गं प्रासादस्थापने हितम् २२
अधोमध्योर्ध्वभागं तु ब्रह्मविष्णुशिवात्मकम्
चतुरश्रं भवेद्ब्राह्ममष्टाश्रं वैष्णवं भवेत् २३
वृत्तं शैवमिति प्रोक्तमेवं स्यात्तत्त्रिभागकम्
शैलं सुवर्णमव्यक्तमचलं तत्त्रिभागयुक् २४
उक्तमानगृहीता या सा शिला चतुरश्रिका
आयामसमनाहं स्यात्तत्त्रिधा विभजेत्सुधीः २५
अधोभागं परित्यज्य तदूर्ध्वे भागयोर्द्वयोः
कर्णार्धह्रासतः कुर्यादष्टाश्रं तु तयोः पुनः २६
शिवभागे विकारांशं जनयित्वाथ तत्क्रमात्
अश्रच्छेदेन वृत्तं स्यादेवं लिङ्गस्य लक्षणम् २७
कारयेच्चतुरश्रार्धमष्टाश्रस्य तु नाहकम्
तस्यार्धं वृत्तनाहं तु भवेदेतत्सुरार्चितम् २८
लिङ्गायामं गृहीत्वाथ तदर्धं चाष्टधा भजेत्
तद्भागैः पञ्चभिः कुर्याद्विष्कम्भं चोत्तमोत्तमम् २९
त्रिसप्तांशे तदायामे षट्पञ्चचतुरंशकैः
विष्कम्भं तु भवेच्छ्रेष्ठं मध्यं हीनमनुक्रमात् ३०

अथवा पञ्चविंशांशे नागद्वीपरसैरपि
भागैः पूर्ववदेवोक्तो विष्कम्भो लिङ्गसंस्थितः  ३१
एवं चतुर्णां लिङ्गानां विष्कम्भः परिकीर्तितः
चातुर्विध्यमतस्तेषां क्रमेण परिपठ्यते  ३२
आद्यं समं भवति लिङ्गमथ द्वितीयं तद्वर्धमानमपि चाथ शिवाधिकं च ।
तत्स्वस्तिकाख्यमुदितं तु तुरीयमेषां भेदोऽत्र भागवशतः परिकल्पनीयः  ३३
अजहरिहरभागं वेदवस्वश्ववृत्तं त्रिविधमपि समं स्यादुन्नतेनाद्यलिङ्गे
त्रिगुणितवसुभागे तत्त्रयं वर्धमानं मुनिवसुनवभागं ब्रह्मविष्णवीश्वराणाम्  ३४
उच्छ्रये कृतदशांशके भवेद्वह्निवायु सखवेदभागिकम्
यत्र पद्मजहरीश्वरात्मकं लिङ्गमूर्तमिह तच्छिवाधिकम्  ३५
आत्मायामे रुद्रभागे गुणांशो वैरिञ्चः स्याद्वैष्णवो वेदभागः
शैवस्तद्वत्स्वस्तिकेऽस्मिंस्तुरीये लिङ्गे प्रोक्तो ह्येवमेव क्रमेण  ३६
चतुर्णामपि वर्णानां वर्धमानशिवाधिके
प्रोक्ते क्रमविवक्षायां चत्वार्यप्यग्रजन्मनाम्  ३७
भूपानां वर्धमानात्तु लिङ्गत्रयमुदाहृतम्
लिङ्गद्वयमिति प्रोक्तं वणिजस्तु शिवाधिकात्  ३८
अन्त्यमेव हि शूद्रस्य स्वस्तिकं लिङ्गमुच्यते
अथ चैषां तु लिङ्गानां शिरसो वर्तनं भवेत्  ३९
चतुर्विधं तु तत्प्रोक्तं तद्विधिं शृणु सांप्रतम्
कुक्कुटाण्डसमं चैव छत्राकारं तथैव च  ४०
खण्डेन्दुसदृशाकारं त्रपुषाकारमेव च

वेदांशे तु शिरस्तारे नेत्रभागेन वर्तितम् ४१
कुक्कुटाराडोपमं तस्मिन्वसुभागविभाजिते
वर्तितं भागयुग्मेन च्छत्राकारं भवेच्छिरः ४२
लिङ्गतारेऽग्निभागे तु पञ्चभागविवर्तितम्
अर्धचन्द्रनिभं विद्यात्तस्मिन्षड्भागभाजिते ४३
सार्धेनैव द्विभागेन वर्तितं त्रपुषाकृति
विप्राणां त्रपुषाकारं छत्राकारं तु भूभृताम् ४४
खराडेन्दुवत्तु वैश्यानां शूद्राणां कुक्कुटाराडवत्
छत्राकारं तु सर्वेषां भवेल्लिङ्गशिरो नृणाम् ४५
सर्वं विप्रस्य निर्दिष्टं छत्राकारात्त्रयं नृपे
विशां खराडेन्दु सदृशाद्द्वयमेवं प्रकीर्तितम् ४६
शूद्राणामेकमेवोक्तं कुक्कुटाराडनिभं हरे
शिरसो वर्तनं प्रोक्तं धारालिङ्गं ततः शृणु ४७
साधकेनाश्रलिङ्गं तु पूजनीयं जनार्दन
साधको यत्फलार्थी स्यात्तत्फलं लिङ्गमुच्यते ४८
त्रयाश्रं वरदं ज्ञेयं द्व्यश्रं पुत्रविवर्धनम्
वैरिनाशनमेकाश्रं पञ्चाश्रं तु धनप्रदम् ४९
सप्ताश्रं द्वेषदं प्रोक्तमुच्चाटाय नवाश्रकम्
एकादशाश्रं व्याध्यर्थं शोषणं त्रिदशाश्रकम् ५०
धन्यं पञ्चदशाश्रं तु षडश्रं भोगदं भवेत्
अष्टाश्रं क्लेशदं प्रोक्तं द्वादशाश्रं भयावहम् ५१
षोडशाश्रं सुखार्थं स्यात्साधकानां विशेषतः
एवमश्रफलं प्रोक्तं रत्नानां फलमुच्यते ५२
माणिक्यं श्रीप्रदं प्रोक्तं यशसे नीलमुच्यते

हरितं फलदं प्रोक्तं दोषमुक्त्यै च मौक्तिकम् ५३
प्रवालं वशदं विद्याद्वज्रं राज्यप्रदं भवेत्
वैडूर्यं वैरिनाशार्थं सौभाग्ये पुष्यरागकम् ५४
सर्वकामप्रदं प्रोक्तं स्फटिकं तु जनार्दन
उत्तमं स्वस्वयोनि स्यान्मध्यमं स्वर्णयोनिकम् ५५
अधमं रौप्ययोनि स्यात्तदभावे तु ताम्रजम्
तस्याप्यभावे शैलं स्याद्रत्नलिङ्गस्य पीठकम् ५६
चललिङ्गे विशेषोऽयं कथ्यते सुरसत्तम
आयामसदृशं नाहं तत्समं पीठविस्तृतम् ५७
विस्तारसममुत्सेधं पीठस्यापि विशेषतः
शिरसो वर्तनं कुर्यात्पूर्ववच्छास्त्रचिन्तकः ५८
चतुरंशे तु तल्लिङ्गे त्रिभागं दृश्यमुच्यते
भागमेकं स्थितं पीठे निश्चलं तच्च कारयेत् ५९
चललिङ्गमिति प्रोक्तं क्षणिकं लिङ्गमुच्यते
गोमयं नवनीतं च पिष्टं चान्नं फलं तथा ६०
गुलं च सैकतं चैव पल्लवं चाष्टमं स्मृतम्
क्षणिकानां तु लिङ्गानां पीठं नैवास्ति लक्षणम् ६१
पूजावसाने चोद्धार एतेषां परिकीर्तितः
गोमयं रोगनाशाय नवनीतं सुखप्रदम् ६२
पिष्टं पुष्टिप्रदं विद्यादायुषे चान्नलिङ्गकम्
फलं चाभीष्टसिद्ध्यर्थं गुलं प्रीतिप्रदं भवेत् ६३
सैकतं मुख्यतां दत्ते पल्लवं सद्गुणप्रदम्
प्रोक्तं तु क्षणिकं लिङ्गं स्वयमुद्भूतमुच्यते ६४
छत्राकारं भवेदैन्द्रमग्नेर्विषममस्तकम्

यमस्य चिपिटं प्रोक्तं शूलाग्रं नैर्ऋतं मतम् ६५
वारुणं कलशाकारं वायव्यं ध्वजवद्भवेत्
गदाकारं तु सौम्यं स्यात्त्रिशूलाकारमस्तकम् ६६
ईशानस्य भवेल्लिङ्गं ब्रह्मणः पद्ममस्तकम्
वैष्णवं शङ्खशीर्षं स्याद्विद्यादेतानि लक्षणैः ६७
अन्यैश्च देवदैत्येन्द्रदानवेन्द्रनिशाचरैः
सिद्धविद्याधराद्यैश्च तथैवान्यैर्गणेश्वरैः ६८
मुनिभिश्चापि यल्लिङ्गं स्थाप्य वास्थाप्य पूजितम्
स्वयंभूतं तदुद्दिष्टं लक्षणं यत्र नो भवेत् ६९
नानाचिह्नसमायुक्तं नानावर्णसमन्वितम्
कर्कशं सुषिराद्यैश्च युतं यद्यत्र दृश्यते ७०
नागेषु वापि सर्वं तदेवमेव हि कीर्तितम्
शिरसो वर्तनं तस्य सूत्रवर्तनमेव च ७१
नाहोत्सेधादिमानं च न कदाचित्प्रदृश्यते
पीठप्रासादक्लृप्तिस्तु लिङ्गमानाद्विधीयते ७२
स्वयंभूतमिति प्रोक्तं सर्वलोक सुखावहम्
लिङ्गस्य लक्षणं प्रोक्तं सर्वकामार्थसाधनम् ७३

इत्यजिताख्ये महातन्त्रे क्रियापादे लिङ्गलक्षणविधिर्नाम
चतुर्थः पटलः

## पञ्चमः पटलः
## शिलादिग्रहणविधिः

अतः परमिदं वक्ष्ये शिलादिग्रहणं हरे
आचार्यः शिल्पिना सार्धं यदा गच्छेच्छिलां प्रति १

सुमुहूर्ते निमित्तानि तदा समुपलक्षयेत्
दध्यन्नं मधु सर्पिश्च पूर्णकुम्भं तथैव च  २
काञ्चनं रजतं चैव सर्वरत्नानि मृत्तिकाम्
भूषणानि च सर्वाणि सायुधानि सरोरुहम्  ३
साक्षतं सफलं चैव रोचनां गैरिकं तथा
भद्रपीठं च शङ्खं च सितपुष्पं तथैव च  ४
ग्रम्बराणि च शुक्लानि मत्स्यं मांसं तथैव च
वृषेन्द्रं च गजेन्द्रं विप्रान्वेश्याश्च शोभनाः  ५
कन्यां तुरङ्गं मिथुनं मयूरं चाषमेव च
व्याघ्रं च नकुलं चैव यानं मित्राणि चैव हि  ६
गीतमङ्गलवाद्यानि वेदघोषादिकं तथा
उपश्रुतिं च गच्छेति दृष्ट्वा श्रुत्वा व्रजेत्सुधीः  ७
कार्पासमौषधं सर्वं कृष्णधान्यं तथैव च
लवणं चाथ तैलं च मद्यं क्षीरं तथैव च  ८
पङ्कमङ्गारकं चैव गुलं चर्म तथैव च
शकृदिन्धनपाषाणतुषकेशानि चैव हि  ९
उन्मत्तं जटिलं मुण्डं नग्नं काषायिणं तथा
क्षुत्क्षामं विकृतं चैव नरवाहं तथैव च  १०
ग्रभ्यक्तं मुक्तकेशं च रोगयुक्तं तथैव च
सर्पं गोधां च शरभं वराहं जाहकं तथा  ११
शशं च रोदनाक्रोशकलहं शवतूर्यकम्
ग्रागच्छ विश तिष्ठेति वचनानि तथैव च  १२
किमर्थं गच्छसीत्येवमादिप्रोक्तं वचस्तथा
दृष्ट्वा श्रुत्वा च नो गच्छेदुषित्वा त्र्यहमुन्मनाः  १३

संपूज्य दीक्षितान् विप्रान् शिव व्रतपरायणान्
हुत्वा दोषनिवृत्त्यर्थमघोरेण शताहुतीः १४
ततो गच्छेद्वनं शैलं सनाथो देशिकः सुधीः
तत्र रम्यतरे देशे वानप्रस्थाश्रमैर्युते १५
नदीतटाकसंयुक्ते फलपल्लवशोभिते
पुष्पभारावनम्रैश्च तरुषण्डैरलंकृते १६
जिघांसुसत्त्वनिर्मुक्ते प्रविश्याचार्यशिल्पिनौ
वृक्षसंग्रहणं चैतदुक्तं वृक्षं समाश्रयेत् १७
ऋजुं वृत्तं समं चैव ग्रन्थिरन्ध्रविवर्जितम्
सत्वचं पत्रपुष्पाढ्यं गृह्णीयाद्वृक्षमुत्तमम् १८
गजादिभग्नं वज्रादिदग्धं वक्रं क्षुपं तथा
स्वयं शुष्कं च मन्त्रज्ञो वर्जयेद्भूरुहं तथा १९
पूर्वरात्रे तु तद्वृक्षे शिलायां वा समाहितः
पुण्याहं वाचयित्वाथ रक्षासूत्रं तु बन्धयेत् २०
सौवर्णं राजतं वाथ क्षौमं कार्पासमेव वा
बन्धयेद्धृदयेनैव वृक्षं वामेन पूजयेत् २१
शिलामघोरमन्त्रेण ततो होमं च कारयेत्
वृक्षस्य च शिलायाश्च पूर्वे वा चोत्तरेऽपि वा २२
समिदाज्यचरूणां तु प्रत्येकं तु शताहुतीः
हुत्वा स्पृष्ट्वा च हस्तौ च प्रभाते छेत्तुमारभेत् २३
मधुप्लुतकुठारेण छेदयेत्पुरुषेण तु
प्रागुत्तरप्रपातस्तु शुभदो वृक्षजो भवेत् २४
तथैव हि शिला ग्राह्या तस्या लक्षणमुच्यते
सरित्सरस्तटाकादितीरजातां च कञ्जलैः २५

क्षालितां च द्रुमच्छायागृहीतां सुसमां दृढाम्
आयामपरिणाहाढ्यां शिलां लिङ्गार्थमाहरेत् २६
प्राच्यां शिरः प्रतीच्यां च मूलं तस्याः प्रकीर्तितम्
उदीच्यां वा शिरो मूलं दक्षिणां दिशमाश्रितम् २७
अधोभागे मुखं तस्या लाञ्छयित्वा समुद्धरेत्
बाला सुयौवना वृद्धा शिला सा त्रिविधा मता २८
दृषद्बाला समादिष्टा मन्दध्वनियुता च सा
पीवकङ्काभिघाता च सा बालेति निगद्यते २९
शीतला धीरशब्दा च सुगन्धा चापि या भवेत्
सुस्निग्धा निबिडाङ्गा च सैव स्याद्युवती शिला ३०
ग्राह्या लिङ्गविधौ सैव सर्वदोषविवर्जिता
रूक्षा बन्धूकवत्खण्डा निःशब्दा जर्जरा च या ३१
सा वृद्धा स्याच्छिलानां तु वर्जयेद्बालिकामपि
रूक्षां क्षाराम्बुमध्यस्थां त्यजेदुपहतामापि ३२
रेखा बिन्दुकलङ्काढ्यां विमलैरन्वितां त्यजेत्
हेमं लोहं च कांस्याख्यं विमलं तत्त्रिधा भवेत् ३३
हानिर्मृत्युरनावृष्टिर्मण्डलानां क्रमात्फलम्
गैरिकाविषकासीसैः क्षीरवृक्षैस्तु तां शिलाम् ३४
परिलिप्योषितां कृत्वा ह्यहोरात्रमतन्द्रितः
प्रक्षाल्य तु पुनः सम्यक् स दोषं च परीक्षयेत् ३५
परीक्ष्य बहुधा पश्चात्तक्षणं तु समाचरेत्
मण्डलं तक्षणे यस्यास्तां सगर्भां विनिर्दिशेत् ३६
माञ्जिष्ठे मण्डले भेको गोधा स्यात्पीतवर्णके
शुभ्रे सर्पः समुद्दिष्टः कपिले मूषिको भवेत् ३७

सरटो रक्तवर्णे च गुलवर्णे दृषद्भवेत्
कपोतवर्णे गौली च चित्राभे वृश्चिका तथा ३८
निस्त्रिंशसदृशे तोयं खद्योतो मधुसंनिभे
सिकता भस्मवर्णे तु तेषां फलमथ शृणु ३९
राजनाशप्रदा गोधा पशुनाशं तु वृश्चिका
ज्वरमारीप्रदः सर्पो मराडूकः कभयप्रदः ४०
गर्भस्रंसो जलात्प्रोक्तः खद्योतोऽग्निभयप्रदः
पाषाणवृष्टिः पाषाणात् क्षयरोगस्तु वालुकात् ४१
सरटो व्याधिदः प्रोक्तो मूषिको धान्यनाशकृत्
गौलिका शोकदा ज्ञेया तस्माद्गर्भयुतां त्यजेत् ४२
चिह्नानि यदि सन्त्यत्र तच्चिह्नान्युपलक्षयेत्
पद्मस्वस्तिकचन्द्रार्क चक्रयोनिध्वजोपमम् ४३
खड्गच्छत्रमृगेन्द्राभवृक्षकच्छपमत्स्यवत्
हस्तिश्रीधेनुवच्चापि स्रग्जटानेत्रवत्स्थितम् ४४
एवं भूतानि चिह्नानि कल्याणानि भवन्ति हि
गृध्रकङ्कसमानं च काकसर्पकबन्धवत् ४५
श्येनोलूकसमं चैव वृषदन्तखरोपमम्
गोमायूष्ट्रोपमं चैव पिराडरेखा च निन्दितम् ४६
वर्णात्मकं तथा चिह्नं शुभाशुभफलप्रदम्
शृणु लिङ्गेषु संश्लिष्टं वक्ष्यमाणं मया हरे ४७
स्वरेषु ऋ ॠ लृ ॡ च ए ऐ ओ औ अशोभनाः
वर्गेष्वाद्यं शुभं ज्ञेयं द्वितीयं निन्दितं भवेत् ४८
तृतीयं शुभदं ज्ञेयं चतुर्थमुभयात्मकम्
आद्याक्षरं च प्रासादमतीव शुभदं भवेत् ४९

अनुनासिकविसर्गौ च त्याज्यावेतौ मनीषिभिः
कूटो विसर्गयुक्त्याज्यः सबिन्दुः सोऽतिशोभनः ५०
मकारोकारकौ चापि वर्णौ शुभफलप्रदौ
शुभचिह्नयुता ग्राह्या त्यजेदन्यामशोभनाम् ५१
एवं परीक्ष्य बहुधा क्षालनं च पुनः पुनः
सर्वात्मसंज्ञमन्त्रेण संप्रोक्ष्य च शिलां तदा ५२
जुहुयादुत्तरे तस्याः समिदाज्यचरून् क्रमात्
प्रत्येकं तु शतं वाथ तदर्धं वा तदर्धकम् ५३
ब्रह्मविष्णुशिवान्मत्वा मूलमन्त्रैः पृथक्पृथक्
मन्त्रसंहितया पश्चाज्जुहुयात्सर्पिषा सुधीः ५४
प्रत्येकं पञ्चभिर्मन्त्रैरीशानाद्यैर्दशाहुतीः
हुत्वान्ते त्वप्रमत्तस्तु शिलां स्पृष्ट्वाथ देशिकः ५५
पूर्णाहुतिं शिवेनैव दत्त्वा देवं विसृज्य च
गृहीत्वा तां शिलां मन्त्री व्योमव्यापि जपन्सदा ५६
तत्क्षणं शिल्पिना पश्चात्कृतहस्तेन कारयेत्

इत्यजिताख्ये महातन्त्रे क्रियापादे शिलादिग्रहणविधिर्नाम पञ्चमः पटलः

## षष्ठः पटलः

## देशनिर्देशः

अथ देशं प्रवक्ष्यामि लिङ्गसंस्थापनोचितम्
मेरुमन्दरकैलासशिखरेषु च सानुषु १
नीले श्वेतगिरौ चैव शृणु बेरगिरौ तथा
निषधे हेमकूटाख्ये हिमाख्ये च महागिरौ २

विन्ध्ये च मलये सह्ये गिरौ रैवतके तथा
श्रीपर्वते देवगिरौ महेन्द्रे गन्धमादने ३
गिरिष्वेतेषु सर्वेषु पुरायतीर्थयुतेषु च
तथाभूतेष्वररायेषु गङ्गातीरे तथैव च ४
यमुनायाः सरस्वत्या गोदावर्यास्तथैव च
नर्मदासिन्धुशोणानां तीरयोरुभयोरपि ५
कवेरकन्यकातीरे सर्वासां मध्यमेऽपि च
नदीनदानामन्येषां पुरायानां तीरयोरपि ६
मानसादिसरस्तीरे ह्रदानां महतामपि
समुद्रतीरे सर्वत्र पुरायद्मेत्रसमीपतः ७
सर्वद्मेत्रेषु पुरायेषु कुरुद्मेत्रमुखेषु च
अविमुक्तादिसर्वेषु पुरायस्थानेषु चैव हि ८
प्राकाराभ्यन्तरे वापि लिङ्गे पूर्वस्थिते सति
उद्यानेषु च रम्येषु सिद्धद्मेत्रेषु वा पुनः ९
मुनीनामाश्रमे रम्ये वानप्रस्थाश्रमेऽपि च
विपुलकुमुदपद्मप्रान्तविस्तीर्णतोयप्रचुरविततवीचीचक्रसंश्लेषरम्ये
मृदुतरबहुशष्पास्वादबद्धादराणां सततवसतिभूते चोत्सुकानां
मृगाणाम् १०
अरुणकुमुदनीलनीरजाद्यैरपि समलंकृतपुरायतोयसिक्ते
फलकुसुमभरावनम्रसान्द्रैस्तरुनिकरैर्बहुभिः सदोपगूढे ११
यत्र वृद्मलतागुल्माः पुष्पस्तबकसंयुताः
श्लद्मणच्छायायुताः श्लद्मणफलपल्लवशालिनः १२
हृष्टपुष्टविहङ्गाश्च सदाबद्धजनाश्रयाः १३
तत्रोपविष्टतरुशाखकलान्यपुष्टे फुल्लोरुकैरवदलद्युतिशुभ्रभृङ्गे

कूजत्कलापिकुलशालिनि वृक्षमूले सुप्तप्रबुद्धरुरुमण्डलमण्डिते च
१४
उत्फुल्लस्थलकमले ततो मनोज्ञे विस्तीर्णे विततसरित्तटाककूले
आलोलन्मृदुकुशकाशशोभवीरुत्पर्यन्तोन्मुखमृगगोकुलैश्च रम्ये १५
आलोलद्विकच महोत्पलावलीषूद्गायद्भिः पतदलिभिः कृतोपशोभे
हंसानामपि मिथुनैश्च चक्रनाम्नां संकीर्णामलसलिले ससारसानाम्
१६
एवंभूते स्थापितं चारुदेशे कुर्यान्नृणां सर्वदेष्टार्थसिद्धिम्
शैवं लिङ्गं देशिकैः पापदेशे नेष्टं दद्यात्तेन तं वच्मि देशम् १७
यत्र दावाग्निना दग्धो वृक्षो वज्रहतोऽपि वा
यत्र कण्टकिनो वृक्षाः श्लेष्मातकतरुस्तथा १८
पारिभद्रो विषतरुः करञ्जाङ्कोलकौ तथा
पूतीको ब्रह्मदण्डी च तं देशं परिवर्जयेत् १९
यत्र चास्थिकपालानि यत्र सर्पाश्च भीषणाः
वल्मीका बहवो यत्र यत्रोप्तं न प्ररोहति २०
यत्र शुष्कलता गुल्माः परिक्षीणा महीरुहः
यत्र दूरतरं खातेऽप्यधस्तोयं न दृश्यते २१
पाषाणाः शर्कराश्चापि प्रभूतं यत्र दृश्यते
चिराध्युषितचण्डालपुलिन्दादिस्तु यो भवेत् २२
योऽतिनिम्नोऽतिदरितो यो वा द्रुमसमावृतः
तं देशं वर्जयेद्धीमाँल्लिङ्गस्थापनकर्मणि २३
ग्रामादीनां तु सर्वासु दिक्षु स्थापनमिष्यते
ब्रह्मस्थानस्थितं लिङ्गं ब्रह्मक्षत्रहितावहम् २४
ऐन्द्रे राज्यप्रदं प्रोक्तं याम्ये वृद्धिस्तथायुषः

आरोग्यं वारुणे चापि सौम्ये वित्तप्रदं भवेत्  २५
वह्निदेशे सुखं दद्याद्विजयं नैर्ऋते तथा
वायव्ये संपदं दद्यान्मोक्षमीशानगोचरे  २६
दिग्विदिक्ष्वेवमष्टासु स्थापिते विधिना भवेत्
अन्तरालेषु चान्येषु फलमेवं विनिर्दिशेत्  २७
इत्यजिताख्ये महातन्त्रे क्रियापादे देशनिर्देशो नाम षष्ठः पटलः

सप्तमः पटलः
कर्षणविधिः

कर्षणस्य विधिं वक्ष्ये भूपरीक्षापुरःसरम्
यत्र देशे तु तच्छैवं लिङ्गं संस्थाप्यमिष्यते  १
तं देशं समनुप्राप्य प्रणम्य च महेश्वरम्
दिव्यान्तरिक्षभौमानि निमित्तान्युपलक्षयेत्  २
तच्छुभाशुभमालक्ष्य शुभे भूमिं परीक्षयेत्
अशुभेषु निमित्तेषु घोरेणाज्यशताहुतीः  ३
हुत्वा परीक्षयेत्पश्चाद्देशिकः शास्त्रवित्तमः
पुण्याहं वाचयित्वादौ स्थित्वाथ प्राङ्मुखः सुधीः  ४
दक्षिणेन तु पादेन कुट्टयेदस्त्रमुच्चरन्
कुट्टने यदि सा भूमिर्गम्भीरा नदति स्थिरा  ५
संग्राह्या ह्यथवा तत्र खात्वा हस्तमितां बुधः
पूरयेदवटं भूयो न्यूने न्यूना समे समा  ६
अधिके तूत्तमा सा वा समा वा शोभना मही
हीना सा न भवेद्ग्राह्या तस्याः पांसुरथापि वा  ७
आढको यदि षष्टिः स्याद् पलानीह च सा शुभा

ग्राह्या भूमिर्विनिन्द्या स्यान्नन्यूना लिङ्गस्थितौ तदा ८
अथवा हस्तविस्तारे तद्वत्खाते महीतले
पूरयित्वाम्भसा सद्यो गच्छेन्नवपदं सुधीः ९
तथागत्य पुनर्दृष्टे यदि न्यूनं जलं भवेत्
अवटे स्यान्मही निन्द्या विपरीता तु वृद्धिदा १०
एवं परीक्षितायां तु धरायां कर्षणं भवेत्
याज्ञिकैस्तु हलं कृत्वा युगं च तरुभिर्नवैः ११
वृषौ चैव सितौ पुष्टौ युवानौ संविगृह्य च
हेमशृङ्गखुरौ कृत्वा वस्त्रवेष्टितकन्धरौ १२
शुचिवल्कलसंभूतरज्जुना त्रिवृता वृषौ
युगेन सह संयोज्य वृषगायत्रिमन्त्रतः १३
हलं च तेन संयम्य प्राङ्मुखो देशिकः स्थितः
नववस्त्रोत्तरीयश्च बद्धपञ्चाङ्गभूषणः १४
वृषावभ्यर्च्य तद्बीजमन्त्रेणैव समाहितः
लाङ्गलं वामहस्तेन गृहीत्वा दक्षिणेन तु १५
ब्रह्मवृक्षतरोः शाखां कर्षयेत्तां वसुन्धराम्
वृषगायत्रिमुच्चार्य हुंकारान्तेन हुंकृतिम् १६
कृत्वा प्रचोदयेत्सद्यो वृषौ पूर्वमुखौ तदा
चतुर्दण्डप्रमाणेन गत्वा पूर्वोत्तरं सुधीः १७
आवर्तयेद्वृषावेवं त्रिःकृत्वा चोत्तरायतम्
तथा विकृष्य पश्चाच्च हलैरन्यैश्च कर्षयेत् १८
बीजावापनयोग्यां तां कृत्वा भूमिमतन्द्रितः
तत्र सम्यक्तिलव्रीहिमुद्गान्मूलेन वापयेत् १९
संसिच्याथ जलैः पश्चाद्रक्षयित्वा भुवं तदा

परीक्षयेत्ततस्तां तु भुवं देशिकसत्तमः २०
त्रिरात्राङ्कुरिता श्रेष्ठा पञ्चाहान्मध्यमा स्मृता
निन्द्यान्याङ्कुरिता भूमिर्देशिकैः शास्त्रवित्तमैः २१
श्रेष्ठा मध्या च संग्राह्या निन्द्या या स्यान्मही तदा
हुत्वा घोरेण मन्त्रेण शतं तां च समाहरेत् २२
अङ्कुराणि च वक्राणि धूम्राणि विरलानि च
शुष्काणि तिर्यग्जातानि निन्द्यानीति समादिशेत् २३
तद्दोषशमनार्थं तु होमयेद्बहुरूपिणा
गते मासेऽथवा पक्षे त्रिचतुःपञ्चसंयुते २४
सस्येऽस्मिंस्तत्समस्तं तु गोगणेभ्यो निवेदयेत् २५
इति कृषिविधिपूतां कारयित्वा धरित्रीं दधिघृतगुलमिश्रं ब्राह्मणान् भोजयित्वा
अजवृषमहिषादीन् गोगणं वासयित्वा पुनरवनिमिमां तां प्रोक्षयेत्पञ्चगव्यैः २६

इत्यजिताख्ये महातन्त्रे क्रियापादे कर्षणविधिर्नाम सप्तमः पटलः

## अष्टमः पटलः

## वास्तुपूजाविधिः

अतः परं प्रवक्ष्यामि वास्तुपूजां यथाक्रमम्
पुराभूत्पुरुषः कश्चिद्भुवनत्रयभीषणः १
भुवनानि शरीरेण च्छादयन्भीमविक्रमः
तं दृष्ट्वा सर्वदेवाश्च भीता ह्यासन्परस्परम् २
संप्रधार्य तु संभूय गृहीत्वा तमधोमुखम्
अवष्टभ्य भुवः पृष्ठे सहसैव न्यपातयन् ३

स एव वास्तुरित्युक्तस्तस्याङ्गानि सुरासुरैः
यत्र येन गृहीतानि तत्र तस्य बलिं हरेत्  ४
बलिं गृहीत्वा ते सर्वे प्रीणन्ति सुचिरं सुराः
यदि तेषां तदा पूजा सुराणां न विधीयते  ५
तदा देवास्तदङ्गानि हित्वा गच्छन्ति वै ध्रुवम्
गतेषु तेषु तद्वास्तु क्षीयते नात्र संशयः  ६
क्षयहेतुस्तदङ्गानां विक्षेपोऽत्र भविष्यति
तस्मात्तद्वास्तु देहस्थानमरानर्चयेत् सुधीः  ७
ईशाने तु शिरो वास्तोः पादौ निर्ऋतिगोचरे
कुक्षिर्ब्रह्मणि विज्ञेयमेवमङ्गानि कल्पयेत्  ८
अन्येष्वङ्गेषु ये देवास्ते पूजायां पराश्रिताः
यत्र प्रासाद अन्यद्वा क्रियते तत्र देशिकः  ९
भुवि निम्नोन्नतं सम्यक्समं कृत्वोपलिप्य च
गोमयेन पुनः कृत्वा पुण्याहं तत्र देशिकः  १०
सितपिष्टाक्तसूत्रेण प्रासादसमविस्तृतम्
प्राङ्मुखं दशसूत्राणि तथोदीच्याननानि च  ११
आस्फाल्य तत्र संजातेष्वेकाशीतिपदेषु च
ब्रह्मा नवपदं भुङ्क्ते वास्तुमध्ये विशेषतः  १२
समर्यको विवस्वांश्च मित्रस्तु पृथिवीधरः
ब्रह्मणश्च चतुर्दिक्षु स्थित्वा षट्पदभोगिनः  १३
पूर्वाद्युत्तरपर्यन्तेष्वथ प्रोक्ता विदिक्षु च
आपश्चैवापवत्सश्च सविता सावित्र एव च  १४
इन्द्र इन्द्रजयश्चैव रुद्रो रुद्रजयस्तथा
एते द्विपदभोक्तारश्चाष्टौ देवाः प्रकीर्तिताः  १५

आग्नेयादिषु कोणेषु प्राक्पश्चिमपदाश्रयाः
बाह्यवीथीगतान्देवान्क्रमशोऽद्य वदामि ते १६
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः
आदित्यः सत्यकभ्रंशावन्तरिक्षश्च पूर्वगाः १७
अग्निः पूषा च वितथो गृहक्षतयमौ तथा
गन्धर्वो भृङ्गराजश्च मृगश्चैव तु दक्षिणे १८
पश्चिमे पितरश्चैव दौवारिकस्तथैव च
सुग्रीवः पुष्पदन्तश्च वरुणश्चासुरस्तथा १९
शोषश्च पापयक्ष्मा च ते चाष्टौ कथिताः सुराः
उत्तरे च तथा रोगो नागो मुख्यस्तथैव च २०
भल्लाटश्च तथा सोम ऋगोऽदितिर्दितिस्तथा
एकैकपदभोक्तारो द्वात्रिंशत्परिकीर्तिताः २१
ब्रह्माणं मध्यमे पूर्वं पूजयेद्देशिकोत्तमः
पाद्यैराचमनार्घ्यैश्च गन्धपुष्पसुधूपकैः २२
दीपैश्च परमान्नं तु चरुं तस्य निवेदयेत्
समर्यकस्य शुद्धान्नं मुद्गान्नं तु विवस्वतः २३
गुलान्नं मित्रसंज्ञस्य दध्यन्नं पृथिवीधरे
आपादीनामथाष्टानां यववेणुकुलत्थकैः २४
माषनिष्पावगोधूममसूरश्यामकैरपि
मिश्रं चरुं क्रमेणैव दद्याद्रुद्रजयान्तकम् २५
द्वात्रिंशानामथेशानमुखानां च क्रमाच्चरुम्
पृथक्पृथक्ससर्पिष्कं दद्यात्तेषां वदामि ते २६
मन्त्रान्ब्रह्मादिकानां तु क्रमेणैवामृताशिनाम्
ओंकारमादितः कृत्वा हां हं हामिति चोपरि २७

वास्तोष्पते ब्रह्मणे च नम इत्यन्ततो भवेत्
अन्येषामपि सर्वेषां स्वनामाद्य तु बीजकम्  २८
प्रणवेन सहोच्चार्य चतुर्थ्यन्तैः स्वनामभिः
पृथक्पृथग्भवेन्मन्त्रस्तैस्तैर्मन्त्रैर्बलिं हरेत्  २९
चरकी च विदारी च पूतना पापराक्षसी
एताश्चतस्रो बाह्यस्थाः शक्तयः पदवर्जिताः  ३०
प्रागादिषु क्रमात्तासां मांसोदनबलिं हरेत्
बलिं समाप्य पश्चात्तु शल्योद्धारं समाचरेत्  ३१
यजमानस्तदा त्वङ्गं संस्पृशेत्तत्र चैव हि
वास्त्वङ्गे शल्यमस्तीति निश्चित्यात्रैव खानयेत्  ३२
शिरःस्पर्शे करोटिः स्यान्मुखस्पर्शेऽस्थि चैव हि
बाहुस्पर्शे च दारूणि कण्ठस्पर्शे च लोष्टकम्  ३३
कुक्षिस्पर्शे तथा लोहमूरुस्पर्शे दृषद्भवेत्
पादस्पर्शे भवेत्खड्गं पदस्थानि समुद्धरेत्  ३४
एवं कृत्वात्र शास्त्रज्ञो होमं चापि प्रकल्पयेत्
समर्यकपदे तत्र होमस्थानं विधीयते  ३५
सैकतं स्थण्डिलं तत्र कृत्वा पूर्वमतन्द्रितः
स्थण्डिलादिस्रुवान्तानां कृत्वा शुद्धिं यथाविधि  ३६
पञ्चसंस्कारमादौ तु कृत्वा तत्र हविर्भुजः
ब्रह्माणं तत्र चावाह्य ब्रह्माग्निरिति चिन्तयेत्  ३७
पूजयित्वाथ गन्धाद्यैस्ततो होमं समारभेत्
हुत्वाग्निमुखमादौ तु परिषिच्य तु पावकम्  ३८
समिदाज्यचरूणां तु प्रत्येकं तु शताहुतीः
ब्रह्मणे प्रथमं हुत्वा सर्पिषा सकलं ततः  ३९

समर्यकादिदेवानां चतुर्णां च यथाक्रमम्
हुत्वा दशाहुतीस्तेषां स्वाहान्तं च स्वनामतः ४०
आपादीनामथाष्टानामष्टौ प्रत्येकमाहुतीः
ईशानप्रमुखानां तु प्रत्येकं पञ्चपञ्चतः ४१
पूर्णाहुतिं ततो दद्याद्ब्रह्ममन्त्रेण देशिकः
एकाहुतिप्रयोगेण स्वनामपदमन्त्रतः ४२
चरकीप्रभृतीनां च जुहुयाद्देशिकोत्तमः
परिषिच्य ततश्चाग्निमुद्वास्याथ समापयेत् ४३
इत्यजिताख्ये महातन्त्रे क्रियापादे वास्तुपूजाविधिर्नामाष्टमः पटलः

## नवमः पटलः
### शङ्कुस्थापनविधिः

शङ्कुच्छायाविधानेन वक्ष्ये प्राचीं विनिश्चिताम्
देवविप्रनृपादीनां गृहारम्भविधेः पुरा १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
यजमानानुकूलर्क्षे शिल्पिना सह देशिकः २
विमलेऽभ्युदयात्पूर्वं स्थापयेच्छङ्कुमुत्तमम्
गृहीतवास्तुनो मध्ये दण्डमात्रं तु भूतलम् ३
समं कृत्वा जलेनैव कृत्वा दर्पणवत्सुधीः
तन्मध्ये लक्षणोपेतं तस्य लक्षणमुच्यते ४
चतुर्विंशाङ्गुलोत्सेधं वरं तस्य प्रकल्पयेत्
षडङ्गुलक्षये तस्मिन्मध्यमोत्सेध उच्यते ५
तस्मात्षडङ्गुले हीने कन्यसोच्छ्रय उच्यते
आयामसदृशं नाहं मूलेनास्य प्रयोजयेत् ६

तत्रिभागैकभागेन शिरोनाहः प्रकीर्तितः
शङ्कुमानेन तद्बाह्ये परितो मण्डलं लिखेत्  ७
मण्डलत्रितयं चैव कृत्वा सूत्रेण संमितम्
पूर्वापराह्णयोश्छायां प्रवेशे चाथ निर्गमे  ८
छायाग्रयोगवृत्तेषु लक्षयित्वात्र लाञ्छयेत्
पूर्वपश्चिमभागेषु मण्डलत्रयसंस्थिताः  ९
छायाकारा भवन्त्यत्र तानाश्रित्य च संस्थिताः
पूर्वापरायता रेखास्तिस्रः कुर्याद्यथाक्रमम्  १०
मण्डलाध्यधिके ह्रासो न्यूने वृद्धिर्यथा भवेत्
कारयित्वा तथा धीमान्मध्यवृत्तस्य मध्यगाम्  ११
पूर्वापरायतामेकां रेखां तदनुसारतः
तन्मण्डलप्रमाणेन सूत्रेण सुमितं ततः  १२
पूर्वपश्चिमपर्यन्तस्थितं पार्श्वक्रमेण तु
दक्षिणोत्तरगं मत्स्यं जनयित्वा तथा पुनः  १३
पार्श्वयोरपि तन्मानात्पूर्वपश्चिमयोरपि
मत्स्यद्वयं तु तन्मध्ये पार्श्वस्थभ्रमणेन च  १४
जनयित्वा ततस्तद्वद्दक्षिणोत्तरगं बुधः
कृत्वा मत्स्यद्वयं पश्चात्प्राङ्मुखोदङ्मुखेषु च  १५
मत्स्येषु षट्सु पाश्चात्यनिर्गताभिर्जनार्दन
रेखाभिरथ षड्भिस्तु जनयेच्चतुरश्रकम्  १६
तेनैव चतुरश्रेण प्रासादं त्वत्र कारयेत्  १७

इत्यजिताख्ये महातन्त्रे क्रियापादे शङ्कुस्थापनविधिर्नाम नवमः पटलः

# दशमः पटलः

## आद्येष्टकाविधिः

वक्ष्याम्याद्येष्टकान्यासमतस्तल्लक्षणान्वितम्
प्रासादस्य त्रिहस्तस्य भवेदेकाङ्गुलायता १
तदर्धविस्तरोपेता तदर्धघनसंयुता
इष्टका सर्वधाम्नां च प्रोक्ता पक्वेष्टकात्मनाम् २
शिलाधाम्नि विशेषोऽयं कथ्यते सुरसत्तम
उपर्युपरि धाम्नां च प्रतिहस्तविवर्धनम् ३
दैर्घ्यतारघनेषूक्तमङ्गुलार्धतदर्धकैः
तासामग्रं भवेन्मूलं विकारांशविहीनकम् ४
एवं कृत्वेष्टकाः पञ्च शिला वा विन्यसेत्तदा
नन्दा भद्रा जया रिक्ता पूर्णा स्युर्नामतश्च ताः ५
ततः प्रासादमानेन खानयेद्धरणीतलम्
खातं पादप्रमाणेन भूपृष्ठं तु शुभावहम् ६
पादाद्वेदांशहीनेन खातं मध्यममुच्यते
अधिष्ठानप्रमाणेन कन्यसं परिकीर्तितम् ७
उत्तमानां विमानानां खननं चोत्तमं भवेत्
मध्यमानां मध्यमं तदधमानां तथा भवेत् ८
प्रथमं फलकोत्सेधं हित्वा श्वभ्रोपरीरितम्
वालुकाभिः समापूर्य समंकृत्वा समन्ततः ९
जलस्थितिं तु तत्रैवं कृत्वा च त्रिदिनं सुधीः
कुट्टयेत्सुदृढं सम्यग्गजपादैश्च दारुजैः १०
प्रासादगर्भं निश्चित्य सूत्रेण सुमितं तथा
द्वारस्य दक्षिणे पार्श्वे भित्तिमध्यगतं यथा ११

विन्यसेदिष्टकास्तस्मिन्नवटे च घनीकृते
गोपुरेषु तथा प्रोक्तं प्राकारेष्वीशगोचरे १२
मण्डपेष्वथ सर्वेषु विशेषोऽयं निदर्शितः
प्राचीमुखैस्त्रिभिः सूत्रैस्तथोदीचीमुखैरपि १३
मण्डलाभ्यन्तरं कृत्वा चतुष्केषु समन्वितम्
चतुर्ष्वपि च कोष्ठेषु वह्नेर्वा शांकरे दिशि १४
कोणस्तम्भं परित्यज्य स्तम्भमूले तु विन्यसेत्
शुद्धिं कृत्वा तु पञ्चानामिष्टकानामनुक्रमात् १५
पुण्याहं वाचयित्वादौ पञ्चभूतात्मकानि तु
बीजानि तानि विन्यस्य देशिकः शान्तमानसः १६
शिल्पिहस्ते चतस्रश्च दापयेदिष्टकास्तदा
तासामप्यधिवासं तु तेनान्यत्र प्रयोजयेत् १७
व्योमाक्षरसमोपेतां पञ्चमामुपरीष्टकाम्
आचार्यो मण्टपे रम्ये निशि पूर्वेऽधिवासयेत् १८
अधिवासविधिश्चाथ क्रमेण परिपठ्यते
भूताब्धिनवहस्तेषु मण्डपेषु यथाक्रमम् १९
हीनमध्योत्तमानां च विमानानां यथाक्रमम्
नवधा मण्टपं कृत्वा मध्ये कृत्वा च वेदिकाम् २०
तालमात्र तलोत्सेधां दर्पणोदरसंनिभाम्
प्रागादिषु पदेष्वग्नेः कुर्यादायतनानि च २१
चतुरश्रं धनुर्वृत्तं त्रिकोणं च यथाक्रमम्
ऐशान्येऽष्टाश्रकं कुण्डं प्रधानमिति कीर्तितम् २२
स्थण्डिलान्यथवा कुर्यात्सिकताभिश्च तानि वै
अलाभादेकहोमार्थं प्राच्यामेव प्रकल्पयेत् २३

गोमयेनानुलिप्याथ मराटपं वेदिसंयुतम्
पुरायाहं वाचयित्वाथ स्तम्भान्वस्त्रेरा वेष्टयेत् २४
वितानध्वजसंयुक्तं दर्भमालासमावृतम्
कदलीतोररौर्युक्तं द्वारकुम्भसमन्वितम् २५
मङ्गलाष्टकसंयुक्तं मङ्गलाङ्कुरशोभितम्
कृत्वा तु वेदिकां मध्ये कारयेत्स्थरिडलं सुधीः २६
अष्टद्रोरौस्तदर्धैर्वा तदर्धैर्वाथ शालिभिः
द्रोरौर्वाथ च तन्मध्ये पद्ममष्टदलं लिखेत् २७
तराडुलैः पूरयेद्रेखा विकीर्य तिललाजकान्
तत्र मन्त्रितकायस्तु गुरुरर्घ्यकरस्तथा २८
सोष्णीषः सोत्तरीयश्च बद्धपञ्चाङ्गभूषराः
कर्णिकायां यजेत्पूर्वं गन्धाद्यैस्तु मनोन्मनीम् २९
वामादिशक्तीः शक्रादिदलेष्वष्टसु पूजयेत्
पश्चात्प्रतिसरं तस्याः पूर्णायाः परिबन्धयेत् ३०
कर्णिकायां तु तां पूर्णां पूर्वाग्रां विन्यसेत्सुधीः
तां तां पिधाय तेनैव वस्त्रेरा सुसितेन च ३१
पूर्वभागे न्यसेत्कुम्भं रम्यं बिम्बफलप्रभम्
षोडश प्रस्थसंपूर्णं सितसूत्रविचित्रितम् ३२
गन्धतोयसमापूर्णं सकूर्चं वस्त्रवेष्टितम्
पञ्चरत्नं जले क्षिप्त्वा पिधानमथ पल्लवम् ३३
आधारशक्तिं तस्यां तु ध्यात्वा देवीं ततो न्यसेत्
त्रिरोत्रां चतुर्भुजां शुभ्रां जटामकुटमरिडताम् ३४
शुक्लाभररगहृद्याङ्गीं शुक्लगन्धानुलेपनाम्
दुकूलवसनां रम्यां गन्धाद्यैरर्चयेत्सुधीः ३५

दलेष्वष्टसु चान्यांश्च पूर्वादिषु यथाक्रमम्
तदर्धपरिमाणांस्तु कलशांस्तादृशानपि ३६
विन्यस्य तेषु दिक्पालान्यथास्थानं समर्चयेत्
दिक्पालानां सशक्तीनां हविः सम्यक्पृथक्पृथक् ३७
दत्त्वा होमं समन्विच्छेद्यथास्थानं गुरूत्तमः
होतारः साधकास्ते स्युरभावात् पुत्रकास्तथा ३८
सद्यादिभिश्चतुर्दिक्षु यथाभागं तु होमयेत्
ऐशान्यामीशमन्त्रेण समिद्धोमं प्रकल्पयेत् ३९
आज्यं तन्मूलमन्त्रेण चरुहोमं हृदा तथा
लाजांश्च शिरसा हुत्वा यवांश्च शिखया ततः ४०
सर्वात्मना तिलान्हुत्वा पूर्णां प्रासादतो हुनेत्
द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं तु तां स्पृशेत् ४१
तत्तन्मन्त्रैस्तु होतारः स्पृशेयुस्तदनन्तरम्
तत्कालेऽध्ययनं कुर्याच्चतुर्वेदैश्चतुर्दिशि ४२
ऐशान्यां प्राङ्मुखासीनो जपेदस्त्रं तु साधकः
एकहोमविधाने तु विशेषोऽयं प्रदृश्यते ४३
समिद्धोमः शिवेन स्यात्संख्याष्टशतमुच्यते
पञ्चहोमे तदर्धं वा पादं वाथ च होमयेत् ४४
एवं रात्रौ सुधीः कृत्वा देशिकः प्रातरुत्थितः
कृत्वा नित्यक्रियाः सर्वाः कृत्वा मन्त्रतनुं निजाम् ४५
आधारशक्तिं तस्यां तु पूर्णायां कुम्भतो न्यसेत्
ततोऽवटं समासाद्य देशे तत्स्थापनोचिते ४६
प्रागग्रमुदगग्रं च कृत्वा रेखाचतुष्टयम्
पदे च नवके तत्र परितोऽष्टपदान्यपि ४७

पदानि कुर्याच्चत्वारि तत्क्रमश्चाभिधीयते
ईशानशक्रगे कृत्वा पदमेकं तथा पुनः ४८
वह्निकीनाशगे कृत्वा रक्षोवरुणगे अपि
वायुसोमगते तद्वत् स्थापनार्थं विचक्षणः ४९
सुमुहूर्ते सुलग्ने तु नक्षत्रकरणान्विते
नन्दाद्याश्च चतस्रश्च यजमानादिभिः क्रमात् ५०
उद्धारयित्वा मन्त्रज्ञः सर्वातोद्यसमायुतम्
प्रदक्षिणक्रमेणैवावटे समवतार्य च ५१
उपविश्य गुरुः पूर्वं दक्षिणेनोपविश्य च
पश्चिमे प्राङ्मुखस्यात्र शिल्पिनश्च ततस्तदा ५२
हस्ते नन्दां गुरुर्दत्त्वा स्पृशंस्तेन निधापयेत्
उत्तराग्रा भवेत्पूर्वा पूर्वाग्रा दक्षिणा भवेत् ५३
पश्चिमा चोत्तराग्रा स्यात्पूर्वाग्रा चोत्तरा तथा
एवं कृतेऽग्रमग्रं च मूलं मूलं च संयुतम् ५४
भवेदीशनिर्ऋत्योश्च मूलाग्रौ वह्निवायुगौ
तासां मध्येऽवटे तोयमावर्त्य कुसुमान्वितम् ५५
तस्यावर्तं समीक्ष्यादौ देशिकः शिल्पिना सह
शुभं वदेत्तदा प्राज्ञ आवर्तमथ सव्यकम् ५६
वामावर्तं विनिन्द्यं स्यात्तद्दोषविनिवृत्तये
पश्चाद्धोमः प्रकर्तव्यः समाप्तौ शान्तिसंज्ञितः ५७
मध्यावटे ततो धीमान्रत्नानि नव विन्यसेत्
ततो लोहानि धातूंश्च बीजानि क्रमशस्तथा ५८
पूरयेच्चूर्णपिष्टेन मृदा वाप्यवटं ततः
ततः पूर्णां ततोद्धृत्य पञ्चमामधिवासिताम् ५९

तासामुपरि विन्यस्य तस्या मन्त्रमनुस्मरन्
शक्तिकुम्भं ततस्तत्र समानीय विचक्षणः ६०
कूर्चाम्भसा तु संप्रोक्ष्य तथान्यैः कलशैस्तदा
यथास्थानं तदम्भोभिस्तत्तन्मन्त्रमनुस्मरन् ६१
प्रोक्षयित्वा ततस्तत्र प्रासादं परिकल्पयेत् ६२

इत्यजिताख्ये महातन्त्रे क्रियापादे आद्येष्टकाविधिर्नाम दशमः पटलः

## एकादशः पटलः

## उपपीठविधिः

प्रासादमण्टपादीनामुन्नतार्थं विशेषतः
शोभार्थं च समुद्दिष्टमुपपीठमतः शृणु १
द्विगुणं तदधिष्ठानात्पादोनद्विगुणं तु वा
पञ्चांशं त्र्यंशकं वाथ भवेदर्धाधिकं तु वा २
पादाधिकं समं वाथ त्रिपादं वापि कारयेत्
कृत्वोत्सेधं दशांशं चाप्येकद्वित्रिभिरंशकैः ३
अधिष्ठानसमं बाह्ये निर्गमं त्रिविधं स्मृतम्
त्रिद्व्येकदण्डमानं वा निर्गमं तत्त्रिधा भवेत् ४
उत्सेधे द्वादशांशे तु द्वाभ्यां पादुकमुच्यते
तदूर्ध्वे पद्ममंशेन क्षेपणं चार्धभागतः ५
गलं भूतांशकं ज्ञेयं कम्पमर्धांशसंमितम्
अंशेन पद्ममूर्ध्वं स्याद्वाजनं चांशकेन तु ६
कम्पमंशेन कर्तव्यमेवमष्टाङ्गसंमितम्
अथवा तत्समुत्सेधे त्रिसप्तांशसमन्विते ७

नेत्रांशं तदुपानं स्याद्गुणांशं पद्ममुच्यते
व्योमांशं कन्धरं प्रोक्तं द्वाभ्यां वाजनमेव हि ८
एकेन कम्पमष्टांशैः कर्णं तत्र प्रकल्पयेत्
अंशेन कम्पमंशाभ्यां वाजनं कम्पमंशतः ९
कृत्वा षोडशधोदयं द्वयमितंकुर्यादुपानं ततस्तन्मानं कमलं च
कम्पमथ तत्रैकेन कर्णं ततः
भूतांशैरथ कम्पमेकमुपरि द्वाभ्यां च पद्मं ततो द्वाभ्यामेव हि पट्टिकां
तदुपरि व्योमांशकं कम्पकम् १०
कृत्वा सम्यगथोपपीठ उदयं चैकोनविंशांशकं द्वाभ्यां
पादुकमम्बुजद्वयमितं कम्पं शिवांशं भवेत्
वस्वंशं गलमेकभागमथ तत्कम्पं च द्विद्व्यंशकं पद्मं पट्टिकया
भवेदुपरितः कम्पं खभागान्वितम् ११
कृत्वा वा मनुभागमम्बुजमिदं तत्पादुकं पङ्कजं व्योमांशं त्वथ
कम्पमर्धमथ षड्भागैर्गलं कम्पकम्
अर्धं पुष्करभागमम्बुजमतो द्वाभ्यां भवेत्पट्टिका कम्पं चोपरि तस्य
भागसहितं तत्रोपपीठं भवेत् १२
कण्ठे भूतगजव्यालसिंहयुक्तं यथा भवेत्
तथा कुर्वीत मतिमान्पादयुक्तमथापि वा १३
उपपीठं समाख्यातं सर्वधाम्नां समासतः १४

इत्यजिताख्ये महातन्त्रे क्रियापादे उपपीठविधिर्नाम एकादशः पटलः

## द्वादशः पटलः

## प्रासादलक्षणविधिः

अतः परमिदं वक्ष्ये प्रासादानां तु लक्षणम्
हस्तेन संमितः प्रोक्तः प्रासादः स्याज्जनार्दन १
तस्माद्धस्तप्रमाणोऽयमुच्यतेऽत्र पुरा मया
जालादिविवराविष्टे सति घर्मांशुतेजसि २
अणुरूपेण तत्रैव दृश्यते यद्रजो नरैः
तदणुर्नामतः प्रोक्तो रजो नाम तदष्टकम् ३
तदष्टकं तु वालाग्रं लीक्षाख्यं तु तदष्टकम्
तदष्टकं तु यूकाख्यं यवो यूकाष्टको भवेत् ४
अङ्गुलं चाष्टभिस्तैस्तु तन्मानाङ्गुलमुच्यते
सप्तभिः षड्भिरप्युक्तं यवैरत्रोक्तमङ्गुलम् ५
एवं त्रिविधमुद्दिष्टं मानाङ्गुलमतः परम्
अनेन हस्तमानं च क्रमेण परिपठ्यते ६
चतुर्विंशैस्तु तैः प्रोक्तः किष्कुहस्तः सुनिश्चितः
प्राजापत्य इति प्रोक्तः पञ्चविंशाङ्गुलैस्ततः ७
षड्विंशैस्तु धनुर्मुष्टिः सप्तविंशैर्धनुर्ग्रहः
शिबिकासनादिकं सर्वं किष्कुमानेन कारयेत् ८
प्रासादमण्टपादीनि प्राजापत्येन कारयेत्
राजवेश्मपुरादीनि तटाकदीर्घिकादिकम् ९
धनुर्मुष्टिकरेणैव नद्यध्वादीन्यतः परम्
धनुर्ग्रहकरेणैव करभेदः प्रकीर्तितः १०
यागोपकरणं सर्वमेव मात्राङ्गुलेन तु
मात्राङ्गुलं च विविधं तस्य लक्षणमुच्यते ११
आचार्यदक्षिणे हस्ते मध्यमाङ्गुलिमध्यतः
यत्पर्व तस्य दैर्घ्येण विस्तारेणापि संमितम् १२

प्रतिमायाः समुत्सेधे तालगरायेन भाजिते
यदङ्गुलं भवेत्तत्तु देहलब्धाङ्गुलं भवेत् १३
प्रतिमायास्तु निर्माणे विनियोगस्तु दृश्यते
एवमङ्गुलभेदश्च करभेदश्च दर्शितः १४
प्रासादस्त्रिविधः प्रोक्तः कन्यसो मध्यमस्तथा
उत्तमश्चापि तद्भेद इदानीं वक्ष्यते मया १५
त्रिकरान्नवहस्तान्तं चतुर्हस्ताद्दशान्तकम्
ओजोयुग्मकरैः कुर्याद्धाम्नामवरमष्टकम् १६
रुद्रहस्तं समारभ्य यावदेकोनविंशकम्
रविहस्तं समारभ्य विंशद्धस्तान्तमेव च १७
ओजोयुग्मकरैर्धाम्नां दशकं मध्यमं स्मृतम्
एकविंशत्समारभ्य चैकोनत्रिंशकान्तकम् १८
द्वाविंशत्करमारभ्य ततस्त्रिंशत्करान्तकम्
ओजो युग्मकरैः श्रेष्ठं दशकं परिकीर्तितम् १९
त्रिकरात्त्रिंशद्धस्तान्तमोजोयुग्मकरैः क्रमात्
देवानामालयः प्रोक्तश्चाष्टाविंशतिसंख्यया २०
तत्तद्विद्वस्तारमानेन गर्भगेहं प्रकल्पयेत्
प्राङ्मुखैः पञ्चभिः सूत्रैस्तथैवोदङ्मुखैरपि २१
प्रासादस्य तु विस्तारे विकारांशसमन्विते
मध्ये युगपदं गर्भं शेषं भित्त्यर्थमुच्यते २२
षड्भिः षड्भिस्ततः सूत्रैः प्राङ्मुखोदङ्मुखैरपि
पञ्चविंशत्पदं कृत्वा मध्ये गर्भं नवांशकम् २३
प्राङ्मुखैर्वसुभिः सूत्रैस्तथैवोदङ्मुखैरपि
सप्तसप्तपदं कृत्वा तन्मध्ये तु नवांशकैः २४

परितोऽर्धपदाः सप्त गर्भं भित्तिस्तु शेषकैः
यदि पूर्वं स्थितं लिङ्गं तन्मानाद्गर्भमुच्यते २५
त्रिगुणं लिङ्गतारस्य पीठतारं विधीयते
पीठत्रिगुणितं गर्भं भित्तिः पीठसमा भवेत् २६
अथवा धामगर्भं तु भवेत्पीठचतुर्गुणम्
गर्भार्धमानतो भित्तिर्भवेद्धाम्नः समन्ततः २७
अग्रतो मण्टपं कुर्यात्प्रासादसममानतः
अथवा तत्प्रमाणे तु विकारांशविभाजिते २८
अर्धादिकैकवृद्ध्या तु मण्टपो नवधा भवेत्
मण्टपेषु नवस्वेषु चैकमिष्टं प्रकल्पयेत् २९
मण्टपेषु च सर्वेषु चतुस्त्रिद्व्येकदण्डकैः
कारयेदन्तरालं वा मध्ये मण्टपसद्मनोः ३०
समं स्यादुभयोस्तारं धाममण्टपयोरपि
चतुःपञ्चांशकं वापि धाम्नो मण्टपविस्तरम् ३१
पार्श्वयोः पृष्ठतो वापि प्रासादानां विशेषतः
तत्त्रिभागैकभागेन पञ्चांशद्व्यंशकेन वा ३२
मध्ये भद्रं प्रयुञ्जीत सार्धदण्डप्रमाणतः
दण्डप्रमाणतो वापि भद्रं शोभार्थमुच्यते ३३
भद्रं विनापि कर्तव्यः प्रासादो लक्षणान्वितः
अधमानां विमानानामष्टानां च समुन्नतिम् ३४
विस्तारद्विगुणं कुर्यान्मध्यानामुन्नतिं ततः
दशानामपि विस्तारे सप्तांशेन विभाजिते ३५
द्वादशांशेन कुर्वीत ततश्च श्रेष्ठसद्मनाम्
दशानां तु समुत्सेधं विस्तारे मुनिभाजिते ३६

रुद्रभागेन कुर्वीत द्वारोत्सेधमथोच्यते
प्रतेरुत्तरसीमान्तं द्वारोत्सेधं विधीयते ३७
अथवाप्युच्छ्रये पङ्क्तिनन्दवस्वंशभाजिते
एकभागविविक्तं वा तद्विस्तारमथोच्यते ३८
उत्सेधार्धेन विस्तीर्णमुत्तमं द्वारमुच्यते
तत्तारे तु दशांशैकहीनं मध्यममुच्यते ३९
अधमं द्व्यंशहीनं स्यादथवान्य प्रकारतः
प्रासादगर्भवेदांशाद् द्वारविस्तारमुच्यते ४०
द्विगुणं चोच्छ्रयं तस्य तच्छाखागतविस्तरम्
द्वारोत्सेधचतुर्भागबाहुल्यं तत्तुरीयतः ४१
शाखोदुम्बरदेहल्यः समाः सर्वाश्च सर्वशः
विचित्रपत्रवल्लीभिर्युताः स्युस्तदुदुम्बरे ४२
श्रियं सरस्वतीं चैव विघ्नेशं चापि कारयेत्
शाखयोर्निधिपालौ च शङ्खपद्मयुतौ तथा ४३
प्रतिच्छेदविधानेन द्वारं चैव प्रकल्पयेत्
आद्यं स्यात्तदधिष्ठानं द्वितीयं पादमुच्यते ४४
प्रस्तरं तु तृतीयं स्याच्चतुर्थं ग्रीवमुच्यते
पञ्चमं शिखरं षष्ठं स्तूपिरित्यभिधीयते ४५
एवं षड्वर्ग उद्दिष्टस्तलभेदमथ शृणु
त्रिचतुःपञ्चषट्सप्तवसुनन्ददशैः करैः ४६
विमानं कल्पितं योग्यं भवेदेकतलस्य तु
पञ्चषट्सप्तभिर्हस्तैर्वसुनन्ददशैः करैः ४७
कल्पितं धाम योग्यं स्याद् द्वितलस्य जनार्दन
सप्ताष्टनवहस्तैश्च दशैकादशहस्तकैः ४८

द्वादशैश्च कृतं धाम त्रितलस्य प्रकीर्तितम्
नन्दांशरुद्रसूर्यैश्च त्रयोदशचतुर्दशैः ४९
कृतं चतुस्तले योग्यं रुद्रसूर्यत्रयोदशैः
मनुपञ्चदशैश्चैव षोडशैर्धामहस्तकैः ५०
कृतं पञ्चतले योग्यं त्रयोदशचतुर्दशैः
तिथिषोडशहस्तैश्च तथा सप्तदशैरपि ५१
अष्टादशकरैश्चापि धाम स्यात् षट्तले कृतम्
तिथिषोडशहस्तैश्च तथा सप्तदशैरपि ५२
अष्टादशकरैस्तद्वत्करैरेकोनविंशकैः
विंशैश्चैव कृतं सप्ततले योग्यं भवेदथ ५३
करैः सप्तदशैरष्टादशैरेकोनविंशकैः
विंशकैरेकविंशैश्च द्वाविंशैरष्टभूमिके ५४
एकोनविंशकैर्विंशैरेकविंशकरैस्तथा
द्वाविंशैश्च त्रयोविंशैश्चतुर्विंशैः कृतं तु यत् ५५
योग्यं नवतले धाम्नि ततश्चाप्येकविंशकैः
द्वाविंशैश्च त्रयोविंशैश्चतुर्विंशैः करैरपि ५६
पञ्चविंशैश्च षड्विंशैः कृतं दशतले भवेत्
त्रयोविंशैश्चतुर्विंशैः पञ्चविंशैः करैरपि ५७
षड्विंशैः सप्तविंशैश्च तथा चैवाष्टविंशकैः
कृतं धाम भवेद्योग्यमेकादशतलस्य तु ५८
पञ्चविंशैश्च षड्विंशैः सप्तविंशैः करैस्तथा
अष्टाविंशैस्तथा चैव करैरेकोनत्रिंशकैः ५९
त्रिंशैश्चापि कृतं धाम योग्यं स्याद्द्वादशे तले
एवं हस्तैः क्रमाद्धामतलं निश्चित्य कारयेत् ६०

एकभूमिविधानस्य त्वधिष्ठानादिरुच्यते
उत्सेधे वसुभागेऽत्राधिष्ठानं व्योमभागतः ६१
नेत्रभागे भवेत्पादं प्रस्तरं चैकभागतः
कराठमेकेन कर्तव्यं द्वाभ्यां तु शिखरं भवेत् ६२
स्तूपिरेकेन कर्तव्या ह्यथवात्र नवांशके
सार्धभागैकभागेन मसूरं द्विगुणं ततः ६३
पादतुङ्गं ततश्चापि प्रस्तरं स्यान्मसूरवत्
ग्रीवमेकांशसंयुक्तं शिखरं स्याद् द्वियंशकम् ६४
स्तूपिरेकांशकोच्छ्रेया इति षड्वर्गजो विधिः
नामभेदमलङ्कारं धाम्नां वद्त्यामि तच्छृणु ६५
प्रासादस्त्रिविधः प्रोक्तस्त्रैविध्यमपि कथ्यते
नागरं द्राविडं चैव वेसरं चेति नामतः ६६
भौमादिस्तूपिपर्यन्तं नागरं चतुरश्रकम्
कराठात्प्रभृति चाष्टाश्रं द्राविडं परिकीर्तितम् ६७
कराठात्प्रभृति वृत्तं यद्वेसरं धाम कथ्यते
सभद्रं सविशालं स्यात्कर्णकूटसमन्वितम् ६८
अष्टाश्रवेदिकायुक्तमष्टपञ्जरसंयुतम्
सौभद्रं भोगदं प्रोक्तं धाम सर्वसुरोचितम् ६९
चतुरश्रायतं चैव स्तूपित्रयसमन्वितम्
पञ्जरादिविहीनं यत्स्वस्तिबन्धनमुच्यते ७०
आयताश्रं विना प्रोक्तं लद्दाणेन समन्वितम्
आश्रमाश्रशिरोग्रिवं वृत्तवेदिकया युतम् ७१
महानासिकया युक्तं सर्वतोमुखमुच्यते
उक्तालङ्कारसंयुक्तमायतं वृत्तमेव च ७२

कर्णकूटविहीनं च वृत्तायतगलं तथा
द्व्यश्रवृत्तमहानास्यामग्रे ललाटसंयुतम्  ७३
पार्श्वयोः पृष्ठतश्चापि क्षुद्रनासिकया युतम्
हस्तिपृष्ठविधानं यत्सार्वकामिकमुच्यते  ७४
एवं प्रासाद उद्दिष्टः समासेन जनार्दन  ७५

इत्यजिताख्ये महातन्त्रे क्रियापादे प्रासादलक्षणविधिर्नाम
द्वादशः पटलः

## त्रयोदशः पटलः
## अधिष्ठानविधिः

अधिष्ठानमथो वक्ष्ये शृणु तल्लक्षणं हरे
उपाननिर्गमं पादाद् द्विदण्डेन समन्ततः  १
पादाधिकेन वा कुर्यादथवार्धाधिकेन च
अष्टाविंशतिभागिके तदुदये द्वाभ्यामुपानं तथा
पादं क्षुद्रमुपानमेकमुपरिष्टात्षड्भिरेकाम्बुजम्  ।
एकं कण्ठमथाब्जमेकमथ च त्र्यंशं भवेत्कैरवं
पद्मं चैकमधोर्ध्वतश्च खमितं कम्पं तु कण्ठं त्रिभिः  २
तस्योर्ध्वेऽथ च कम्पमेकमथ तत्पद्मं च तद्वद्भवेत्
तस्योर्ध्वेऽपि च पट्टिका त्रिभिरतः कम्पं तु भागान्वितम्
एवं यद्रचितं मसूरकमिदं प्रोक्तैस्तु भागैः क्रमाद्
अस्वप्नालययोग्यमित्यभिहितं तत्पादबन्धाह्वयम्  ३
गायत्र्यंशमितेऽष्टभिर्वसुमती सप्तांशकैः कैरवं
कम्पं चैकमथो गलं त्रिभिरथो कम्पं पुनः खांशभाक्
तस्योर्ध्वे त्रिभिरंशकैः परिमितां कुर्यान्महापट्टिकाम्

एकांशेन ततश्च कम्पमपरं स्यात्पादबन्धाह्वयम् ४
अष्टाविंशांशकेऽस्मिन्नयनपरिमितं पादुकं स्याद् द्विरब्जं
क्षुद्रोपानः खभागं जगतिवसुमती सप्तभिः कैरवं च
अष्टाश्रं तद्वदूर्ध्वे सुरपथमिदमालिङ्गमग्न्यंशमूर्ध्वे
कण्ठं चैकेन कम्पं जलजमपि तथा पट्टिकाग्न्यंशयुक्ता ५
एकत्रिंशांशकेऽस्मिन्द्वितयपरिमितं पादुकं चापि पद्मं
क्षुद्रोपानं तदंशं शरमितमवनिः पद्ममेकं दृगेकम्
पद्मं तद्वत्सुवृत्तं कुमुदमनलभागेन पद्मं तथैकं
व्योमांशं कम्पमूर्ध्वे गलमनलमितं कम्पमेकं च कुर्यात् ६
तस्योर्ध्वे पादमेकं त्रिभिरथ च कपोतं तु नासीयुतं तद्
भागेनालिङ्गमूर्ध्वेऽन्तरितमपि तथा व्यालयुक्तं प्रतिश्च
द्वाभ्यामेकेन सर्वोपरि भवति ततो वाजनं भागयुक्तं
नाम्ना कापोतबन्धं भवति पुनरिदं देवधाम्नां प्रयोज्यम् ७
अष्टांशं जगती तथैव कुमुदं स्यादेकविंशांशके
त्वालिङ्गान्तरितावुभौ निगदितावेकैकभागान्वितौ
द्वाभ्यां तु प्रतिरेकभागमथ तत्कम्पं तु नाम्ना भवेद्
एतद्वै प्रतिबन्धमुक्तमखिले स्वर्गौकसामालये ८
तिथ्यंशेऽथ मसूरके शरमिता धात्री तथा कैरवं
चालिङ्गं गगनांशमन्तरितकं तद्वद्धवेदूर्ध्वतः
द्वाभ्यां स्यात्प्रतिरूर्ध्वतोंऽशरचितं तद्वाजनं कल्पयेद्
एतद्भूसुरदेवभूपतिविशां वासेषु योग्यं भवेत् ९
विंशांशेऽथ मसूरके नयनदृग्व्योमांशभूतांशकै-
र्वेदैकैकगुणाम्बरैः क्रमवशादंशैरधःपादुकम्
पद्मं क्षुद्रमुपानकं वसुमतीं कुर्यात्ततः कैरवं

चालिङ्गान्तरितौ प्रतिं तदुपरि प्रोक्तं हि तद्वाजनम्  १०
अष्टादशांशके तस्मिन्द्वाभ्यां पादुकमुच्यते
पञ्चभिः पद्ममुद्दिष्टं कण्ठमेकेन कारयेत्  ११
एकभागादधःपद्मं कुमुदं त्रिभिरुच्यते
ऊर्ध्वपद्मं तथैकेनालिङ्गमेकेन कारयेत्  १२
एकेनान्तरितं तत्र द्वाभ्यां प्रतिरुदाहृतम्
पद्मं वाजनमेकेन पद्मबन्धमिदं भवेत्  १३
कैरवान्तं गलान्तं वा पट्टिकान्तं भवेत्स्थलम्
उपपीठेऽथवा कुर्यात्स्थलं तद्दक्षिणोन्नतम्  १४
जलनिर्गमनच्छिद्रं प्रासादस्योत्तरे भवेत्
ऐशान्यां वा दिशीनान्ये मध्ये वा स्थलसंश्रितम्  १५
तदर्धं नालशैलं स्यात्तस्य लक्षणमुच्यते
प्रासादभित्तिविष्कम्भमानोपरि तदायतम्  १६
पादविष्कम्भमानेन त्रिगुणं पादोनमेव वा
चतुरश्रं समं तत्स्यात्पादविष्कम्भविस्तृतम्  १७
तद्विस्तारत्र्यंशकेन मध्ये कृत्वा जलायनम्
तद्वत्खातं क्रमान्मूलात् कृशताष्टांशवर्जनात्  १८
अग्रे गजाधरोष्ठांशं किंचिद्विनमितं स्थलात्
भित्त्यन्तं स्थलं प्रतिष्ठाप्य नालमूर्ध्वं तु कारयेत्  १९
एवं कृत्वा मसूरं तदूर्ध्वे चाङ्घ्रिं प्रकल्पयेत्  २०
इत्यजिताख्ये महातन्त्रे क्रियापादे अधिष्ठानविधिर्नाम त्रयोदशः पटलः

## चतुर्दशः पटलः

## पादादिलक्षणम्

पादादीनामथाङ्गानां पञ्चानामाकृतिः क्रमात्
आकृत्या नामभेदश्च पादानां वक्ष्यतेऽधुना १
मसूरोर्ध्वेऽङ्घ्रिमूले तु वेदिकां वा प्रकल्पयेत्
तन्मानं तु द्विदण्डं स्यान्नवभागविभाजिते २
पादमूलेंऽशतः कुर्यात्कम्पं वेदांशकैर्गलम्
तदूर्ध्वे पट्टमेकं स्याद् द्व्यंशेनोपरि वेदिका ३
तदूर्ध्वे पट्टिकांशा स्यात्तदूर्ध्वेऽङ्घ्रिं प्रकल्पयेत्
चतुरश्रास्तथाष्टाश्रा वृत्तास्ते त्रिविधाः स्मृताः ४
सकुम्भाश्च विकुम्भाश्च कुम्भमण्डयुतास्तथा
प्रोक्ताः पादाः समासेन तद्विधानमथोच्यते ५
तस्योत्सेधं तु सप्ताष्टनवभागविभाजिते
एकभागं भवेत्तत्र दारुपादस्य विस्तृतम् ६
भित्तिपादगतं तारं वक्ष्यामि क्रमशोऽधुना
त्रिहस्तभवनस्तम्भो भवेत्त्र्यङ्गुलविस्तृतः ७
उपर्युपरि धाम्नां तु पादविस्तारवर्धनम्
अङ्गुलेन भवेद्धाम्नां त्र्यंशं करमितादिह ८
उपर्युपरि पादानामाद्वादशतलादपि
मूलपादाद्भवेद्ध्रासो द्व्यङ्गुलद्व्यङ्गुलक्रमात् ९
अथवान्यप्रकारेण वक्ष्यते पादविस्तरम्
चतुर्विंशतिभागं तु कृत्वा प्रासादविस्तरम् १०
पञ्चविंशतिभागं वा षड्विंशांशमथापि वा
तेषु चैकांशमुद्दिष्टं त्रिविधं पादविस्तृतम् ११

पादविस्तारमानेऽथ वसुभागविभाजिते
एकभागविहीनं स्यात्तत्तत्पादस्य विस्तरम्  १२
तद्दराडमिति निर्दिष्टं तेन भागं प्रकल्पयेत्
विस्तारस्य त्रिभागैकं चतुर्भागैकमेव वा  १३
स्तम्भानां निर्गमः प्रोक्तः पादानां नाम कथ्यते
ब्रह्मकान्तो विष्णुकान्तो रुद्रकान्त इति त्रयः  १४
पादाः स्युर्नामतस्तेषामाकृतिस्तु निगद्यते
स्तम्भायामः समस्तस्तु चतुरश्रः सलक्षणः  १५
त्र्यंशाद्धवेदिह स्तम्भो ब्रह्मकान्ताभिधानतः
मूले तत्करठमानेन कृत्वा च चतुरश्रकम्  १६
पादाधिकं वाप्यध्यर्धं पादोनद्विगुणं तु वा
द्विगुणं वा तदूर्ध्वे तु वृत्तमष्टाश्रमेव वा  १७
कृत्वोर्ध्वे कुम्भमराडीभ्यां युक्तः स्याद्विष्णुकान्तकः
पूर्ववच्चतुरश्रं तत्कृत्वोर्ध्वे षोडशाश्रकम्  १८
तदूर्ध्वे कुम्भमराडीभ्यां संयुक्तो रुद्रकान्तकः
मूले दराडप्रमाणेन कृत्वा तु चतुरश्रकम्  १९
तस्याधः पादतः पादं तस्योर्ध्वे षोडशाश्रकम्
तदूर्ध्वे कुम्भमराडीभ्यां युक्तः सौम्य उदाहृतः  २०
मूलप्रभृति वस्वश्रः केवलं कुम्भसंयुतः
वासन्तिक इति प्रोक्तस्त्वश्राकारः सुवृत्तकः  २१
केवलं कलशोपेतो वृत्तकान्त इति स्मृतः
मूलेऽस्य वा सवर्णेन चतुरश्रस्ततः परम्  २२
वृत्तः कलशसंयुक्तः पूर्वाग्रस्तम्भ उच्यते
सार्धेन समपादेन दराडमानेन वाग्रतः  २३

चतुरश्रस्तथा स्तम्भस्तदधो दण्डमानतः
षोडशाश्रं भवेत्तत्र पद्मं मूलाग्रयोरपि  २४
पञ्चभागैकभागेन तस्याधश्चतुरश्रकम्
दण्डमानेन कृत्वाथ पूर्ववत्षोडशाश्रकम्  २५
शेषं वेदाश्रमेवोक्तं एवंभूताकृतिस्तु यः
स्तम्भः स चित्रखण्डाख्यः वज्रखण्डं ततः शृणु  २६
स एव मध्यवस्वश्रो वेदाश्रो वज्रखण्डकः
स्तम्भोर्ध्वे तु द्विदण्डेन चतुरश्रीकृते ततः  २७
तन्मानात्तदधः कुर्याद्विदाश्रं नवधा भवेत्
वेदाश्रं सर्वमायामं रम्यखण्डः स नामतः  २८
स्तम्भायामसमस्ते तु पञ्चभागविभाजिते
तन्मूले चतुरश्रं तु द्विभागेन प्रकल्पयेत्  २९
शेषांशे कलशोपेतः स्तम्भः स्याच्चारुखण्डकः
मूले द्विदण्डमात्रेण पद्मासनसमन्वितः  ३०
वृत्तं वा चतुरश्रं वा कुम्भमण्डिसमन्वितः
स्कन्दकान्ताख्यपादः स्याद् अष्टाश्रं वृत्तमेव वा  ३१
पादायामत्रिभागेन मूले सिंहसमायुतः
सिंहपाद इति प्रोक्तः कुम्भानां लक्षणं शृणु  ३२
अध्यर्धमानपादेन पादोनद्विगुणं तु वा
द्विगुणेनाथवा पादकुम्भोत्सेधं विधीयते  ३३
आप्तोत्सेधे नवांशे तु व्योमांशेन दृगुन्नतिम्
कुम्भोन्नतं चतुर्भिः स्यात् कुण्ठमेकेन कारयेत्  ३४
आस्यमेकेन कर्तव्यं पद्ममेकं ततो भवेत्
अंशेन वृत्तग्रीवा च दृक्कर्णौ पादविस्तरौ  ३५

हीनौ तौ पादमूलेन तुल्यविस्तारतः स्मृतौ
द्विगुणं कुम्भविस्तारमध्यर्धं वक्त्रविस्तरम् ३६
चतुर्दण्डं त्रिदण्डं वा मण्डिविस्तारमुच्यते
तस्योत्सेधं त्रिपादं स्यात्तत्त्रियंशैर्विभाजयेत् ३७
तस्योत्सेधकमंशेन तत्र वेत्रं तदंशकम्
मण्डिकां चांशतः कुर्यान्मूलाधारं तु पादवत् ३८
त्रिधा नागदलाभं वा वीरकान्तं तदूर्ध्वतः
चतुरंशं दण्डविस्तीर्णं त्रिपादेनोच्छ्रितं भवेत् ३९
हीने तत्तत्र दण्डेन स्कन्धोर्ध्वं चोर्ध्वतोऽम्बुजम्
मूलस्तम्भस्य चाधस्ताद्दण्डेनायतविस्तरम् ४०
श्रीकरं वृत्तपादानां सर्वेषां च विधीयते
षोडशाश्रं तदश्राणां चन्द्रकान्तमिति स्मृतम् ४१
अष्टाश्रं चतुरश्राणां सौमुख्यमिति कीर्तितम्
अतिभारेषु स्तम्भेषु प्रियदर्शनमेव हि ४२
पोतिका दण्डविस्तारा विस्तारसममुच्छ्रिता
पञ्चदण्डायता श्रेष्ठा सर्वाङ्गस्तम्भसंयुता ४३
चतुर्दण्डायता चैव त्रिपादोत्सेधसंयुता
मध्यमेति समुद्दिष्टा कुम्भस्तम्भेषु योजिता ४४
त्रिदण्डायतसंयुक्ता दण्डार्धोच्चसमन्विता
कुम्भमण्डीविहीनेषु योजनीया विशेषतः ४५
समं त्रिपादमर्धं वा कर्करीकण्ठनिर्गतिः
विस्तारस्य चतुर्भागे तरङ्गं परिकल्पयेत् ४६
गृहीतोच्चत्रिभागेन तदूर्ध्वे पट्टिका भवेत्
पादवर्गः समुद्दिष्टः प्रस्तरं चाधुनोच्यते ४७

प्रस्तरं चोत्तरादि स्यात्तद्विष्कम्भं तु पादवत्
उत्सेधं त्रिविधं प्रोक्तमुत्तमं तु समं भवेत् ४८
त्रिपादं मध्यमं प्रोक्तमधमं चार्धमुच्यते
स्तम्भाग्रस्याग्निभागैकं वेदभागैकमेव वा ४९
चतुरश्रं समं चैव वाजनं चोत्तरोपरि
तदूर्ध्वे दराडमानेन भूतमालां प्रकल्पयेत् ५०
निर्गमं च तथा प्रोक्तं तदूर्ध्वे पट्टिका भवेत्
तां च वाजनवत्कुर्यात्तस्योर्ध्वे स्यात्कपोतकम् ५१
तद् द्विदराडप्रमाणेन त्रिदराडेनाथवा भवेत्
तत्समं निर्गमं प्रोक्तं लम्बनं चार्धदराडतः ५२
शेषे तु शरभागेन भाजितांशेन पट्टिका
एकेन कराठमाख्यातं द्वाभ्यां प्रस्तरमेव हि ५३
तदूर्ध्वे पट्टिकां कुर्यादेकांशेन विचक्षणः
कपोत नासिकायुक्तं तत्तारस्यार्धदराडतः ५४
द्विदराडे नवकोणेषु पत्रवल्लीसमायुतम्
एवं प्रस्तरमाख्यातं देवधाम्नां विशेषतः ५५
अथवान्यप्रकारेण प्रस्तरं तेषु कल्पयेत्
उत्सेधे तत्र विंशांशे भवेदग्न्यंशमुत्तरम् ५६
व्योमांशं वाजनं प्रोक्तं त्रियंशं स्याद्वसन्तकम्
ऊर्ध्ववाजनमंशेन कपोतं सप्तभिर्भवेत् ५७
आलिङ्गमेकभागेन भवेदन्तरितं तथा
अंशाभ्यां तु प्रतिं कुर्याद्व्योमांशं वाजनं ततः ५८
एवं वा तत्प्रकर्तव्यं तोरणं वक्ष्यतेऽधुना
पार्श्वयोः पृष्ठतश्चापि पङ्क्तिमध्येषु वा ततः ५९

प्रतेरुत्तरसीमान्तं तोरणोच्छ्रयमुच्यते
तद्विस्तारं तदर्धं स्यादायामे पञ्चभाजिते ६०
मकरं तु त्रियंशेन शेषं पादं प्रकल्पयेत्
पादान्तरार्धविस्तारं तोरणस्य प्रकल्पयेत् ६१
सर्वलक्षणसंयुक्तं सर्वालंकारसंयुतम्
कारयेत्तोरणं धीमांस्तेषु देवान् प्रकल्पयेत् ६२
ब्रह्मविष्णुसमायुक्तं पृष्ठे लिङ्गस्थमीश्वरम्
विष्णुं वा तत्र कुर्वीत शुभं वा पश्चिमानने ६३
दक्षिणे दक्षिणामूर्तिं ब्रह्माणं च तदुत्तरे
एवं तोरणमुद्दिष्टं गलं स्यात्प्रस्तरोपरि ६४
तन्मूले वेदिकां कुर्यात्तस्य लक्षणमुच्यते
त्रिदण्डं वाजनं तु स्यादुत्सेधं स्याद् द्विदण्डतः ६५
रुद्रभागयुते तत्र गलं स्यात्त्रिभिरंशकैः
एकेन पट्टिकां कुर्यात्पोतिकां च तथैव हि ६६
ऊर्ध्वे व्योमांशतः कम्पं शरांशे वेदिविस्तरे
वेदांशं ग्रीवविस्तारं दण्डार्धेनोत्तरं ततः ६७
वाजनं तत्त्रिभागं स्यादुत्सेधं स्याद् द्विदण्डतः
तदर्धं हंसपादी स्यादथवा वेदिविस्तरम् ६८
प्रासादस्याष्टभागैकहीनं वापि प्रकल्पयेत्
वेदितारचतुर्भागं गलविस्तृतमुच्यते ६९
वेदिताररसांशैकमग्न्यंशैकमथापि वा
गलमूलनासिकापादनिर्गमं च प्रकल्पयेत् ७०
निर्यूहस्य समं वाथ शरदण्डमथापि वा
सार्धचत्वारि दण्डं वा पादयोर्मध्यमं स्मृतम् ७१

त्रिदराडं वा द्विदराडं वा तद्गुहावेशमुच्यते
तत्पादोत्तुङ्गमानं तु हंसमालावसानकम् ७२
दराडत्रियंशनेत्रांशं तद्विस्तारं प्रकीर्तितम्
सर्वांशं शोभनायुक्तं पूर्ववत्कारयेत्सुधीः ७३
तत्र देवांश्चतुर्दिन्तु ततस्तोरणमध्यगान्
पूर्वे शक्रं गजारूढं स्कन्दं वापि प्रकल्पयेत् ७४
ईशानं दन्निणे कुर्याल्लकुलीश्वरमेव च
पश्चिमे रुद्ररूपं वा नारसिंहमथापि च ७५
उत्तरे ब्रह्मरूपं स्याद्रुद्ररूपमथापि वा
एवं ग्रीवं समाख्यातं शिखरं चाधुनोच्यते ७६
शिखरस्यापि विस्तारं तद्वद्वेदी समुच्यते
वेद्यास्तारं त्रिभागैकं महानास्यास्तु विस्तरम् ७७
विस्तारस्य त्रिपादेन तस्योत्सेधं प्रकल्पयेत्
तत्पार्श्वद्वयविस्तारं ग्रीवपादवदिष्यते ७८
शेषं स्यादवगाढं तु द्विदराडं तु गुहा भवेत्
विस्तारार्धसमं तस्य शिरसो मानमिष्यते ७९
किन्नरीवक्त्रसंयुक्तं नानावल्लीविचित्रितम्
सिंहव्यालगजारूढैर्भूताद्यैस्तु समन्वितम् ८०
परिधिं कारयेद्धीमान्महानास्या विशेषतः
चतस्रश्च महानास्यश्चतुर्दिन्तु व्यवस्थितः ८१
अन्तरालेऽथवा कुर्यादनुनासीचतुष्टयम्
शिखरं तु ततः कुर्यान्नागरादिषु योग्यकम् ८२
आनुपूर्व्यात्कृशं कुर्याद्यावत्स्तूप्यं तथैव च
पालिमग्न्यंशकैः कुर्याद्विदितारे शरांशके ८३

पालितारस्य भूतांशे गुणांशं पद्मविस्तृतम्
पद्मतारत्रियंशैकं कुम्भतारमिति स्मृतम्  ८४
तद्विस्तारशरांशैकं कन्धरस्य तु विस्तरम्
कुम्भतारत्रिभागैकं पाल्यास्तारस्य विस्तृतम्  ८५
तद्विस्तारगुणांशैकं कण्ठतारमिति स्मृतम्
मुकुलस्यापि विस्तारं कण्ठतारवदिष्यते  ८६
स्तूप्युत्सेधं ततः कुर्याद्द्वात्रिंशांशविभाजितम्
अब्ध्यंशमम्बुजोत्सेधमध्यर्धं स्कन्धमुच्यते  ८७
अध्यर्धाधरपट्टी स्यात्सप्तभागं घटोच्छ्रयम्
अध्यर्धं मूलपद्मं स्याद् ग्रीवोत्सेधं षडंशतः  ८८
अर्धांशं कम्पनीव्रं स्याद्वल्कमेकांशतो भवेत्
षडंशं मुकुलोत्सेधमानुपूर्व्यात्कृशं भवेत्  ८९
सौवर्णं राजतं वापि ताम्रजं त्रपुजं तु वा
प्रासादशिखरे कुम्भे विधानेनैव कारयेत्  ९०
पैत्तलं वाथ सौधं वा मृण्मयं पक्वमेव वा
प्रासाद इति निर्दिष्टः षड्वर्गेण समन्वितः  ९१
त्रिचतुर्वर्गसंयुक्तं यदन्यद्देवतागृहम्
देवधिष्ण्यं तदुद्दिष्टं देवप्रासादवद् भवेत्  ९२
सभा नाम तु यद्धाम पञ्चवर्गयुतं भवेत्
विस्तारद्विगुणायामं पादोनद्विगुणं तु वा  ९३
अर्धाधिकं वा कर्तव्यं पादाधिकमथापि वा
सकलानां तु तत्प्रोक्तमव्यक्त उभयोरपि  ९४

इत्यजिताख्ये महातन्त्रे क्रियापादे पादादिलक्षणं नाम चतुर्दशः
पटलः

## पञ्चदशः पटलः
## मूर्धेष्टकाविधिः

मूर्धेष्टकाविधिं वक्ष्ये प्रासादानां जनार्दन
मूर्धेष्टकाश्चतस्रस्तु तासां लक्षणमुच्यते १
शैलधाम्नि शिला तद्वच्चैष्टके चेष्टका भवेत्
इष्टकैव भवेन्मिश्रे शिला स्यात्षोडशाङ्गुला २
तदर्धतारसंयुक्ता तस्यार्धघनसंयुता
इष्टकार्काङ्गुलायामा कौशिकाङ्गुलविस्तृता ३
तदर्धघनसंयुक्ता द्वयोश्चार्धाङ्गुलक्षयात्
कार्श्यमग्रे प्रयुञ्जीत तेन ज्ञात्वाग्रमूलकम् ४
क्षालयित्वाम्भसा सम्यक्प्रोक्षयेदस्त्रमुच्चरन्
स्तूपिदण्डेन संयुक्तमधिवासं तु कारयेत् ५
स्तूपिदण्डोचिता वृक्षाः खदिरासनशिंशपाः
पद्म मधूकवृक्षौ च तिन्त्रिणी च नमेरुकः ६
एतेष्वेकं समादाय कारयेल्लक्षणान्वितम्
प्रासादपादतुल्योच्चं तद्विष्कम्भसमन्वितम् ७
तस्य मूले युगाश्रं स्यात्तत्तुङ्गगुणभागतः
तदूर्ध्वेंऽशद्वयेनापि वृत्तं कुर्यात्कृशं यथा ८
अग्रे व्योमाङ्गुलं नाहमेवं कृत्वाथ दण्डकम्
शिखिपादे प्रयुञ्जीत तन्मूलत्रिगुणायते ९
विस्तारार्धघनोपेते सुदृढं सुसमं यथा
लोहेन वाथ कुर्वीत स्तूपिदण्डं विशेषतः १०
तं प्रक्षाल्येष्टकाभिश्च विन्यसेदक्षराणि च
यकारादिवकारान्तं चतसृष्विष्टकास्वपि ११

रक्तेन धातुरागेण पिष्टेनैव सितेन वा
हंकारं स्तूपिदण्डे तु विन्यसेत्तु समाहितः १२
पुण्याहं वाचयित्वा तु बन्धयेत्तेषु कौतुकम्
सौवर्णं राजतं वापि क्षौमं कार्पासकं तु वा १३
मण्डपं चाधिवासार्थं कारयेद्देशिकोत्तमः
प्रासादाग्रेऽथ सौम्ये वा शांकरे वह्निदेशके १४
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा
नवहस्तसमोपेतं सप्तहस्तमथापि वा १५
पङ्क्तित्रयसमायुक्तं पङ्क्तिमानसमुच्छ्रयम्
कृत्वा नवपदं तत्र तन्मध्ये वेदिका भवेत् १६
तालमात्रसमुत्सेधा दर्पणोदरसंनिभा
वेदिकायाश्चतुर्दिक्षु कुण्डे वा स्थण्डिलेऽपि वा १७
होमं कुर्याद्विधानेन प्रोक्तलक्षणसंयुते
चतुरश्राणि कुण्डानि सर्वाणि परिकल्पयेत् १८
वितानेनोर्ध्वमाच्छाद्य दर्भमाला समन्वितम्
आशाध्वजसमोपेतं चतुस्तोरणभूषितम् १९
चतुर्द्वार समायुक्तमष्टमङ्गल संयुतम्
मङ्गलाङ्कुरसंयुक्तं मालापल्लवशोभितम् २०
गोमयालेपितं कृत्वा मण्डपं तं मनोहरम्
सितपुष्पाक्षतोपेतं पुण्याहं वाचयेत्ततः २१
वास्तुहोमं च कुर्वीत शास्त्रदृष्टेन कर्मणा
तन्मध्ये स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः २२
पद्ममष्टदलं कृत्वा परिस्तीर्य कुशैस्ततः
शक्तिचक्रं समभ्यर्च्य तन्मध्ये नूतनेन तु २३

वाससासनमास्तीर्य दराडं तस्योपरि न्यसेत्
दराडोर्ध्वे कूर्चमाबध्य वेष्टयेत्पुष्पमालया २४
वस्त्रेणाच्छादयित्वाथ तत्पार्श्वे चेष्टकाः क्रमात्
ऊर्ध्वाक्षरा यथा सर्वाः प्रागग्रास्ता निवेशयेत् २५
एवं चतस्रो विन्यस्य देवतास्तासु च क्रमात्
तत्तदक्षरवाच्यास्तु यजेद्गन्धादिभिर्बुधः २६
इष्टकाश्च ततः सर्वा वस्त्रेणावेष्टयेत्सुधीः
दराडे चेशं समभ्यर्च्य सान्तं बीजं समुच्चरन् २७
स्थापयेच्च ततः कुम्भान्मध्यादीशान्तकं यथा
प्रधानघटसंयुक्तान्ससूत्रांस्तोयपूरितान् २८
सकूर्चान्सापिधानांश्च गन्धचन्दनचर्चितान्
वेष्टितान्नववस्त्रैस्तु रत्नकाञ्चनसंयुतान् २९
तेषु मध्ये शिवं चेष्ट्वा दिक्पालान्परितो यजेत्
ततो होमः प्रकर्तव्यो दिक्षु पूर्वादिषु क्रमात् ३०
अग्निमाधाय सर्वत्र कृत्वा चाग्निमुखं ततः
पुरुषं पूर्वकुराडे च दक्षिणे घोरमेव च ३१
सद्यं पश्चिमकुराडे तु वामदेवं तथोत्तरे
गन्धाद्यैः सर्वमभ्यर्च्य तत्तन्मन्त्रमनुस्मरन् ३२
समिदाज्यचरूंश्चैव तिलं सर्षपमेव च
लाजांश्च तराडुलांश्चैव प्रत्येकं तु दशाहुतीः ३३
साङ्गेन मूलमन्त्रेण समिदादिक्रमेण तु
हुत्वा स्पर्शाहुतिं कीलं स्पृष्ट्वा स्पृष्ट्वा तु होमयेत् ३४
आज्येन घोरमन्त्रेण सर्वत्रापि शताहुतीः
दशाहुत्यवसाने तु संस्पर्शश्च प्रकीर्तितः ३५

द्रव्यान्ते व्याहृतिं हुत्वा हविर्दद्यात्ततः क्रमात्
तत्र कुम्भस्थितानां तु देवतानां विशेषतः ३६
एवं कृत्वाधिवासं तु रात्रौ प्रातः समुत्थितः
कृतनित्यो गुरुस्तत्र होतृभिस्तन्त्रवित्तमैः ३७
पूर्णां सर्वेषु कुण्डेषु वह्निमभ्यर्च्य होमयेत्
सर्वात्मानं समुच्चार्य सोष्णीषः सोत्तरीयकः ३८
सुमुहूर्ते सुलग्ने तु सर्वदोषविवर्जिते
पूजितो यजमानेन धनधान्यादिभिः क्रमात् ३९
तादृशैर्होतृदैवज्ञशिल्पिभिः सह देशिकः
इष्टका कीलकुम्भांश्च पूजयित्वा यथाक्रमम् ४०
उत्थाप्याथेष्टकाः सम्यग्यजमानादिभिः सुधीः
शङ्खदुन्दुभिनिर्घोषगीतनृत्तसमन्वितम् ४१
प्रदक्षिणं ततः कृत्वा प्रासादे देशिकोत्तमः
आरुह्योपरि तन्मूर्ध्नि रन्ध्रं नीरन्ध्रकं तथा ४२
इष्टकाः शिल्पिना सार्धं तत्तन्मन्त्रमनुस्मरन्
संस्थाप्योपरि रत्नानि विन्यसेन्मन्त्रवित्तमः ४३
मध्ये विन्यस्य माणिक्यमिन्द्रनीलं तु पूर्वके
आग्नेय्यां तु प्रवालं च याम्ये मरकतं न्यसेत् ४४
वैडूर्यं नैर्ऋते देशे स्फटिकं पश्चिमे तथा
मुक्तां तु वायुदिग्भागे वज्रं सौम्ये च विन्यसेत् ४५
शांकरे पद्मरागं च ततस्तेषु नवस्वपि
सलोहानि च बीजानि मध्ये सर्वाणि विन्यसेत् ४६
मनोन्मनीं तु संपूज्य वामाद्याश्च ततो यजेत्
तदूर्ध्वे कीलकं न्यस्य शिखरार्धप्रमाणतः ४७

तन्मन्त्रं तु समुच्चार्य ततः कृत्वा तु निश्चलम्
स्थापितांस्तु ततः कुम्भान्समानीय यथाक्रमम् ४८
तत्कीले परितश्चापि प्रोक्षयेत्स्वस्वमन्त्रतः
स्तूप्यंशमूर्ध्वतो हित्वा शेषं तत्र प्रबन्धयेत् ४९
एवं यः कुरुते मर्त्यः सर्वान्कामानवाप्नुयात्
देहान्ते गणपो भूत्वा शिवलोके महीयते ५०

इत्यजिताख्ये महातन्त्रे क्रियापादे मूर्धेष्टकाविधिर्नाम पञ्चदशः पटलः

## षोडशः पटलः

## पिण्डकालक्षणम्

पिण्डकालक्षणं वक्ष्ये तच्छृणु त्वं समाहितः
लिङ्गायामसमं तारं पिण्डकाया वरोत्तमम् १
अधमस्याधमं चापि लिङ्गोत्सेधार्धविस्तृतम्
तयोर्मध्येऽष्टभागे तु पीठव्यासा नवोदिताः २
विष्कम्भत्रिगुणं तारमथवा तत्र कल्पयेत्
लिङ्गमूलस्थकर्णेन द्विगुणं कन्यसं भवेत् ३
पादाधिकं तु मध्यं स्याच्छ्रेष्ठमर्धाधिकं भवेत्
कृत्वा नवपदं गर्भं पीठमेकेन वा भवेत् ४
उत्सेधं वैष्णवांशेन समं पीठस्य कल्पयेत्
बाणलिङ्गादिलिङ्गानां पुराणानामथोच्यते ५
पूजांशमध्यगं नाहं कृत्वा षोडशभागिकम्
तेषु पञ्चांशकैस्तस्य विष्कम्भं तु प्रकल्पयेत् ६
तेन कृत्वाथ वेदाश्रं तत्कण्ठं द्विगुणं भवेत्

पीठतारसमुत्सेधं तत्समं परिकीर्तितम् ७
अथवा द्व्यंशके तस्मिन्नेकभागाधिकोच्छ्रयम्
एवं विस्तारमुद्दिष्टं पीठानामुच्छ्रयं तथा ८
चतुरश्राथ वृत्ता च पिण्डिका द्विविधा मता
भद्रा यन्त्री च वज्री च श्रीकरा विजयेति च ९
चतुरश्रस्य भेदाः स्युर्वृत्तभेदमतः शृणु
पद्मं चक्रं तथा वेदी सौम्या रम्या च पञ्चमी १०
पीठोत्सेधे विकारांशे व्योमांशं पादुकं भवेत्
वेदांशं जगती तस्य कैरवं वह्निभागशः ११
पट्टिकैकेन कर्तव्या कण्ठं तस्य गुणांशकम्
तदूर्ध्वे कम्पमेकेन तस्योर्ध्वे पट्टिका भवेत् १२
द्वाभ्यां तदूर्ध्वे चांशेन घृतवारि प्रकल्पयेत्
एवं भद्रं समाख्यातम् यन्त्रपीठं ततः शृणु १३
उत्सेधं पूर्ववत्कृत्वा त्वध्यर्धं पादुकं भवेत्
जगत्यग्न्यंशकैरूर्ध्वे पद्ममर्धाधिकं त्रयम् १४
तदूर्ध्वे कम्पमेकांशं द्वाभ्यां कैरवमुच्यते
तस्योर्ध्वे कम्पमेकांशमूर्ध्वे पद्मं त्रिभिर्भवेत् १५
अर्धांशे पट्टिकाबन्धमर्धांशे घृतवारिणम्
यन्त्रपीठमिति प्रोक्तम् वज्रपीठमथ शृणु १६
पीठोत्सेधं तु विभजेत्पञ्चविंशतिभागतः
एकांशं पादुकं विद्धि पद्ममेकेन कारयेत् १७
तदूर्ध्वैकांशतः कम्पं धरणीमाश्रमांशकैः
अर्धाधिकत्रिभागेन पद्ममूर्ध्वे तु कारयेत् १८
एकेन कम्पमेकेन पद्ममूर्ध्वे प्रकल्पयेत्

अग्न्यंशं कुमुदं वृत्तं तदूर्ध्वेऽम्बुजमंशतः १९
कम्पमेकेन कर्तव्यं कराठं द्वाभ्यां प्रकल्पयेत्
एकेन कम्पमूर्ध्वेऽधः पद्ममेकांशतो भवेत् २०
द्वाभ्यां चाथ माहापट्टी तदूर्ध्वैकांशवाजनम्
अर्धेन घृतवारि स्याद्वज्रपीठ प्रकीर्तितम् २१
त्रिसप्तांशे तदुत्सेधे खभागं पादुकं भवेत्
जगतीदलं चतुर्भिः स्यात्कराठमेकेन कारयेत् २२
तदूर्ध्वे कम्पमेकेन कुम्भमग्न्यंशकैस्तथा
पद्ममेकं तदूर्ध्वे तु कम्पमेकं तदूर्ध्वतः २३
गलं तु नेत्रभागं स्यात्कम्पमेकांशमुच्यते
पद्ममेकेन कर्तव्यं महापट्टी तु द्व्यंशका २४
पद्ममेकांशमुद्दिष्टं तदूर्ध्वे पट्टिकांशतः
घृतवारि तथांशेन कुर्याच्छ्रीकरमुच्यते २५
उत्सेधे षोडशांशे तु तत्रैकांशेन पादुकम्
तदूर्ध्वे पद्ममर्धेन कम्पमर्धेन कारयेत् २६
त्रियंशाज्जगतीं कुर्यात्पद्मं भागद्वयेन तु
कराठमर्धेन कर्तव्यं पद्ममर्धांशतो भवेत् २७
कुम्भं कुर्याद् द्विभागेन पद्ममर्धांशतो भवेत्
कम्पमर्धेन कर्तव्यमध्यर्धं कराठमुच्यते २८
अर्धेन पट्टिकां कुर्यादर्धांशं पद्ममेव च
अध्यर्धेन महापट्टीमंशेन घृतवारिणम् २९
एवं विजयमाख्यातं पञ्चमं चतुरश्रके
पद्मपीठमथो वक्ष्ये वृत्तस्य प्रथमं तु यत् ३०
तदुत्सेधे विकारांशे द्वाभ्यां मूले तु पट्टिका

तदूर्ध्वे पञ्चभिः पद्मं वृत्तमंशद्वयेन तु ३१
ऊर्ध्वे पद्मं चतुर्भागैर्द्वाभ्यामूर्ध्वे तु पट्टिका
तदूर्ध्वे घृतवारी च भागेनैकेन कारयेत् ३२
एवं पद्मं समाख्यातम् चक्रपीठमतः शृणु
अष्टादशांशके तस्मिन्द्वाभ्यां मूले तु पट्टिका ३३
त्रिभिरूर्ध्वेऽम्बुजं कुर्यात्कम्पमेकांशतो भवेत्
षड्भिरूर्ध्वे गलं कुर्यात्तदूर्ध्वे कम्पमेकतः ३४
ऊर्ध्वे पद्मं त्रिभिश्चैव सार्धेनैकेन पट्टिका
अर्धेन घृतवारी स्याद् वेदिपीठं ततः शृणु ३५
उत्सेधे तु विकारांशे भागेनोपानमुच्यते
पद्मतुण्डं द्विभागेन कम्पमेकेन कारयेत् ३६
सप्तांशं कण्ठमुद्दिष्टं तदूर्ध्वे कम्पमंशतः
पद्ममूर्ध्वेंऽशतः प्रोक्तमध्यर्धेन तु पट्टिका ३७
तदूर्ध्वेऽर्धांशतः पद्मं कम्पमर्धेन कारयेत्
अर्धेन घृतवारी स्यात् सौम्यपीठमथ शृणु ३८
उत्सेधे मनुभागे तु द्वाभ्यां मूले तु पट्टिका
कम्पमेकेन कर्तव्यं तदूर्ध्वे कण्ठमष्टभिः ३९
तदूर्ध्वे कम्पमर्धेन सार्धेनैकेन पट्टिका
तदूर्ध्वे घृतवारी च भागेनैकेन कल्पयेत् ४०
रम्यपीठमथो वक्ष्ये षोडशांशे तदुन्नते
एकेन पादुकं कुर्यात् पद्मतुण्डं द्वियंशतः ४१
कम्पमंशेन कर्तव्यं कण्ठं तस्य द्विभागतः
अर्धेन कम्पमर्धेन पद्मं वृत्तं तदूर्ध्वतः ४२
कुमुदं स्याद् द्विभागेन पद्ममर्धांशतस्ततः

पट्टिकार्धेन कर्तव्या द्वाभ्यां च गलमेव हि ४३
एकांशं कम्पपद्मे तु ह्यध्यर्धं प्रस्तरं तथा
आलिङ्गान्तरितावंशाद् घृतवार्यर्धमेव च ४४
एवं रम्यं समाख्यातं लिङ्गस्य सकलं विना
सर्वेषामपि पीठानां सामान्यं लक्षणं शृणु ४५
मूलादग्रेऽष्टभागैकतारहीनं प्रकल्पयेत्
उक्तेष्वेतेषु पीठेषु दशस्वपि जनार्दन ४६
अङ्गानां कल्पितानां तु प्रवेशं निर्गमं तथा
तत्तदंशे तु तुर्यांशैरर्धैर्वाथ त्रियंशकैः ४७
समैर्वा कल्पयेत्तेषां कल्पयेन्नालमुत्तरे
विस्तारस्य त्रिभागैकं नालमूलस्य विस्तरम् ४८
तत्समं तस्य दैर्घ्यं स्यात्क्रमेण कृशता भवेत्
मूलादग्रस्य विस्तारं तत्त्रिभागेन कल्पयेत् ४९
तन्मध्ये जलमार्गः स्यात्तद्विस्तारत्रिभागतः
घृतवारिसमं खातं निर्गमे किञ्चिदानतम् ५०
एवं लक्षणमुद्दिष्टं समं शैलेष्टकादिषु
एकया शिलया कर्तुं पीठिका चेन्न शक्यते ५१
द्वाभ्यां त्रिभिश्चतुर्भिर्वा शिलारूपैः प्रकल्पयेत्
ऊर्ध्वभागेन कर्तव्यः सन्धिस्तत्र कथंचन ५२
भद्रादीनां तु सर्वेषां फलभेदमथ शृणु
भद्रा योगप्रदा ज्ञेया यक्षी क्षेमंकरी तथा ५३
वज्री पुष्टिप्रदा ज्ञेया श्रीकरा श्रीप्रदा भवेत्
जयदा विजया चैव पद्मं चाभीष्टसिद्धिदम् ५४
चक्रा शान्तिकरी सा स्याद्वेदी पुत्रसमृद्धिदा

आयुःप्रदा तथा सौम्या रम्यारोग्यप्रदा स्मृता ४५
एवं फलविशेषेण कुर्यात्पीठं यथेच्छया ५६
इत्यजिताख्ये महातन्त्रे क्रियापादे पिण्डकालक्षणं नाम षोडशः पटलः

## सप्तदशः पटलः

### गर्भन्यासः

अथ वक्ष्यामि ते सम्यग्गर्भन्यासविधिक्रमम्
प्रासादे मण्टपे वाथ गोपुरे वा सभादिषु १
विन्यसेत्संपदे गर्भभाजनं विधिवत्सुधीः
सर्वत्राद्येष्टकोर्ध्वे तु गर्भस्थानमुदाहृतम् २
प्रासादे पादुकोर्ध्वे तु पट्टिकोपरि विन्यसेत्
द्वारस्य दक्षिणे पार्श्वे स्तम्भमूलेऽथवा पुनः ३
मण्टपेषु च सर्वेषु दक्षिणे स्तम्भमूलके
गोपुरे द्वारपार्श्वे तु दक्षिणे भित्तिमूलके ४
सभायामपि तत्पादमूले तु परियोजयेत्
यद्यद्गर्भसमायुक्तं तत्तत्संपत्करं नृणाम् ५
तदर्थं भाजनं कुर्यात्सर्वलक्षणसंयुतम्
सौवर्णं राजतं वापि ताम्रजं कांस्यजं तु वा ६
पादमूलसमं तारं भाजनस्य प्रकल्पयेत्
षट्सप्ताष्टाङ्गुलैर्वापि हीनमध्योत्तमानि तु ७
चतुरश्रमं कुर्याद्विस्तारेण समोच्छ्रयम्
चतुर्भागैकहीनं वा त्रिभागैकविहीनकम् ८
तत्तदग्न्यंशमानेन पिधानं तस्य कल्पयेत्

यवमात्रं तु विस्तारं तयोर्भित्तिगतं भवेत् ९
पञ्चविंशतिभिः कोष्ठैर्नवभिर्वा समन्वितम्
कोष्ठभित्तिसमुत्सेधं बाह्यात्पादविहीनकम् १०
तद्विस्तारं तदर्धं स्यात्सर्वदोषविवर्जितम्
कृत्वा प्रक्षाल्य तत्पश्चादभ्युक्ष्य च कुशाम्भसा ११
प्रासादाग्रेऽथवा पार्श्वद्वयोः कृत्वा तु मण्टपम्
पञ्चषट्सप्तहस्तैस्तु कन्यसादिक्रमेण तु १२
तन्मध्ये वेदिकां कृत्वा रत्निमात्रसमुच्छ्रिताम्
चतुर्दिक्षु च कुण्डानि चतुरश्राणि कल्पयेत् १३
एकं वा प्राचि कर्तव्यं रत्निमात्रप्रमाणतः
स्थण्डिलं वापि सर्वत्र होमार्थं परिकल्पयेत् १४
गोमयेनोपलिप्याथ मण्डपं वेदिकुण्डयुक्
दर्भमालादिभिः सर्वैरलंकृत्य यथाविधि १५
पुण्याहं वाचयित्वाथ कल्पयेद्वेदिकोपरि
शालिभिर्विमलैस्तत्र स्थण्डिलं तु यथाविधि १६
तत्र पद्मं समालिख्य साष्टपत्रं सकर्णिकम्
तन्मध्ये गर्भफेलां च विन्यसेद्धृदयेन तु १७
तेषु कोष्ठेषु सर्वेषु मध्ये कूटाक्षरं न्यसेत्
यकारादिहकारान्तं परितोऽष्टसु विन्यसेत् १८
तद्बाह्ये पूर्वतश्चापि स्वरान्षोडश विन्यसेत्
तत्तदक्षरमभ्यर्च्य प्रणवादिनमोऽन्तकैः १९
मन्त्रैर्मध्यादि सर्वत्र गन्धपुष्पादिभिः क्रमात्
मध्ये फणीन्द्रं हैमं तु विन्यसेदथ दिक्षु च २०
वज्रादिशूलपर्यन्तमस्त्रजालं च विन्यसेत्

माणिक्यमथ तन्मध्ये पूर्वे मरकतं न्यसेत् २१
इन्द्रनीलं तु याम्ये तु स्फटिकं पश्चिमे तथा
वज्रं तु सौम्यदिग्भागे वैडूर्यं वह्निगोचरे २२
मुक्तां निर्ऋतिदिग्भागे पुष्यरागं तु मारुते
न्यसेत्प्रवालमैशान्यां पुनस्तेष्वपि च क्रमात् २३
पारदं धातुरागं च गैरिकं च मनःशिलाम्
अञ्जनं हरितालं च माक्षिकं चाभ्रकं तथा २४
सौराष्ट्रं च क्रमान्न्यस्य पूर्ववद्देशिकोत्तमः
काञ्चनं रजतं ताम्रमारकूटं तथा त्रपुम् २५
कांस्यं सीसमयश्चैव पित्तलं च तथा न्यसेत्
एवं नवसु विन्यस्य कोष्ठेष्वथ च तद्बहिः २६
शालिनीवारवरकप्रियङ्गुतिलसर्षपान्
यववेणुकुलत्थांश्च निष्पावं तुवरीं तथा २७
गोधूममाषमुद्गांश्च श्यामाकं षष्टिकं तथा
पूर्वादिषु क्रमान्न्यस्य पद्ममुत्पलमेव च २८
विदारीं मुसलीं चैव मुस्तह्रीबेरमेव च
उशीरं च कुशेशं च दिक्षु पूर्वादितो न्यसेत् २९
विष्णुक्रान्तिं सहादेवीं गोक्षुरं बिल्वमेव च
शमीपत्रमपामार्गमिन्द्रवल्लीं विदिक्षु च ३०
पर्वते च नदीतीरे वल्मीके कर्कटायने
वृषशृङ्गक्षते चैव गजदन्तक्षते तथा ३१
सस्यक्षेत्रे तटाके वा मृदं संगृह्य च स्थले
प्रागादिष्वथ बाह्येषु दिक्षु कोष्ठेषु विन्यसेत् ३२
एवं विन्यस्य संपूज्य कोष्ठोक्तैस्तत्तदक्षरैः

पिधाय च विधानेन फणीन्द्रं शेषमर्चयेत् ३३
ततो होमं प्रकुर्वीत ततः प्रस्थापितस्य तु
देवस्य मूलमन्त्रेण समिद्धोमं प्रकल्पयेत् ३४
आज्यं चरुं तथा लाजं तिलं सर्षपमेव च
यवांश्च तत्तदङ्गैश्च हृदयाद्यैरनुक्रमात् ३५
होमयेच्छतमर्धं वा तदर्धं वापि मन्त्रवित्
सर्वद्रव्यावसाने तु तत्तन्मन्त्रेण संस्पृशेत् ३६
गर्भभाण्डं ततश्चैव फणीन्द्राय निवेदयेत्
हविः सर्वोपदंशाढ्यं पूर्णां मूलेन होमयेत् ३७
सुमुहूर्ते सुलग्ने तु देशिकः शान्तमानसः
सर्वातोद्यसमायुक्तं नृत्तगेयसमायुतम् ३८
गर्भभाजनमुत्थाप्य प्रोक्तदेशे च गह्वरे
विन्यसेन्मूलमन्त्रेण तस्य संवरणादिकम् ३९
शिल्पिना कारयेत्कर्म यथा दृढतरं भवेत्
अलाभे गर्भफेलायाः शङ्खे वा मौक्तिके शुभे ४०
दण्डे वा भाजने सर्वं वस्तु निक्षिप्य चैकतः
अन्यत्सर्वं यथापूर्वं कृत्वा तद्विन्यसेत्सुधीः ४१
दक्षिणां गुरवे दद्याच्छिल्पिने च स्वशक्तितः
एवं विन्यस्य तद्गर्भं सर्वसिद्धिमवाप्नुयात् ४२

इत्यजिताख्ये महातन्त्रे क्रियापादे गर्भन्यासविधिर्नाम सप्तदशः पटलः

# अष्टादशः पटलः

## लिङ्गप्रतिष्ठाविधिः

लिङ्गप्रतिष्ठां वक्ष्यामि भोगमोक्षप्रदां नृणाम्
आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः १
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे
दिक्कालाद्यनवच्छिन्नो वाङ्मनोऽतीतगोचरः २
निष्कलोऽनिष्कलश्चैव सर्वगः सर्वदृक्सदा
तज्ज्ञानादेव मुक्तिः स्याद्भक्तानां च जनार्दन ३
तत्पूजापि ददात्येव फलमिन्द्रपदादिकम्
पूजितो देवदेवेशो भक्तिं ज्ञानं प्रयच्छति ४
ज्ञानेन भक्तियोगेन विनान्यैः कर्मकोटिभिः
प्राप्यते न क्वचिन्मुक्तिस्तस्माल्लिङ्गार्चनं परम् ५
लिङ्गार्चनसमो नास्ति धर्मोऽत्र भुवनत्रये
पूजा च त्रिषु लिङ्गेषु व्यक्ताव्यक्तोभयात्मसु ६
स्थापितेषु भवेत्सम्यक् स्थापनं द्विविधं भवेत्
स्थापनं च प्रतिष्ठा च स्थापनं शिल्पिसंयुतम् ७
प्रतिष्ठा तद्विहीना स्यान्मन्त्रेणैव हि सा भवेत्
मन्त्ररूपी महादेवः शिवः परमकारणम् ८
मन्त्रं स्यात्परमं ज्ञानं मन्त्रवाच्यः सदाशिवः
वाच्यवाचकसंबन्धो मन्त्रस्यास्य च दृश्यते ९
वाच्यस्य देवदेवस्य लोकानुग्राहकस्य च
लिङ्गं चिह्नं शरीरं च कथ्यतेऽत्र जनार्दन १०
शरीरं मन्त्रमेवं स्याच्छब्दब्रह्मेति संज्ञितम्
शरीरं प्रथमं कृत्वा व्यक्ताव्यक्तोभयात्मकम् ११

त्रिविधं तत्सुरश्रेष्ठ पूजार्थं तस्य नित्यशः
प्रतिलिङ्गस्थितं मन्त्रं प्रतिष्ठेति प्रकीर्तितम्  १२
तामिमामधुना सम्यङ्ग मत्तो निगदितां शृणु
प्रतिष्ठाविधिकालोऽयमुच्यते सांप्रतं मया  १३
उत्तरायणकाले तु माघमासविवर्जिते
शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा  १४
षष्ठी च सप्तमी चैव दशमी च त्रयोदशी
तिथयः शुभदाः प्रोक्ता दिने पूर्वार्धमिष्यते  १५
श्रेष्ठा वारा गुरुज्ञेन्दुशुक्राणां परिकीर्तिताः
पक्षच्छिद्राश्च पर्वेण रिक्ताश्चापि विवर्जयेत्  १६
कोणाङ्गारदिनेशानां वारांश्चैव विवर्जयेत्
प्राजापत्यैन्दवे तिष्यो मघस्वाती पुनर्वसू  १७
अश्विनी रेवतीहस्तौ चोत्तरत्रितयं तथा
मैत्रं वैष्णवसंयुक्तं नक्षत्रं शुभदं स्मृतम्  १८
अन्धं काणं च वर्ज्यं स्यात्कण्टकं स्थूणमेव च
पापयुक्तं तथा दृष्टं विद्धं काङ्क्षितमेव च  १९
सव्यतीपातकं चैव वर्जनीयं प्रयत्नतः
चराणि वर्जयेद्धानि धनुषा शुभमन्यभम्  २०
द्रेक्काणांशकहोराश्च दर्शनं शुभदं सताम्
हित्वा सोमोदयं तेषु देवस्थापनकर्मणि  २१
त्रिषडायगताः पापाः शंविदध्युस्त एव च
लग्नगाः प्राणसन्देहं यजमानस्य कुर्वते  २२
पापास्त्वष्टमराशिस्थाः शुभाश्चापि विनिन्दिताः
षट्सप्तदशमस्थोऽपि शुक्रो वर्ज्य उदाहृतः  २३

द्वितीयं पञ्चमं हित्वा चन्द्रः शेषेषु शोभनः
सप्तद्विपञ्चनवमं हित्वाऽन्यत्र तथा गुरुः २४
सोऽपि लग्नगतः कुर्याच्छक्रस्य सुखसंपदम्
सूर्यः शुभकरो युक्तः पौष्णहस्तत्रिरुत्तरैः २५
मन्दश्च शुभदः प्रोक्तः प्राजापत्यानिलर्क्षयुक्
अश्विनीहस्तसंयुक्तो बुधवारस्त्वशोभनः २६
अर्यम्णश्चार्द्रभं चापि गुरुवारेण वर्जयेत्
वैष्णवं पुष्यभं चैव शुक्रवारेण वर्जयेत् २७
वैश्वदेवयुतः सोमो द्वितीया बुधसंयुता
गुरुवारयुता षष्ठी चन्द्रश्चैकादशीयुतः २८
सप्तमी पौष्णयुक्ता च वर्जनीयाः प्रयत्नतः
उत्पाते दुर्दिने वापि निर्घाते तापसे मृते २९
निन्दितं दिवसं प्रोक्तं मृते जनपदेश्वरे
एवमादिषु सर्वेषु न कुर्याल्लिङ्गसंस्थितिम् ३०
एवं परीक्ष्य निश्चित्य प्रतिष्ठाकालमुत्तमम्
सावकाशे विमाने तु द्वारबन्धविधेः पुरा ३१
मूर्धेष्टकाविधेर्वापि स्थापनं स्यान्निजेच्छया
बाणलिङ्गं तथोद्भूतमन्यद्रत्नादिकं तु यत् ३२
तत्सर्वं धाम्नि निष्पन्ने स्थापनीयं विचक्षणैः
अङ्कुरानर्पयेद्बीजैर्यथाविधिपुरःसरम् ३३
ततोऽधिवासकर्मार्थं मण्टपं कारयेत्सुधीः
त्रयाणां ज्येष्ठलिङ्गानां द्वात्रिंशद्धस्तसंमितम् ३४
चतुष्षष्ट्यङ्घ्रिभिर्युक्तं तिथितालसमुच्छ्रयम्
मध्ये हित्वा चतुष्पादं तत्र वेदीं प्रकल्पयेत् ३५

युक्तां नवपदै रम्यां हस्तमात्रसमुच्छ्रयाम्
वेदाश्रयोनिखराडेन्दुत्र्यश्रवृत्तषडश्रकैः ३६
पद्मवस्वश्रसंयुक्तैरष्टदिक्ष्वष्टकुराडकैः
शक्रशांकरयोर्मध्ये वृत्तेन च समन्वितम् ३७
वेदाश्रकुराडैः परितश्चतुर्विंशैः समन्वितम्
मध्यमत्रयलिङ्गानां मराटपं तिथिहस्तकम् ३८
षट्त्रिंशत्स्तम्भसंयुक्तं नवतालसमुच्छ्रितम्
कृत्वा मध्ये तु तत्रापि हित्वा स्तम्भचतुष्टयम् ३९
तत्र नन्दपदैर्वेदी भवेत्तालत्रयोच्छ्रिता
तस्यास्तु परितः कुराडमष्टदिक्षु च पूर्ववत् ४०
विदिक्ष्वष्ट च कुराडानि वृत्तानि परिकल्पयेत्
अधमत्रयलिङ्गानां पङ्क्तिहस्तप्रविस्तरम् ४१
पङ्क्तितालसमुत्सेधं षोडशस्तम्भसंयुतम्
मध्ये वेदिकया युक्तमुत्सेधेन द्वितालता ४२
कुराडैरावृतया चैव नवभिः पूर्ववासितैः
एवं मराटपक्लृप्तिस्तु लिङ्गे हस्तमिते भवेत् ४३
मानेन निश्चिते लिङ्गे प्रागुदग्द्वारगर्भयोः
तन्मानद्विगुणं वापि त्रिगुणं वा चतुर्गुणम् ४४
हीनमध्योत्तमं कुर्याच्छेषं पूर्ववदाचरेत्
मराटपानां तु सर्वेषां तालमात्रस्थलोच्छ्रयम् ४५
वेद्यां तु परितः कुर्याच्चतुस्त्रिद्व्यङ्गुलैः क्रमात्
श्रेष्ठादीनामुपानं च सर्वं पक्वेष्टकामयम् ४६
अपक्वैर्वापि कुर्वीत दर्पणोदरसंनिभम्
वेदिकोपरि कुम्भं तु मराटपस्य प्रकल्पयेत् ४७

असंभवेषु सर्वेषु नवकुण्डेषु होमयेत्
चतुर्द्वारसमायुक्तं प्रतिद्वारं सुतोरणम्  ४८
कृत्वा मध्योत्तरे भागे लक्षणोद्धारमण्टपम्
तत्त्रिभागैकभागेन कुर्यादर्धेन वा पुनः  ४९
तन्मध्ये वेदिकां कुर्यात्तालावटसमन्विताम्
सूत्रवर्तनपूर्वं तु कृतशाणाभिघर्षणम्  ५०
क्षालितं बहुशोऽम्भोभिः सुगन्धैरतिशीतलैः
स्थण्डिले चैव शालायां शालिभिर्निहिते शुभे  ५१
स्थाप्य लिङ्गं कुशास्तीर्णे लिङ्गे बध्वा तु कौतुकम्
सौवर्णं राजतं वापि समाच्छाद्यतु वाससा  ५२
नवेन शाययेल्लिङ्गं प्राक्शिरश्चोर्ध्ववक्त्रकम्
लोकपालघटानष्ट ससूत्रान्वारिपूरितान्  ५३
सवस्त्रान्सापिधानांश्च सकूर्चान्स्थाप्य पूजयेत्
हित्वा रात्रिं तथा लिङ्गं प्रभाते सुमुहूर्तके  ५४
उत्थाप्य शयनात्तस्मात् संप्रोक्ष्य कलशाम्भसा
पूर्वोक्तमण्टपे रम्ये गोमयेनोपलेपिते  ५५
सवितानध्वजे तस्मिन्दर्भमालासमायुते
गीतनृत्तसमायुक्ते सर्वातोद्यसमन्विते  ५६
तन्मध्ये वेदिकायां तु विन्यसेत्फलकां दृढाम्
तत्र लिङ्गं समानीय सुदृढेन रथादिना  ५७
स्थापयेच्छिल्पिनाचार्यः प्राङ्मुखं मूलमन्त्रतः
व्यपोह्य वस्त्रं तद्बद्धं कौतुकं च क्रमेण तु  ५८
दत्त्वा पुष्पं च शिरसि सूत्रवर्तनमारभेत्
त्रयीमयं त्रिलोकेशं त्रिगुणं तत्र दैवतम्  ५९

लिङ्गं सदाशिवस्यैतत् त्रिप्रकारकृतान्यपि
सूत्रीयन्ते हनेनेति सूत्रमित्यभिधीयते ६०
सूत्रं च वर्तयेद्यत्नाद्व्यक्तये मुखपृष्ठयोः
यत्र सूत्रं मुखं तत्र पृष्ठं चान्यत्र कल्पितम् ६१
लिङ्गमस्तकमध्येऽङ्कं कृत्वाष्टाश्रेऽत्र मध्यमे
लिङ्गस्य मूलविष्कम्भमध्ये चाङ्कं तु धातुना ६२
कृत्वा तु धातुरागाक्तसूक्ष्मतन्तुप्रकल्पितम्
त्रिवृत्सूत्रं शिरस्यङ्कान्मूलाङ्कान्तं क्रमेण च ६३
आलोच्यास्फालयेद्वक्त्रे मध्यसूत्रं तदुच्यते
ततो नालस्य विस्तारं ज्ञात्वा सम्यक् तदूर्ध्वतः ६४
पार्श्वयोर्मध्यसूत्रं स्यात्स्फालयेद्वैष्णवांशतः
शिरोऽन्तमथ सूत्रे द्वे पक्षसूत्रे ततः क्रमात् ६५
पार्श्वयोर्बन्धनं ज्ञात्वा यावत्पृष्ठान्तगोचरम्
वर्तयित्वाथ तीक्ष्णेन हैमेनैव तु सूचिना ६६
काञ्चनार्चनरूपेण शिल्पिवर्येण धीमता
धृतपञ्चाङ्गभूषेण नवाम्बरधरेण च ६७
नवाम्बरोत्तरीयेण प्रोक्षितेन कुशाम्भसा
प्रदक्षिणक्रमेणैव कारयेत्सूत्रवर्तनम् ६८
सूत्रलक्षणमप्यद्य वक्ष्येऽहं ते जनार्दन
पूजाभागोच्छ्रये सर्वे षण्णवत्यंशभाजिते ६९
एकांशार्धं यवं विद्यात्तत्समं सूत्रविस्तरम्
अथवान्यप्रकारेण सूत्रविस्तारमुच्यते ७०
उत्तमोत्तमलिङ्गस्य यवत्रितयमुच्यते
हस्तस्य सूत्रविस्तारमितरेषां क्रमेण तु ७१

अर्धार्धह्रासः कर्तव्यो हस्तलिङ्गान्तमेव हि
तारादष्टांशकं खातं पादाखातमथापि वा ७२
पूजाभागोच्छ्रयं सर्वं विकारांशेन भाजयेत्
तत्रोर्ध्वचतुरंशं तु द्व्यंशकं चाप्यधस्त्यजेत् ७३
एकेन कुड्मलं कृत्वा नवांशैर्नालमालिखेत्
तन्नालस्य तु विस्तारमुक्तांशेऽग्न्यंशभाजिते ७४
नेत्रांशेन भवेत्तस्मिन्मुकुले मूलतः क्रमात्
कृशतां कल्पयेत्पश्चात् पक्षसूत्रद्वयं लिखेत् ७५
तयोर्भागद्वयं हित्वा पृष्ठे संगम इष्यते
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु ७६
षोडशांशे पुनस्तस्मिंस्त्यजेदूर्ध्वे चतुष्टयम्
अधश्चैकं परित्यज्य मध्ये नालं दशांशकम् ७७
व्योमांशेन तदूर्ध्वे तु मुकुलं चापि कल्पयेत्
पक्षसूत्रद्वयं चापि नालतारं च पूर्ववत् ७८
द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं शृणु
द्वादशांशेऽथ पूजांशे त्यक्त्वोर्ध्वेऽशद्वयं ततः ७९
अधश्चैकं परित्यज्य नालं वस्वंशमुच्यते
व्योमांशं मुकुलं तत्र पक्षसूत्रं च पूर्ववत् ८०
तृतीयं लक्षणं प्रोक्तं तुरीयं लक्षणं शृणु
षोदशांशे शिवांशे तु पुनश्चैतत्त्रिधा भवेत् ८१
त्र्यंशैकमूर्ध्वतस्त्यक्त्वा षोडशांशेष्वधो द्वयम्
त्यक्त्वा मध्ये तु नालं स्यान्मुकुलेन विवर्जितम् ८२
पक्षसूत्रद्वयं चापि पूर्ववत्परिकल्पयेत्
तत्राधो भूतवेदाग्निनेत्रभागावधिर्यथा ८३

ब्राह्मादिक्रमतः कुर्याल्लम्बनं पत्तसूत्रयोः
विशेषान्नालसूत्राभ्यां क्रमात्कुर्यात्तयोरपि ८४
शिल्पिना कारयित्वैवं सूत्रं लत्तणसंयुतम्
पात्रेषु प्रस्थपूर्णेषु त्रिषु ताम्रमयेषु च ८५
मधु सर्पिः पयश्चैव पूरयेत्पुरुषेण तु
अर्घ्याम्भसा तु संप्रोत्त्य न्यस्य पुष्पं च काञ्चनम् ८६
सोष्णीषः सोत्तरीयश्चाप्युदगास्यः प्रसन्नधीः
मध्ये रेखाद्वयं पश्चान्मधुनां रुद्रदैवतम् ८७
सुवर्णमय्या सूच्या च सर्वात्मानमुदाहरन्
तर्पयेद्दत्तिणां रेखां सर्पिषा ब्रह्मदैवताम् ८८
पिङ्गलेन तु मन्त्रेण ततो विष्णवधिदैवताम्
वामरेखां तु पयसा ततो घोरास्त्रमन्त्रतः ८९
तर्पयित्वा ततो मन्त्री पञ्चमृत्पञ्चगव्यकैः
लिङ्गशुद्धिं तु बहुशः पञ्चब्रह्मशिवैः क्रमात् ९०
कृत्वा शुद्धेन तोयेनाप्यभिषिच्यास्त्रमुच्चरन्
पुष्पं शिरसि चार्घ्येण दत्त्वा प्रणवमुच्चरन् ९१
पुण्याहं वाचयित्वाथ प्रोत्तयेत्पुरुषेण तु
लिङ्गस्योत्तरभागेऽथ पीठं न्यस्य च पूर्ववत् ९२
शुद्धिं कृत्वा तु कूर्चेन पूजाभागसमेन तु
सह लिङ्गं तु मालाभिरावेष्ट्याथ च देशिकः ९३
नवेन वासोयुग्मेन लिङ्गपीठमनुक्रमात्
आवेष्ट्य वर्मणाभ्युत्त्य हेतिनादौ शिवाम्भसा ९४
रथादिषु समारोप्य नद्यादीनामदूरतः
जलाशयमनुप्राप्य स्तनदघ्ने जले ततः ९५

आनीय स्थाप्य यत्नेन सह चैव रथादिना
तन्मूले दक्षिणे पार्श्वे पीठं चापि निवेशयेत् ९६
परितो लोकपालांश्च स्वस्वदिक्पान्समर्चयेत्
लिङ्गोपरि प्रपां कुर्याद्वितानध्वजशोभिताम् ९७
दर्भमालायुतां तत्र तीरे दीपांश्च विन्यसेत्
त्रिरात्रमेकरात्रं वा दिनं वाथ दिनार्धकम् ९८
अधिवास्य जले पश्चात्स्नानमण्टपमानयेत्
तत्रानीय च तल्लिङ्गं स्थाप्य तद्वेदिकोपरि ९९
वस्त्रकूर्चादिकं सर्वमपनीय शिवाम्भसा
संस्नाप्य लिङ्गं पीठं च ततः पुण्याहमाचरेत् १००
पञ्चगव्याभिषेकं च शिवमन्त्रेण कारयेत्
सर्वात्मानं जपन्पश्चाच्छुद्धतोयेन सेचयेत् १०१
पीठं च शुद्धतोयेन देवीगायत्रिमन्त्रतः
अभिषिच्य ततो दद्याल्लिङ्गमूर्ध्न्यर्ध्यमुत्तमम् १०२
पुष्पं च साक्षतं दत्त्वा प्रणवेन समाहितः
ततो मण्टपसंस्कारं कुर्यात्तद्विधिरुच्यते १०३
प्रविश्य मण्टपं सम्यक्कृतब्राह्मणभोजनम्
नवेन परिशुद्धेन गोमयेनोपलेपयेत् १०४
पुण्याहं वाचयित्वा तु सितपुष्पाक्षतांस्ततः
समास्तीर्यास्त्रमन्त्रेण प्राङ्मुखो वाप्युदङ्मुखः १०५
अभ्युक्ष्य परितो धीमान्मण्टपं दर्भमालया
वितानेनोर्ध्वमाच्छाद्य स्तम्भान्सर्वान्नवैः सितैः १०६
वस्त्रैरावेष्ट्य परितो लोकपालध्वजान्क्रमात्
बध्वा तद्वर्णसंयुक्तांस्तत्तदस्त्रेण लाञ्छितान् १०७

वेदीप्रान्ते तु सर्वत्र कुर्यान्मालावलम्बनम्
मुक्तादामानि कोणेषु सपताकं विलम्बयेत् १०८
नालिकेरफलं पुष्पं चतुष्कोणेषु लम्बयेत्
द्वारपार्श्वेषु सर्वत्र सितसूत्रविचित्रितान् १०९
गन्धोदपूरितान्कुम्भान्पल्लवास्यांश्च विन्यसेत्
अष्टमङ्गलरूपाणि वेदिकाबाह्यतो न्यसेत् ११०
वेदिकोपरि बाह्ये वा दीपमालां प्रयोजयेत्
पालिकादींश्च विन्यस्य ततः पुण्याहमाचरेत् १११
दीपवर्ज्यानि शेषाणि स्थण्डिलोपरि विन्यसेत्
ततश्च शिवमन्त्रेण प्रोक्षयेच्छुद्धवारिणा ११२
वास्तुहोमं ततः कृत्वा वेद्याश्चाग्नेयगोचरे
स्थण्डिले सैकते होमं समाप्याग्निं विसृज्य च ११३
वेदिकायां ततः कुर्यात्स्थण्डिलं विधिवत्सुधीः
दशद्रोणैर्यवादीनां स्थण्डिलं श्रेष्ठमुच्यते ११४
मध्यमं स्यात्तदर्धेन तदर्धेनाधमं भवेत्
तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ११५
बाह्यरेखात्रयं कृत्वा मध्ये पद्मं सकर्णिकम्
साष्टपत्रं लिखित्वा तु विकिरेत्पुष्पलाजकान् ११६
कुशेन संपरिस्तीर्य शयनं तत्र कल्पयेत्
दारुजं चर्मजं चैव रोमजं तूलजं तथा ११७
उपर्यास्तरणोपेतं भवेच्छयनपञ्चकम्
दारुजं फलकं ज्ञेयं क्षीरवृक्षसमुद्भवम् ११८
चर्मजं च वरं चर्म व्याघ्रत्वगैणमेव वा
रोमजं शयनं रोमकम्बलं पक्षिपक्षजम् ११९

चतुर्थं शाल्मलीतूलसंभवं वा प्रकल्पयेत्
उपर्यास्तरणं चापि केवलं सूक्ष्मवाससा  १२०
एवं शयनमुद्दिष्टमलाभे पञ्चवस्त्रकैः
पृथिव्यादीनि तत्त्वानि शयनेषु यजेत्क्रमात्  १२१
वेदिकायां सुमेरुं च स्वनामपदमन्त्रकैः
अन्तःस्थेष्वष्टकुण्डेषु भवादीन्परितो यजेत्  १२२
प्रधाने शिवमभ्यर्च्य तद्बाह्ये परितो यजेत्
दिक्पतीन्स्वस्वदिक्स्थेषु कुण्डेष्वन्येषु च क्रमात्  १२३
विद्येशांश्च वसूंश्चैव यजेद्देशिकसत्तमः
मध्यमण्टपकुण्डेषु षोडशेषु यथाक्रमम्  १२४
भवादीन्दिक्षु संपूज्य प्रधाने शिवमर्चयेत्
भूरादिलोकाञ्शेषेषु सप्तकुण्डेषु पूजयेत्  १२५
कन्यसे मण्टपे वापि नवकुण्डेषु पूजयेत्
विताने चन्द्रमभ्यर्च्य दिग्ध्वजेषु तदीश्वरान्  १२६
वासुकिं दर्भमालायां पुरुषार्थचतुष्टयम्
मुक्तादामसु संपूज्य तत्तत्स्तम्भेषु पूजयेत्  १२७
उत्तमे मध्यमे वापि यजेद्वैकर्तनादिकान्
आदित्यान्द्वादशैवाथ मण्टपे त्वधमेऽपि च  १२८
धर्मादीन्परितो यष्ट्वा तोरणेष्वथ पूर्वतः
भद्रं च विजयं चैव विजृम्भं लोहितं तथा   १२९
धूपयेच्चागरुं यद्वा घृताक्तं तत्र गुग्गुलुम्
एवं मण्टपसंस्कारं कृत्वा देशिकसत्तमः   १३०
होतृभिर्मूर्तिपैः सार्धं गच्छेल्लिङ्गान्तिकं गुरुः
होतारः साधकाः प्रोक्ता अभावे पुत्रकाश्च ते  १३१

सर्वातोद्यसमायुक्तं स्वस्तिसूक्तादिमङ्गलैः
बलवद्भिस्तदा लिङ्गमारोप्य च रथादिषु १३२
द्वारेण पश्चिमेनैव मण्टपं तु निवेशयेत्
प्राक्शिरश्चोर्ध्ववक्त्रं तु शाययेच्छयनोपरि १३३
पीठं च विन्यसेत्पश्चाल्लिङ्गमूले तु दक्षिणे
सौवर्णं कौतुकं तत्र लिङ्गे पीठे च बन्धयेत् १३४
तत्र त्रिषु विभागेषु दत्त्वार्घ्यं पुष्पसंयुतम्
पीठं वापि ततो लिङ्गं छादयेद्रक्तवाससा १३५
पिण्डिकां च सितेनैव वाससा सर्वमन्त्रतः
अर्घ्येण गन्धपुष्पाभ्यां धूपदीपद्वयेन च १३६
रुद्रविष्णुविरिञ्चांश्च वृत्तेऽष्टाश्रयुगाश्रयोः
तत्तन्मन्त्रेण संपूज्य यजेत्पीठे मनोन्मनीम् १३७
एवं कृत्वा ततो धीमान्कलशान्स्थापयेत्क्रमात्
सौवर्णं राजतं ताम्रं मृत्तिकाकलशान्दृढान् १३८
अकलङ्कान्सुपक्वांश्च पक्वबिम्बफलद्युतीन्
द्रोणार्धपूर्णानच्छिद्रानभिन्नांश्चाप्युपाददेत् १३९
वर्धनी तत्प्रमाणा स्याच्छिवकुम्भः प्रमाणतः
द्विगुणस्तान्समस्तांश्च क्षालयेदस्त्रमन्त्रतः १४०
ततः सर्वात्मनावेष्ट्य सूत्रेण सुसितेन च
यवमात्रान्तरं तांश्च गन्धोदकेन पूरयेत् १४१
सकूर्चान्सापिधानांश्च पल्लवास्यान्मनोरमान्
चन्दनक्षोदसिक्ताङ्गान्साक्षतान्वस्त्रवेष्टितान् १४२
संसाध्य सर्वांस्तान्कुम्भांस्तेषु चैकं प्रगृह्य च
लिङ्गस्य दक्षिणे पार्श्वे शिरोदेशे तु विन्यसेत् १४३

तस्योत्तरे तु विन्यस्य शक्तिकुम्भं मनोरमम्
विद्येश्वरात्मकान्कुम्भानष्टावष्टसु दिक्ष्वपि १४४
विन्यस्य तेषु शैवेषु विन्यसेद्रत्नपञ्चकम्
शेषेष्वपि च सर्वेषु विन्यसेत्काञ्चनं ततः १४५
पुण्याहं वाचयित्वाथ संप्रोक्ष्य च शिवाम्भसा
शिवे सदाशिवं तत्र यजेत्कुम्भे मनोन्मनीम् १४६
तत्कुम्भे चापि संपूज्य विद्येशान्दिक्षु पूजयेत्
गन्धपुष्पादिभिर्मन्त्री ततो होमं समारभेत् १४७
ततो दिक्षु ऋगाद्यैस्तु वेदैरध्ययनं भवेत्
नैर्ऋत्यां तु जपेदस्त्रमैशान्यां तु शिवं यजेत् १४८
कुण्डाग्न्याज्यस्त्रुवादीनां कृत्वा संस्कारमुत्तमम्
प्रतिकुण्डं ततः कुर्याद्धोमं यद्वा स देशिकः १४९
प्रधानकुण्डे संस्कारमग्नेः कृत्वा परेषु च
प्रक्षिप्य मूर्तिपैर्होमं सर्वकुण्डेषु कारयेत् १५०
होमारम्भे तु सर्वत्र जातवेदसमर्चयेत्
गन्धपुष्पादिभिर्वह्निबीजमन्त्रं समुच्चरन् १५१
पश्चात्कुण्डाधिपांश्चापि शिवमन्त्रं समुच्चरन्
ततः सर्वत्र हुत्वा तु सर्पिषाग्निमुखं ततः १५२
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान्
मुद्गमाषकुलत्थांश्च वेणुनीवारकानपि १५३
एतानि होमद्रव्याणि मूलब्रह्माङ्गकैः क्रमात्
शतं वाथ तदर्धं वा प्रतिकुण्डं तु होमयेत् १५४
पालाशी तु प्रधानस्य समित्सर्वत्र कीर्तिता
प्लक्षोदुम्बरकाश्वत्थवटजाः पूर्वतः क्रमात् १५५

आग्नेयादिषु शम्यर्कमायूरखदिरोद्भवाः
शेषेषु समिदन्येषु बाह्यस्थेषु जनार्दन १५६
सर्वेष्वौदुम्बरी ग्राह्या प्रतिद्रव्यावसानके
सर्पिषा व्याहृतिं हुत्वा सर्वत्रैव समं कुरु १५७
व्याहृत्यन्तेन मन्त्रेण तेनैव सह मूर्तिपैः
कूर्चहस्तः स्पृशेल्लिङ्गं प्रतिकुण्डं तु होमयेत् १५८
मूर्तिपाः सर्पिषा तेषां प्रत्येकं तु दशाहुतीः
ततः प्रधानकुण्डे तु सर्पिषा मूलमन्त्रतः १५९
हुत्वा दशाहुतीः पश्चात्प्रत्येकं ब्रह्मभिः क्रमात्
हुत्वा च पूर्ववत्पश्चात्तस्मिन्नेव जनार्दन १६०
शक्तिहोमं च कुर्वीत तत्रावाह्य मनोन्मनीम्
गन्धपुष्पादिनाभ्यर्च्य तन्मन्त्रेणापि होमयेत् १६१
आज्येनैकेन साङ्गेन मूलाख्येन दशाहुतीः
प्रत्येकं तु ततश्चापि तैर्मन्त्रैः पिण्डिकां स्पृशेत् १६२
विद्येशानां गणेशानां दिक्पालानां तथैव च
दशानामपि शस्त्राणां प्रत्येकं सर्पिषाहुतिम् १६३
पञ्चाहुत्या समाप्याथ होममभ्यर्च्य पावकम्
परिषिच्य तुषाद्यैस्तु वह्निं तेष्वपि रक्षयेत् १६४
पूजयित्वैवमग्निष्ठं दद्यात्कुम्भे हविः क्रमात्
देवानामपि सर्वेषां ततो रात्रिं तु जागरात् १६५
नीत्वा प्रातः समुत्थाय कृतनित्यः स देशिकः
मूर्तिपैर्मण्टपं गत्वा समाराध्य घटस्थितान् १६६
देवाँल्लिङ्गे च पीठांशे पूर्ववत्पूजयेत्सुधीः
तत्र पश्चात्सुलग्ने तु वह्निं कुण्डेषु दीपयेत् १६७

सर्वमूर्तीन् सुसंपूज्य हुत्वा व्याहृतिभिस्ततः
हुत्वा स्विष्टकृतं चापि पूजयित्वाथ पावकम्  १६८
स्त्रुचा पूर्णाहुतिं दद्यात्सर्वात्महृदयेन तु
सर्वत्र मूर्तिपैः सार्धमथवात्र स्वयं गुरुः  १६९
पूर्णाहुतिं च सर्वत्र जुहुयात्पूर्वतः क्रमात्
गतो गर्भगृहं प्राप्य शिल्पिना सह देशिकः  १७०
तत्र ब्रह्मशिलामध्ये स्थापयेल्लक्षणान्वितम्
ततस्तल्लक्षणं चैव स्थानं तत्स्थापनोचितम्  १७१
क्रमेण गदतो मत्तः शृणु सर्वं जनार्दन
उत्तमा लिङ्गविष्कम्भद्विगुणेन तु विस्तृता  १७२
पादोनद्विगुणा मध्या भवेदर्धाधिकाधमा
विस्तारेण समोत्सेधा श्रेष्ठा मध्या तदर्धतः  १७३
तत्पादेन कृतोत्सेधा कन्यसी सा शिला स्मृता
तन्मध्ये लिङ्गविष्कम्भमानेनैव सुसंस्थितम्  १७४
चतुरश्रं समं कुर्याद्गर्तं तत्खातमुच्यते
ब्रह्मांशोत्सेधवस्वंशे व्योमांशार्धं तु तद्भवेत्  १७५
अथवाङ्गुलमानेन कल्पयेत्कल्पवित्तमः
पञ्चाङ्गुलं स्यात्तन्निम्नं लिङ्गे वै चोत्तमोत्तमे  १७६
हस्तेष्वन्येषु सर्वेषु स्यादर्धार्धाङ्गुलक्षयः
नवावटानि तन्मध्ये सूत्रेण सुमिते सुधीः  १७७
पदमध्यगतान्येवं कुर्यात् तत्तत्त्रियङ्गुलम्
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत्  १७८
विस्तारसमनिम्नानि तानि सर्वाणि कल्पयेत्
एवं तल्लक्षणं प्रोक्तं तत्स्थानं तु निगद्यते  १७९

द्वारमध्यं विनिश्चित्य तस्मात्सूत्रेण मध्यमम्
गर्भस्योपरि निश्चित्य तन्मध्ये कं विधाय च १८०
द्वारविस्तारमानं यदन्तर्गर्भगृहे स्थितम्
चतुरश्रं समं कृत्वा गर्भगेहस्य मध्यमे १८१
द्वाविंशैः प्राग्गतैः सूत्रैस्तत्संख्यैरुदगायतैः
एकत्र पिण्डितं तत्र चत्वारिंशच्चतुःशतम् १८२
सैकं च जायते व्यूहं पदानां तेषु मध्यमे
पदे नवपदं कुर्यात्सूत्रेण सुमितं ततः १८३
आग्नेयपदमारभ्य वायोः पञ्चपदं त्यजेत्
ब्रह्मसोमेशशक्राणां पदानां तु चतुष्टये १८४
मध्यसंधिस्थसूत्रे ये प्रागुदक्प्रवणे कृते
आगर्भं सम्यगास्फाल्य गैरिकाक्तेन रज्जुना १८५
सूत्रसंधिं स्फुटं ज्ञात्वा शिवसूत्रं तयोरपि
प्रागायतं भवेदन्यत्सोमसूत्रमिति स्मृतम् १८६
ब्रह्मस्थानमिति ख्यातं तत्स्थाने स्थापयेच्छिलाम्
यद्वद्ब्रह्मशिलामध्ये सूत्रसन्धिस्थितिर्भवेत् १८७
तद्वद्ब्रह्मशिला गर्भे स्थापनीया विचक्षणैः
स्थापितायां ततस्तस्यां शिलायां परिपालयेत् १८८
ततो मध्यावटे हैमं कूर्मं तत्र विनिक्षिपेत्
समं दृढतरं वृत्तं द्वारस्याभिमुखं यथा १८९
ततो रत्नानि धातूनि बीजानि च ततः परम्
गन्धं लोहं च वल्लीं च विन्यसेदवटेषु च १९०
माणिक्यं मध्यमे न्यस्य शक्रे मरकतं न्यसेत्
इन्द्रनीलं तु याम्यायां स्फटिकं वारुणे ततः १९१

वज्रं तु सौम्यदिग्भागे वैडूर्यं वह्निगोचरे
मुक्तां निर्ऋतिदिग्भागे पद्मरागं तु मारुते १९२
प्रवालमीशदेशे तु मध्ये पारदमेव च
ततो धातुमयं चापि गैरिकं च मनश्शिलाम् १९३
हरितालाञ्जने चैव माक्षिकाभ्रकमेव च
सिन्दूरं च क्रमेणैव प्रागादिषु विनिक्षिपेत् १९४
अथ मध्येऽवटे शालीन्यवमुद्गकुलत्थकान्
निष्पावं च क्रमेणैव महाशासु विनिक्षिपेत् १९५
प्रियङ्गुतिलनीवारसर्षपांश्च विदिक्षु च
ततश्चन्दनं मध्ये तु कुष्ठलोहलवङ्गकान् १९६
कक्षोलं च तथाशासु जातितक्कोलकौ तथा
काश्मीरं रोचनां चैव विदिक्ष्वपि च विन्यसेत् १९७
ततः काञ्चनरौप्ये च ताम्रं चैवारकूटकम्
त्रपुसीसायःकांस्यानि पित्तलं च क्रमान्न्यसेत् १९८
विष्णुक्रान्तिं सहादेवीं मुसलीं श्रियमेव च
भद्रामिन्द्रलतां दूर्वां गिरिकर्णीं च विन्यसेत् १९९
ततस्तस्यां प्रसन्नात्मा ब्रह्माख्यायां तु मध्यमे
आधारशक्तिं विन्यस्य गन्धाद्यैरर्चयेद्गुरुः २००
ततो मन्त्रमिमं चापि जपेद्व्यक्तं कृताञ्जलिः
त्वमेव परमा शक्तिस्त्वमेवासनधारिका २०१
शिवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा
विज्ञाप्यैवं ततो लिङ्गं मूर्तिपैः सह देशिकः २०२
अन्यैश्च बलवद्भिस्तु समुत्थाप्याहृतं ततः
अपनीय शिरस्यर्घ्यं तदा मूलेन दापयेत् २०३

ततो रथे समारोप्य शङ्खदुन्दुभिनिस्वनैः
गीतनृत्तसमायुक्तं कृत्वा धाम्नः प्रदक्षिणम् २०४
प्रविश्य गर्भगेहान्तमर्घ्यं शिरसि विन्यसेत्
ततोऽवतारयित्वा तु रथाल्लिङ्गं गतत्वरैः २०५
बलवद्भिर्नरैः पश्चाद्द्वारस्याभिमुखं तथा
न्यस्य ब्रह्मशिलापार्श्वे ततो लग्ने गुणान्विते २०६
पुत्रमित्रादिभिः सार्धं कर्त्रा च फलकाङ्क्षिणा
लिङ्गस्यानुप्रविष्टेन स्थितेनाग्रे प्रणम्य च २०७
प्रार्थ्यमानः प्रतिष्ठार्थं शिल्पिना सह देशिकः
सोष्णीषः सोत्तरीयश्च बद्धपञ्चाङ्गभूषणः २०८
स्थापयेदुदगास्यः सन्मन्त्रमीशानमुच्चरन्
निःशब्दं निश्चलं चापि सुस्थितं सुदृढं यथा २०९
ऐशानीं दिशमाक्रम्य स्थितं स्वर्गापवर्गदम्
लोकपुष्टिकरं चैव धनधान्य सुखावहम् २१०
तस्मात्सर्वप्रयत्नेन स्थापयेदीशदिग्गतम्
ऐन्द्रीं चैवस्वतीमाशां वारुणीमुत्तरामपि २११
आक्रम्य सुस्थितं लिङ्गं ब्राह्मणादिसुखावहम्
ततश्च पिण्डिकां तस्मान्मण्टपाद्वस्त्रवेष्टिताम् २१२
उत्थाप्य शक्तिमन्त्रेण रथे चारोप्य देशिकः
आनयेल्लिङ्गवद्गर्भे रथादप्यवतार्य च २१३
लिङ्गाग्रे विन्यसेत्पीठं ततः पार्श्वशिला न्यसेत्
चतस्रस्ताः समुद्दिष्टाश्चतुरश्रसमोच्छ्रयाः २१४
पिण्डिकां लक्षणोपेतां नन्द्यावर्तशिलोपरि
उदङ्नालं यथा स्थाप्य विश्लेषं लिङ्गपीठयोः २१५

जतुगैरिकसिक्थैस्तु सर्जगुग्गुलुसंयुतैः
गुलतैलसमायुक्तैः शर्कराचूर्णमिश्रितैः  २१६
पाकेन सान्द्रतां नीतैर्नीरन्ध्रं तैः प्रकल्पयेत्
यद्वा सर्जरसचूर्णं शर्कराचूर्णसंयुतम्  २१७
माहिषं नवनीतं च सममभ्युद्य देशिकः
तेन चावर्तयेद्विद्वान्संगतिं लिङ्गपीठयोः  २१८
धनधान्यांशुकाद्यैस्तु कर्त्रा तत्रापि तोषितम्
ततः शिल्पिनमुद्वास्य कृतकृत्यस्तदा गुरुः  २१९
मूर्तिपैः सहितः स्नातः शिवव्रततनुस्तदा
लिङ्गपीठस्थितानां च शुद्धिं कृत्वा क्रमेण तु  २२०
पुण्याहं वाचयित्वान्तर्गेहं संप्रोक्ष्य सर्वतः
लिङ्गं तदम्भसा प्रोक्ष्य सर्वात्मानं समुच्चरन्  २२१
गौरीगायत्रिमन्त्रेण पीठं संप्रोक्ष्य मन्त्रवित्
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं यथाविधि  २२२
संसाध्य वाग्यमी तत्र दत्त्वार्घ्यं लिङ्गमस्तके
ततो मण्टपमासाद्य सोष्णीषः सोत्तरीयकः  २२३
पञ्चाङ्गभूषणेनापि भूषितः शान्तमानसः
शिवशक्त्योस्तथा पूजां कृत्वा कुम्भस्थयोस्ततः  २२४
विद्येश्वराणामभ्यर्च्य शास्त्रोक्तं सम्यगाचरेत्
शङ्खदुन्दुभिनिर्घोषैर्गीतनृत्तैश्च मङ्गलैः  २२५
शैवं स्वयं समुद्धृत्य देशिकः सोऽधिरोप्य च
वामे दक्षिणहस्तेन कुम्भवक्त्रं विगृह्य च  २२६
मूर्तिपैः शक्तिकुम्भादीन्वहद्भिस्तद्वदेव सः
अनुयातो गुरुः कर्त्रा पुत्रबन्धुयुतेन च  २२७

प्रदक्षिणमुपावृत्य प्रासादं प्रविशेत्ततः
अग्रे क्रमेण संस्थाप्य स्थण्डिलोपरि तान्घटान् २२८
उत्तराभिमुखो भूत्वा कृत्वा मन्त्रात्मिकां तनुम्
उत्थाय पञ्चगव्येन सर्वात्मानं समुच्चरन् २२९
अभिषिच्य च तल्लिङ्गं पुनर्गन्धोदकेन च
ततश्चासनमप्यत्र लिङ्गमूले प्रयोजयेत् २३०
तत्र मूर्तिं समावाह्य लिङ्गे सादाशिवं तथा
विद्यादेहं च संकल्प्य ततः कुम्भेषु देवताः २३१
यथाक्रमेण संपूज्य चार्घ्यगन्धादिभिस्तथा
मूलमन्त्रं समुच्चार्य शिवकुम्भस्थितं शिवम् २३२
तस्मात्कुम्भात्समादाय मन्त्रमूर्तिं तदम्भसा
कूर्चाग्रनिःसृतेनैव न्यसेल्लिङ्गस्य मूर्धनि २३३
ततः कुम्भस्थतोयेन शनैः कालात्मनाणुना
अभिषिच्य ततश्चापि शक्तिमाधाररूपिणीम् २३४
तन्मन्त्रेणैव तत्कुम्भं तथा पीठे च विन्यसेत्
तस्या गायत्रीमुच्चार्य तेन कुम्भेन पिण्डिकाम् २३५
अभिषिच्य ततोऽष्टौ च चक्रवर्तिक्रमेण वै
पीठे शक्रादि संयोज्य स्वनामपदमन्त्रकैः २३६
अभिषिच्य ततः पश्चात्कुर्याद्गन्धाम्बुना सुधीः
अभिषेकं ततो दत्त्वा मूर्धस्वर्घ्यं च पञ्चसु २३७
तत्तन्मुखाणुभिर्मन्त्री ततो मन्त्रान्क्रमान्न्यसेत्
प्रणवं प्रथमं मूर्ध्नि कालात्मानं ततो न्यसेत् २३८
तदङ्गभूतान्मन्त्रांश्च तत्तदङ्गेषु विन्यसेत्
ईशानाद्यथ सद्यान्तं पञ्चब्रह्माण्यनुक्रमात् २३९

मध्ये पूर्वे ततो याम्य उत्तरे पश्चिमेऽपि च
स्वस्वमुद्राप्रयोगेण विन्यसेच्च कलास्ततः २४०
शक्तिभिः सह लिङ्गस्य स्थानेषूक्तेषु विन्यसेत्
तथा तत्रोच्छ्रिताङ्गुष्ठं मुष्टिं बध्वा तु विन्यसेत् २४१
लिङ्गाग्रे पीठिकायां तु शक्तिगायत्रिमभ्यसेत्
ततोऽङ्गुष्ठं शिवे कृत्वा शिवगायत्रिमभ्यसेत् २४२
एवं स्यान्मुक्तिकामस्य शिवशक्त्योस्तु संगतिः
विपरीतविधानेन भुक्तिकामस्य सा भवेत् २४३
पिण्डिका तु भवेच्छक्तिर्लिङ्गं तु परमेश्वरः
तयोर्यः क्रियते योगः सा प्रतिष्ठेति कीर्तिता २४४
एवं संस्थापिते लिङ्गे लिङ्गमुद्रां तु दर्शयेत्
ततो नमस्कृतिं बध्वा ततो लिङ्गं समर्चयेत् २४५
पाद्यमाचमनं चार्घ्यं पादवक्त्रशिरस्सु च
दापयेद्धृदयेनार्घ्यं शेषे च ब्रह्मपञ्चकैः २४६
नमःस्वाहानमोऽन्तैस्तु क्रमेणैवं जनार्दन
गन्धादिभिस्ततो मन्त्री शिवलिङ्गस्य मूर्धनि २४७
प्रणवेनाथ मूलेन ब्रह्मभिश्च सुनिर्गतैः
कालात्मानं तदङ्गैस्तु पूजयेदनुपूर्वशः २४८
कर्पूरागरुमिश्रेण चन्दनेन सपीठकम्
लिङ्गं पर्याप्तमालिप्य सदीपेन च धूपयेत् २४९
सुगन्धमाल्यवस्त्राद्यैर्हेमपट्टादिभिस्ततः
अलंकृत्य ततो धीमान्हविः साज्यं निवेदयेत् २५०
शुद्धान्नं पायसं गौलं मुद्गान्नं कृसरान्नकम्
सर्वोपदंशसंयुक्तं गुलखण्डाज्यसंयुतम् २५१

दधिस्वादुफलोपेतं पञ्चवक्त्रेषु दापयेत्
केवलं पायसं वापि शुद्धान्नं च यथाविधि २५२
पञ्चवक्त्रेषु दत्त्वाथ विना चराडं व्यपोह्य च
मुखवाससमायुक्तं ताम्बूलं च निवेदयेत् २५३
ततो विद्येश्वरांश्चैव पूर्वादिक्रमतो यजेत्
अथोमादीन्गरोशांश्च सौम्यादीन्नचस्य पूजयेत् २५४
तद्बाह्ये लोकपालांश्च पूर्वादारभ्य पूजयेत्
ईशानशक्रयोर्मध्ये ब्रह्मारां न्यस्य पूजयेत् २५५
रच्चोवारुरायोर्मध्ये विष्णुं विन्यस्य पूजयेत्
तद्बाह्येऽथ तदस्त्राणि वज्रादीनि च पूजयेत् २५६
पश्चिमद्वारहर्म्ये तु किञ्चिद्भेदोऽत्र दृश्यते
पश्चिमां दिशमारभ्य विद्येशानभितो यजेत् २५७
गरोश्वरानुमादींश्च सौम्यादारभ्य पूजयेत्
उपचाराणि सर्वाणि सद्योजाते प्रकल्पयेत् २५८
सद्योजातादिवक्त्राणां पञ्चानां जनार्दन
पश्चिमोत्तरयाम्येषु पूर्वे चोर्ध्वेऽप्यनुक्रमात् २५९
संस्थितिर्नियता तस्मादालये तु प्रतिष्ठिते
लिङ्गे तु हस्तपादानां कल्पना द्वारसंमुखात् २६०
तस्मात्सदाशिवे मूर्तिरेवं स्यादर्चनादिषु
एवं संपूज्य चार्घ्याद्यैर्दीपान्तं तु यथाक्रमम् २६१
स्वैः स्वैश्च नामभिर्मन्त्रैः कृत्वा चैवं प्रदच्चिणम्
सव्यापसव्यमार्गेण दत्त्वा पुष्पाञ्जलिं शिवे २६२
मूर्ध्ना प्रणम्य देवेशं भूपृष्ठपतितेन तु
प्रार्थयेन्मूर्तिपैरेवं स्तुत्वा नत्वा स्वदिक्स्थितैः २६३

सर्वमन्त्रादिरूप त्वं लोकानुग्रहकाम्यया
अत्र लिङ्गे महादेव संनिधिं कुरु सर्वदा २६४
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी
तावत्त्वयात्र देवेश स्थातव्यं स्वेच्छया विभो २६५
ज्ञानतोऽज्ञानतो वापि शास्त्रोक्तं च कृतं हि यत्
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर २६६
इति विज्ञाप्य देवेशं संनिधीकृत्य मुद्रया
संनिधाप्य ततो लिङ्गे शिवं निष्ठुरया क्रमात् २६७
निरोधयेत्तदा मन्त्री संनिधिं हृदयाणुना
निरोधनमघोरेण कुर्याद्वै शास्त्रचिन्तकः २६८
यजमानः फलापेक्षी शिवाग्रे संस्थितस्तदा
ससुतभ्रातृबन्धुश्च नत्वा देवं च देशिकम् २६९
भूयो भूयः प्रसन्नात्मा प्रार्थयेच्च ततो गुरुम्
त्वत्प्रसादादहं लोके जातोऽस्मिन्हि नरोत्तमः २७०
यत्त्वयाद्य कृतं कर्म लिङ्गसंस्थापनं प्रति
श्रेयसां परमं श्रेयो ममास्तु फलसाधनम् २७१
अनुगृह्य प्रसीदेति नत्वा नत्वाभिधाय च
प्रभूतां संपदं दद्याद्वित्तशाठ्य विवर्जिताम् २७२
गोभूहिरण्यवस्त्राद्यैर्हस्त्यश्वशयनासनैः
दासीदासगृहारामैरतिविस्तीर्णलक्षणाम् २७३
दक्षिणां गुरवे दद्यात् साधका यदि मूर्तिपाः
यदि वा पुत्रकास्तेषां पादं पादार्धमेव हि २७४
देशिकाद्दक्षिणा प्रोक्ता दैवज्ञवेदजापिनाम्
पादं चापि तदर्धं च तदर्धं च क्रमाद्भवेत् २७५

ततस्तान्देशिकादींस्तु यजमानः स भोजयेत्
मृष्टान्नमथ ताम्बूलं दत्त्वा तेषां क्रमेण तु २७६
स्वयं भुञ्जीत पश्चात्तु चतुर्थेऽहनि देशिकः
शिवाग्रे स्थण्डिलं कृत्वा विधिनानेन होमयेत् २७७
प्रणवेनाथ मूलेन ततः संवत्सरात्मना
समिदाज्यचरूणां तु प्रत्येकं शतसंख्यया २७८
हुत्वाहुतीस्ततश्चापि केवलाज्येन देशिकः
तदङ्गैर्ब्रह्मभिश्चापि कलामन्त्रैश्च होमयेत् २७९
प्रत्येकं शतमर्धं वा ततः शक्तेस्तु मूलतः
तदङ्गैश्चापि कुर्वीत होमं पूर्वोक्तसंख्यया २८०
एवं चतुर्थहोमं तु कृत्वा तस्मिन्दिने सुधीः
लिङ्गेऽथ स्नपनं कृत्वा सहस्रादिषु संभवम् २८१
चण्डेशं चण्डयोगेन शांकरे स्थापयेदथ
अलाभे प्रतिमायास्तु पीठे वा चण्डनायकम् २८२
प्रभूतं तु हविर्दत्त्वा देवायास्मै प्रदापयेत्
तस्मिन्नेवाहनीशस्य परितो धाम्नि कल्पयेत् २८३
परिवारस्थितिं तत्र विधिवद्देशिकोत्तमः
सप्ताहमपि पञ्चाहं त्र्यहमेकाहमेव वा २८४
विधानेनोत्सवं कुर्यादथवा यन्त्रलिङ्गतः
उत्सवं बलिदानेन विना तत्र प्रकल्पयेत् २८५
चतुर्थाहात्समारभ्य कुर्यादस्त्रोत्सवं क्रमात्
प्रतिष्ठादिनमारभ्य देशिकादींस्तु दीक्षितान् २८६
भोजनाच्छादनाद्यैस्तु तत्र माहेश्वरानपि
तदा दिनेषु सर्वेषु यजमानस्तु तोषयेत् २८७

कुर्यादवभृथस्नानं सर्वपापप्रणाशनम्
इति यः कारयेन्मर्त्यः प्रतिष्ठां लिङ्गपीठयोः २८८
तेनैव स्थापितं सर्वं जगत्स्थावरजङ्गमम्
सर्वदेवाश्च देव्यश्च तेन सम्यक् प्रतिष्ठिताः २८९
सर्वे यज्ञाः कृतास्तेन समग्रवरदक्षिणाः
तेन सर्वतपोदानतीर्थान्याचरितानि च २९०
एकविंशत्कुलोपेतः परत्र च शिवे पुरे
कल्पकोटिसहस्राणि कल्पकोटिशतानि च २९१
भुक्त्वा तु विपुलान्भोगान् शिवसायुज्यमाप्नुयात् २९२
इत्यजिताख्ये महातन्त्रे क्रियापादे लिङ्गप्रतिष्ठाविधिर्नाम अष्टादशः पटलः

## एकोनविंशः पटलः
## स्नानविधिः

ततः परमिदं वक्ष्ये स्नानं पापहरं परम्
तच्च षड्विधमुद्दिष्टं सर्वेषां कायशुद्धिदम् १
चतुर्विधानां शैवानां पूजनं च विशेषतः
वारुणं प्रथमं प्रोक्तमाग्नेयं तु द्वितीयकम् २
माहेन्द्रं तु तृतीयं स्याद्वायव्यं स्याच्चतुर्थकम्
मान्त्रं तु पञ्चमं प्रोक्तं षष्ठं मानसमुच्यते ३
तानि संक्षेपतो वक्ष्ये क्रमेणात्र जनार्दन
नदीनदतटाकेषु पल्वलप्लवनेषु च ४
दीक्षितस्योत्तमं स्नानं पुष्करिण्यां तु मध्यमम्
कन्यसं दीर्घिकाद्यासु गृहेऽश्रेष्ठमुदाहृतम् ५

प्रत्यूषे तु समुत्थाय शयनात्पूजयेत्सुधीः
आत्मन्यालोकयेज्जयोतिः परं तच्छिवरूपिणः ६
नमः शिवाय शर्वाय देवाय परमात्मने
सदैकरूपरूपाय विकल्परहिताय ते ७
संजप्यैवं बहिः कुर्यान्निजधाम्नः सहायवान्
निर्जनं देशमासाद्य कण्टकेन विवर्जितम् ८
छन्नमूर्धोपवीतं तु कृत्वा कर्णेऽथ दक्षिणे
उत्तराभिमुखः स्वस्थो रात्रौ चेद्दक्षिणामुखः ९
उपविश्याथ तत्रैव विण्मूत्रं तु विसर्जयेत्
तृणाद्यन्तरिते देशे वाग्यमी न निरीक्षयेत् १०
दिशो लिङ्गं मलं चापि न निष्ठीवनमाचरेत्
गोब्राह्मणाग्निनारीणां तथा देवालयस्य च ११
संमुखं परिहृत्यैव यतीनां च विशेषतः
कुशबालतृणोपेते गोशकृद्भस्मसंयुते १२
एकवृक्षसमोपेते कृष्टे वल्मीकसंयुते
महीपतिसमीपे च गर्ते प्रेतवने तथा १३
उद्याने च नदीतीरे कुर्यान्नावश्यकं सुधीः
सम्यगावश्यकं कृत्वा तृणजूट्या गुदं मृजेत् १४
लोष्टकेनाथवा नैतत्काष्ठपाषाणगोमयैः
ततस्त्यक्तमलश्चैव लिङ्गं वामेन पाणिना १५
संगृह्योत्थाय गत्वाथ शुद्धदेशं ततः सुधीः
तत्र हृत्वा मृदं शुद्धामुपरिष्टाद्व्यपोह्य च १६
शौचार्थं मृत्तिकां दक्षहस्तेनैव समाददेत्
सेतुवल्मीकवृक्षाम्बुग्रामधान्योत्करस्थिताम् १७

नियुक्तां चान्यशौचाय नाददीत कदाचन
जलाशयमनुप्राप्य तत्र शौचार्थमेव हि १८
क्षालयेत्प्रथमं तीरं तत्र मृत्संनिवेशयेत्
तया शौचं ततः कुर्याद्दक्षिणेनोद्धृताम्बुना १९
एकधा मृत्तिका मेढ्रे सप्तधापानदेशके
पञ्चधा वामपाणौ च सप्तधा चोभयोरपि २०
एकैकधा मृदं पश्चात्पादयोश्च द्वयोरपि
पुनरप्येकधा पाणौ मृत्तिकां प्रक्षिपेद्बुधः २१
ततचोत्थाय गत्वान्यदेशं तत्र समाचरेत्
आचम्य दन्तकाष्ठेन दन्तधावनमाचरेत् २२
दन्तकाष्ठमथो वक्ष्ये दन्तधावनसंमतम्
शिरीषबिल्वकारञ्जमपामार्गमथार्जुनम् २३
खादिरं मुक्तये भुक्त्यै जम्ब्वाम्रककुभोद्भवम्
सत्वक् सार्द्रमृजु श्रेष्ठं समच्छेदमनिन्दितम् २४
तदष्टाङ्गुलं मुक्त्यै च भुक्त्यै च द्वादशाङ्गुलम्
दन्तकाष्ठमिति प्रोक्तं दन्तानां मलशोधनम् २५
तालपत्रादिभिः पश्चात्तालुशोधनमाचरेत्
कृत्वास्यशुद्धिमाचम्य स्नानार्थं शुचिदेशजाम् २६
मृत्तिकामस्त्रतः खात्वा त्यक्त्वोर्ध्वे चतुरङ्गुलम्
अधःस्थितां तु संगृह्य क्षालिताम्भस्तटे ततः २७
शिरसा तां समादाय शिखया शोधयेत्ततः
कवचेन त्रिधा भज्य तासु चाप्येकया मृदा २८
आनाभि क्षालयेद्गुह्यमन्यया शस्त्रजप्तया
ततः सर्वाङ्गमालिप्य प्रविश्यान्तर्जले स्थितः २९

पिधायाक्षाणि पाणिभ्यां दीप्रकालानलप्रभम्
अस्त्रं हृदि तदा ध्यायन् संनिमज्ज्योपविश्य च ३०
स्नात्वोत्तीर्य पुरा ब्राह्मीं यजेत्संध्यां तु भौतिकः
नैष्ठिकश्चेद्यजेत्संध्यां केवलं चास्त्रसंज्ञिताम् ३१
प्राणायामत्रयं कृत्वा शिवास्त्राष्टशतं जपेत्
सर्वात्महृदयं मन्त्री नमस्कारान्तमुच्चरन् ३२
प्राञ्जलिस्त्रिरुपावृत्य चोपस्थानं समाचरेत्
अस्त्रसंध्या तु निर्दिष्टा शैवसाधारणा हिता ३३
सा संध्या विश्वलोकैकवन्द्या भवति भास्वरा
सा शैवी शक्तिरित्युक्ता संध्या सर्वैकसाक्षिणी ३४
प्रातः सारुणवर्णा स्यान्मध्याह्ने च सितप्रभा
श्यामा सायाह्नकाले तु संध्यावन्दनकर्मणि ३५
संध्याकाले कृतं कर्म यच्छुभं चाशुभं भवेत्
तत्सर्वं तन्नमस्काराद्वर्धते क्षीयतेऽपि च ३६
तस्मात्तद्वन्दनं कुर्याद्यदीच्छेच्छुभमात्मनः
ततो मृच्छेषमादाय कृत्वा वामकरे सुधीः ३७
प्रविश्यान्तर्जलं तत्र स्थितो दिनमुखंस्ततः
मृत्पिण्डं तु त्रिधा भज्य पूर्वमस्त्रेण मन्त्रवित् ३८
दक्षिणं तु शिवेनैव तनुत्राणेन चोत्तरम्
सप्तकृत्वस्ततो मन्त्री प्रत्येकमभिमन्त्रयेत् ३९
अस्त्रजप्तं क्षिपेद्दिक्षु वर्मजप्तं तनौ ततः
आलिप्य शिरसः पश्चाच्छिवजप्तं जले क्षिपेत् ४०
तत्र बाहुघ्नमात्रेण शिवतीर्थं प्रकल्पयेत्
हस्तयोः सूर्यसोमौ तु दक्षिणेतरयोः क्रमात् ४१

विन्यस्य कुम्भमुद्रां तु बध्वा मूर्धनि सेचयेत्
पञ्चब्रह्मषडङ्गैश्च स्मृत्वा देवं त्रियम्बकम् ४२
संनिमज्ज्य ततो मन्त्री प्रणवं सम्यगुच्चरन्
स्नात्वा राजोपचारेण सुगन्धामलकादिभिः ४३
समुत्तीर्य जलात्पश्चात्तत्तीर्थमुपसंहरेत्
तप्तेन शीतलेनाथ पवित्रेणाम्बुना शुचौ ४४
देशे स्नानं गृहे वाथ कुर्याद्वै विधिना सुधीः
शिरःप्रभृति चोन्मृज्य मृदुना शुद्धवाससा ४५
समन्त्रमाचमेद्भूयः परिधायाम्बरं शुचि
बद्धचूडोत्कुटासीनो जानुमध्यकरद्वयः ४६
आवेष्टितशिराः पादौ पाणी प्रक्षाल्य वाग्यतः
प्राग्वक्त्रो वाप्युदग्वक्त्रः सपवित्रकरस्तदा ४७
जले चैकं पदं न्यस्य स्थले चैकं पदं न्यसेत्
कृत्वा गोकर्णवद्धस्तं तेनोद्धृत्य ततो जलम् ४८
प्रकृतिस्थमसत्त्वं च फेनादिरहितं शुचि
माषमग्नपयो मन्त्रैरात्मविद्याशिवाणुभिः ४९
हृद्गं विप्रस्य निर्दिष्टं कण्ठगं स्यान्नृपस्य तु
तालुगं विट्सवर्णानां क्रमेणाबशनं भवेत् ५०
त्रिः पिबेद्ब्रह्मतीर्थेन द्विरोष्ठौ हेतिना मृजेत्
सर्वात्मना ततो मन्त्री खानि सर्वाणि संस्पृशेत् ५१
अङ्गुष्ठानामिकाभ्यां तु सव्यवामक्रमेण वै
नेत्रे स्पृष्ट्वा ततोऽङ्गुष्ठतर्जनीभ्यां च नासिकाम् ५२
कनिष्ठाङ्गुष्ठयोगेन मध्यमाङ्गुष्ठयोगतः
कर्णौ बाहू च संस्पृश्य नाभिमङ्गुष्ठकेन च ५३

तर्जनीमध्यमानामाकनिष्ठाभिः स्तनान्तरम्
अङ्गुल्यग्रैस्ततः सर्वैः शिरःस्पर्शं समाचरेत् ५४
एवमाचमनं कृत्वा हित्वा चैव पवित्रकम्
अन्यत्कृत्वा पवित्रं च कुर्यादत्राघमर्षणम् ५५
वामहस्ते जलं स्थाप्य स्रवदुत्क्षिप्य मस्तके
मन्त्रसंहितया धीमान्मार्जनं सम्यगाचरेत् ५६
दक्षहस्तस्थितं कृत्वा वामपाणेस्ततो जलम्
आघ्राय पूरकेणैव कृष्णं पापं विचिन्तयेत् ५७
रेचकेन पुनः पापमस्त्रेणाशु जलस्थितम्
ध्यात्वा भूमौ क्षिपेद्धीमांस्तज्जलं चास्त्रमन्त्रतः ५८
अघमर्षणमेवं स्यात् ततस्तर्पणमुच्यते
आचम्य विधिवद्भूत्वा सपवित्रकरस्ततः ५९
पुष्पदर्भतिलैश्चापि पृथगक्षतसंयुतैः
देवानृषीन्पितॄंश्चापि तर्पयेत्क्रमशो बुधः ६०
गृहीत्वाञ्जलिना पूर्वं सपुष्पं साक्षतं जलम्
देवानां वक्ष्यमाणानामङ्गुल्यग्रैश्च तर्पयेत् ६१
ब्रह्मविष्णू ततो रुद्रमीश्वरं च सदाशिवम्
सरस्वतीं ततो लक्ष्मीमुमां गौरीं मनोन्मनीम् ६२
भवादीनष्टमूर्तींश्च शक्तीर्वामादिकास्ततः
रुद्रान्वसूंस्तथादित्यान्प्रजेशं च वषट्कृतिम् ६३
इन्द्रादिलोकपालांश्च वज्रादीन्यायुधान्यपि
नवग्रहांस्तथार्कादींस्तर्पयेत्स्वस्वनामतः ६४
स्वाहान्तेन हृदा मन्त्री सधारेण यथाक्रमम्
मूलमन्त्रादिमन्त्रांस्तु सर्वानप्यथ तर्पयेत् ६५

ततः कण्ठोपवीती स्यादृषितर्पणकर्मणि
कृत्वा जलाञ्जलिं तेषां कुशाक्षतसमायुतम् ६६
आर्षेणैव तु तीर्थेन ऋषीणां तर्पणं भवेत्
अत्रिं क्रतुं वसिष्ठं च विश्वामित्रमतः परम् ६७
मरीचिं च पुलस्त्यं च तथैवागस्त्यमेव च
ओंकारादि स्वनाम्ना तु तर्पणं स्यान्नमोऽन्तकम् ६८
अपसव्योपवीती स्यात्ततश्च पितृतर्पणे
दक्षिणाग्रान्कुशान् भूमावास्तीर्याग्रेषु तर्पणम् ६९
तिलाक्षतसमायुक्तं कृत्वा तेषां जलाञ्जलिम्
अपसव्येन हस्तेन पितृतीर्थेन तर्पणम् ७०
सोमादिकान्पितॄन्सर्वान्स्वधा नम इति ब्रुवन्
तर्पयेत्तर्पयामीति पितृपत्न्यात्मजांस्तथा ७१
गणांश्च पितृसंबन्धींस्तर्पयित्वा ततः क्रमात्
स्वपितृनामगोत्राभ्यां तर्पयेत्पूर्ववत्सुधीः ७२
पितामहमतश्चापि प्रपितामहमेव च
पितामहीं ततश्चापि तर्पयेत्प्रपितामहीम् ७३
ततो मातामहं चापि मातुश्चापि पितामहम्
प्रपितामहं ततश्चापि तर्पयेन्मन्त्रवित्तमः ७४
ज्ञातीन्सखींस्तथाचार्यांस्तर्पयित्वा समाहितः
त्यक्त्वा पवित्रकं पश्चादाचम्य विधिपूर्वकम् ७५
पवित्रहस्तो भूत्वाथ कृत्वा चैव जलाञ्जलिम्
षडक्षरेण मन्त्रेण सूर्यस्याप्युदकं ददेत् ७६
जलस्नानमिति प्रोक्तं भस्मस्नानमथोच्यते
आग्नेयं तद्भवेत्स्नानं तच्च भस्म चतुर्विधम् ७७

चातुर्विध्यमिदं विद्धि कल्पं चाप्यनुकल्पकम्
उपकल्पमकल्पं च प्रथमाद्धीनमुच्यते ७८
रोगादिरहितायास्तु युवत्या गोस्तु यद्भवेत्
पयस्विन्यास्तु संगृह्य प्रणवेनाब्जपत्रके ७९
पलाशपत्रके वाथ भूतले पतितं तु वा
अधश्चोर्ध्वं परित्यज्य तत्तथा शुचि गोमयम् ८०
तेन पिण्डानि कुर्वीत सर्वात्मानं समुच्चरन्
एकान्ते शोषयित्वा तु निर्दहेच्छिववह्निना ८१
नित्याग्नौ वा शुचिर्धीमाञ्शिवमन्त्रं समुच्चरन्
कल्पमेवं समुद्दिष्टमनुकल्पमतः शृणु ८२
आरण्यं गोमयं पूतं चूर्णायित्वा नवे घटे
प्रक्षिप्य पूर्ववद्दग्धमनुकल्पमिति स्मृतम् ८३
अग्निदग्धे तु कान्तारे गोवासे वा गृहादिके
इष्टकामृद्घटादीनामापाके वाथ संस्थितम् ८४
गृहीत्वा भस्म गोमूत्रात्कृत्वा वै बद्धपिण्डितम्
संशोष्य पूर्ववद्दग्धमुपकल्पं च कीर्तितम् ८५
स्त्रीशूद्रादिजनैरन्यैर्विशुद्धे तु महीतले
दग्धं यत्तदकल्पं स्यात्तेषु चैकं चतुर्ष्वपि ८६
गृहीत्वा शुद्धपात्रेषु तन्निक्षिप्य जनार्दन
वस्त्रेणान्तरितं कृत्वा सितं केशादिवर्जितम् ८७
तेन प्रशस्यते स्नानमाग्नेयमधिकं गुणैः
प्रातर्मध्याह्नसायाह्नमध्यरात्रेषु सुव्रती ८८
जलस्नानोत्तरं पूर्वमनुत्तरमथोत्तरे
न देवसंनिधौ मार्गे न चाग्निगुरुसंनिधौ ८९

उद्धूलनं प्रकर्तव्यं तथाशुद्धे महीतले
आचम्य सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः ९०
सव्येन मुष्टिमादाय भस्मनां सुसमाहितः
तिसृभिर्धारणाभिस्तु विशोध्यैतज्जनार्दन ९१
षडङ्गेनाभिमन्त्र्याथ वामहस्ततले न्यसेत्
उद्धूलनं ततः कुर्यात्तेन कादि समाहितः ९२
ईशेनोद्धूलयेन्मन्त्री मुखे तत्पुरुषेण तु
हृदये घोरमन्त्रेण वामदेवेन गुह्यके ९३
पादयोः सद्यमन्त्रेण पृष्ठे सर्वात्मनाणुना
अस्त्रेणोद्धूलयेत्पश्चात्सव्यवामक्रमेण तु ९४
सर्वाङ्गानि समुद्धूल्य गत्वान्यत्र ततो बुधः
परिवर्त्य ततो वस्त्रं कौपीनं चाचमेत्सुधीः ९५
गृहिणां वारुणां स्नानमाग्नेयं ब्रह्मचारिणाम्
माहेन्द्रादिचतुष्कं तु यन्नैमित्तिकमेतयोः ९६
उद्धूलनविधिर्ह्येवं ब्राह्मणस्य शिवागमे
क्षत्रविट्छूद्रजातीनां पट्टपुण्ड्रं ललाटके ९७
त्रिपुण्ड्रं यच्चतुर्णां च वर्णानामपि योग्यकम्
षडङ्गुलसुविस्तीर्णं ब्राह्मणानां त्रिपुण्ड्रकम् ९८
नृपाणां चतुरङ्गुल्यं वैश्यानां तु त्रियङ्गुलम्
शूद्राणामपि सर्वेषां भवेद्द्व्यङ्गुलविस्तृतम् ९९
सवर्णाद्यनुलोमानां वैश्यवत्तु त्रिपुण्ड्रकम्
द्वात्रिंशत्संधिदेशेषु षोडशस्वथवा पुनः १००
कुर्यादष्टसु चाङ्गेषु सितेन भसितेन च
साम्बुना प्रथमं मूर्ध्नि ललाटे तु ततः परम् १०१

ततश्च हृदये न्यस्य दोर्द्वयेऽतः परं भवेत्
अंसयोश्च ततः कुर्यात्कर्णयोश्च ततो भवेत् १०२
गलमध्ये ततः कुर्यादथैवं पार्श्वयोर्द्वयोः
वामेतरक्रमेणैव कृकट्यां तु ततः परम् १०३
त्रिकयोश्च ततः कुर्यात्पश्चात्कूर्परयोरपि
मणिबन्धद्वये चाथ ततश्चापि कटिद्वयोः १०४
नाभौ कुक्षौ तथा पृष्ठ ऊर्वोरपि ततः परम्
जानुद्वयोस्ततः कुर्याज्जङ्घयोः पादयोरपि १०५
द्वात्रिंशत्संधयः प्रोक्ताः षोडशेष्वथ चोच्यते
के ललाटे च हृदये दोर्द्वयोः कण्ठमध्यमे १०६
कृकट्यां कर्णयोश्चैव पार्श्वयोर्नाभिदेशके
कूर्परद्वितये चैव मणिबन्धद्वये तथा १०७
षोडशस्थानमुद्दिष्टं स्थानाष्टकमतः शृणु
मूर्ध्नि देशे ललाटे च हृद्देशे दोर्द्वयोस्तथा १०८
कर्णयोरुभयोश्चैव गलमध्ये ततः परम्
एवं त्रिविध उद्दिष्टस्त्रिपुण्ड्रस्थाननिर्णयः १०९
एतेष्वेकतमं कुर्याद्गृहस्थः पापशोधनम्
ब्रह्मचारी त्विदं कुर्याद्भस्मोद्धूलनमुत्तमम् ११०
गृहस्थस्यापि तत्प्रोक्तं प्रायश्चित्तविधौ परम्
स्नानद्वयमिदं प्रोक्तं जलभस्मोपलक्षितम् १११
माहेन्द्रादिचतुष्कं यत्क्रमेण स्नानमुच्यते
आतपे वृष्टिसंयुक्ते प्राङ्मुखश्चोर्ध्वबाहुकः ११२
ईशानं तु जपेन्मन्त्रं गच्छेच्च पदसप्तकम्
स्नानं माहेन्द्रमित्युक्तं वायव्यमधुनोच्यते ११३

वायुना दिवि विस्तीर्णं रजो यद्गोकृतं महत्
अनुसृत्य तु तद्गच्छेज्जपन्पुरुषमुत्तमम्  ११४
यावच्छतपदं तु स्यात्स्नानं वायव्यमुत्तमम्
सद्यादिपरिपूतेन वारिणाभ्युक्षणं तु यत्  ११५
मूर्ध्नि तन्मान्त्रमुद्दिष्टं मानसं त्वधुनोच्यते
प्रणवस्य जपेनैव मानसेन प्रकीर्तितम्  ११६
अष्टोत्तरशतेनैव प्राणायामयुतेन च
मानसं स्नानमेवं स्यात्स्नानान्युक्तानि षण्मया  ११७
गृध्रवायससंस्पृष्टे श्वखरोष्ट्रकपोतकैः
ग्रामसूकरसंस्पृष्टे ग्रामकुक्कुटकैस्तथा  ११८
वीरहाव्रतिसंस्पृष्टे निर्माल्यस्य तु भोजने
रजस्वलान्त्यजप्रेतसूतिकापतितैरपि  ११९
अन्यैश्च लिङ्गिभिः स्पृष्टे वारुणं स्नानमाचरेत्
विण्मूत्ररेतःसंसर्गे दुर्भुक्तौ वमने तथा  १२०
नाभेरूर्ध्वं करौ हित्वा यदङ्गं तु मलादिभिः
दुष्येत्तत्र चरेत्स्नानं शेषं प्रक्षाल्य शुद्ध्यति  १२१
सुप्त्वा भुक्त्वा जलं पीत्वा कृत्वा चावश्यकं व्रती
शय्यादाववसाने च भस्मस्नानं समाचरेत्  १२२

इत्यजिताख्ये महातन्त्रे क्रियापादे स्नानविधिर्नाम एकोनविंशः पटलः

## विंशः पटलः

## अर्चनाविधिः

अथ नित्यार्चनं वक्ष्ये सर्वसिद्धिप्रदं नृणाम्

सर्वपापहरं चैव सर्वयज्ञोत्तमोत्तमम् १
आत्मार्थं च परार्थं च यजनं द्विविधं स्मृतम्
दीक्षितो गुरुणा तेन दत्तं लिङ्गं चलात्मकम् २
गृहीत्वा तत्र वान्यत्र क्षणिके स्थरिडलेऽथवा
जले वा प्रतिमायां वा मराडले चित्रकेऽपि वा ३
पटे वा हृदये वाथ भवेदात्मार्थमर्चनम्
शिवलिङ्गे स्वयंभूते लिङ्गे बाणार्चितेऽपि वा ४
गाणपे दैविके वाथ चार्षे वा मानुषेऽपि वा
मुखलिङ्गेषु सर्वेषु व्यक्तेष्वपि जनार्दन ५
प्रासादादिषु सर्वत्र स्थापितेषु बहुष्वपि
राज्ञा वा राजकल्पैर्वा जनैर्जानपदैस्तु वा ६
अनुभूय कृतां वृत्तिं क्रियते यद्यदर्चनम्
तत्परार्थमिति प्रोक्तमन्येषां फलदानतः ७
शिवाश्रितस्य तत्प्रोक्तं ब्राह्मणस्य शिवागमे
क्षत्रियादित्रयाणां च बाह्यानां न परार्थकम् ८
सवर्णाद्यनुलोमानां प्रोक्तमात्मार्थमुच्यते
द्वयोः परार्थयजनं शृणु वक्ष्ये जनार्दन ९
भवेदष्टप्रकारं तत्प्रकारस्त्वधुनोच्यते
उत्तमत्रितयेनाथ मध्यमत्रितयेन च १०
अधमद्वितयेनापि पूजैषा ह्यष्टधा स्मृता
अह्नि यामचतुष्के तु प्रतियामं विशेषतः ११
निशि यामचतुष्के च प्रतियामकृतार्चना
यथोक्तविधिना पूजा सा भवेदुत्तमोत्तमा १२
दिवा यामचतुष्केषु पूजनं च विशेषतः

रात्रौ च त्रितये कुर्याद्यार्चा सोत्तममध्यमा १३
अह्नि संधिचतुष्केषु रात्रिसंधिद्वयेऽपि च
षट्संधिषु कृता पूजा सा भवेदुत्तमाधमा १४
प्रातर्मध्याह्नसायेषु रात्रौ यामे द्वितीयके
चतुर्थे च कृता पूजा सा भवेन्मध्यमोत्तमा १५
अर्धयामार्चनाहीना सा भवेन्मध्यमध्यमा
प्रातर्मध्याह्नसायेषु या पूजा मध्यमाधमा १६
प्रातःकाले च साये च या पूजा साधमोत्तमा
एकधा तु कृता पूजा सा स्यादधममध्यमा १७
अधमाधमपूजा च नैव लिङ्गेषु दृश्यते
तस्मादष्टप्रकारोऽयमिति तन्त्रे विनिश्चितः १८
शुद्धा मिश्रा च संकीर्णा त्रिविधा सात्र कथ्यते
शुद्धा हविःप्रदानान्ता मिश्रा नित्योत्सवान्तका १९
संकीर्णा शुद्धनृत्तान्ता तासु पूजासु सर्वदा
प्रातर्मध्याह्नसायेषु या पूजा क्रियते जनैः २०
तां मिश्रां तु प्रकुर्वीत संकीर्णां वा विशेषतः
संपत्तावपि सर्वासु चोपसंध्यासु सर्वदा २१
मिश्रसंकीर्णयोः प्राप्तिर्नेष्यतेऽत्र जनार्दन
तासु शुद्धैव पूजा स्यादिति शास्त्रस्य निश्चयः २२
सूर्योदयात्समारभ्य यावद्यामं तु या कृता
पूर्वसंध्येति सा प्रोक्ता महासंध्या च सा भवेत् २३
तदूर्ध्वे चार्धयामेन या पूजा तु समर्पिता
सोपसंध्येति विज्ञेया मध्याह्ने यामतः कृता २४
मध्याह्नसंध्या सापि स्यान्महासंध्येति नामतः

तदूर्ध्वे चार्धयामेन या पूजा तु समर्पिता २५
सापि स्यादुपसंध्यैव चाह्नि यामचतुष्टये
महासंध्याद्वयं प्रोक्तमुपसंध्याद्वयं ततः २६
रात्रौ चास्तं समारभ्य यावद्यामान्तमर्पिता
पूजा सापि महासंध्या ह्यर्धयामं ततो भवेत् २७
ततश्चाप्यर्धयामेन तृतीयां परिकल्पयेत्
पञ्चनाडिकया पश्चाच्चतुर्थी परिकल्पयेत् २८
नाडिकापञ्चकं प्रोक्तमुदयात्पूर्वमेव हि
रात्रौ महती संध्या या भवेदेका ततो हरे २९
त्रिसंध्याश्चोपसंध्याः स्युरेवं पूजाक्रमो भवेत्
विभवे सति पूजासु क्रम एष उदाहृतः ३०
एवमष्टविधेष्वेषु यजनेष्वेकमाश्रयेत्
यत्र लिङ्गे यथा पूजा क्रियते विधिना पुरा ३१
तस्मिञ्जाते तु वैकल्ये प्रायश्चित्तं विधीयते
इति विज्ञाय यत्नेन विधिनैव समर्चयेत् ३२
प्रातरुत्थाय निर्वृत्तनित्यस्नानादिकोऽर्चकः
प्रदक्षिणमुपावृत्य प्रविश्याथ शिवालयम् ३३
धौतपादः समाचान्तः प्रासादाभ्यन्तरेऽथवा
द्वारपार्श्वे स्थितः पुष्पं ब्रह्मणेऽत्र विनिक्षिपेत् ३४
ततोऽनन्तासनायेति नमस्कारान्तमुच्चरन्
आसने सुखमासीन उदगास्यः प्रसन्नधीः ३५
स्मृत्वा प्राकारमस्त्रेण शिवधाम्नस्ततोऽपि तत्
तनुत्राणेन संछाद्य रक्षार्थं यज्ञकर्मणि ३६
आत्मशुद्धिं ततः कुर्याद् द्विविधा सा प्रकीर्तिता

आत्मनश्च शरीरस्याप्यात्मसंज्ञात्र कथ्यते ३७
तयोस्तु शुद्धिरित्यात्मशुद्धिरेवं प्रकीर्तिता
पवित्रपाणिः संसाध्य सामान्यार्घ्यं तु पूजकः ३८
पुष्पाक्षतसमोपेतं सामान्यार्घ्यमिति स्मृतम्
अभ्युक्ष्य तेन तोयेन स्वशिरोऽस्त्रं समुच्चरन् ३९
विध्युक्तं च ततः कुर्यात्त्रिपुण्ड्रं सितभस्मना
प्राणायामत्रयं पश्चाद्रेचकादिक्रमेण तु ४०
कृत्वान्तःसुषिरं ध्यायेदापादतलमस्तकम्
सुषुम्नामध्यगां तस्य बहिरन्तश्च संस्थिताम् ४१
स्मरेद्व्योमात्मिकां शक्तिं पुनः सुषिरमध्यमे
विद्युज्ज्वलन्तं हुंकारं संचिन्त्यायम्य चानिलम् ४२
तदूर्ध्वस्थे च हुंकारे चित्तमावेश्य मन्त्रवित्
रेचकान्ते ततस्तेन फडन्तेन विभेदयेत् ४३
ग्रन्थीन्हृत्कण्ठयोस्तालु भ्रूमध्यब्रह्मरन्ध्रजान्
ततः प्रतिनिवृत्तस्तु चैतन्यं पूरकेण तु ४४
हृदि संहृत्य तत्रस्थं सान्तबीजमयं हृदा
स्मृत्वा संपुटितं जीवं तनुं पुर्यष्टकान्वितम् ४५
हुंकारस्य शिखान्तस्थं सूक्ष्ममात्मानमव्ययम्
कृत्वा कुम्भकमूर्ध्वे तं रेचकेन प्रवर्तयेत् ४६
रन्ध्रैस्तैस्तु पुरा प्रोक्तैर्हुंकारोद्घातमन्त्रतः
ततः शिवे शिखाग्रे तु शुद्धस्फटिकसंनिभे ४७
द्वादशाङ्गुलमात्रस्थेताररूपे निवेशयेत्
ध्यात्वा देहं स्वकं पश्चाद्दहेद्दै तनुरोमतः ४८
अग्निमण्डलमध्यस्थज्वालामालानुसन्ततैः

पादाङ्गुष्ठं समारभ्य मस्तकान्तं च मन्त्रवित् ४९
दग्धनिःशेषपापत्वाद्विमलीकृतमुज्ज्वलम्
सितभस्ममयं ध्यात्वा भूतशुद्धिं समारभेत् ५०
पञ्चभूतसमारब्धं शरीरं सर्वदेहिनाम्
तस्मात्तेषु कृता शुद्धिर्भूतशुद्धिरिति स्मृता ५१
भूतांशानां शरीरेऽस्मिन्मिश्रभावात्स्थितावपि
व्यवच्छेदस्थितिं तेषां शुद्ध्यर्थं परिकल्पयेत् ५२
शुद्धिर्मन्त्रात्मिका यस्मात्तस्मान्मन्त्रेण शोधयेत्
पृथ्व्यादिभिस्ततो बीजैः पञ्चभिश्च जनार्दन ५३
हृदयं च शिरश्चैव शिखा कवचमेव च
अस्त्रं च क्रमशस्त्वेतान्संयोज्य सुसमाहितः ५४
हुंफडन्तं ततस्तेषु पृथक्सर्वेषु योजयेत्
शोधयेत्पञ्चभूतानि स्मृत्वा तन्मण्डलादिकम् ५५
चतुरश्रं हरिद्राभं कठिनं वज्रलाञ्छितम्
निवृत्त्याख्यकलारूपं परमेष्ठ्यधिदैवतम् ५६
आजानु संस्थितं तच्च मन्त्रोद्घातैश्च पञ्चभिः
विशोध्य पार्थिवांशं तमाप्यशुद्धिरतः परम् ५७
चापाकारं सितं सौम्यं पद्मलाञ्छनलाञ्छितम्
प्रतिष्ठाशक्तिरूपं तं विष्णवीशं तोयमण्डलम् ५८
आनाभि संस्थितं तच्च चतुरुद्घाततः शुचिः
आग्नेयमण्डलं रक्तं त्र्यश्रं स्वस्तिकलाञ्छितम् ५९
क्रूरं विद्याकलारूपं रौद्रमाकण्ठसंस्थितम्
उद्घातैः शोधनं तस्य त्रिभिरेव प्रकीर्तितम् ६०
वायव्यं तु षडश्रं स्यात्कृष्णं षड्बिन्दुलाञ्छितम्

चलं शान्तिकलारूपमैश्वरं च ललाटके ६१
उद्घातद्वितयेनाथ तस्य शुद्धिरुदाहृता
आकाशमण्डलं वृत्तं पाण्डरं शूललाञ्छितम् ६२
निर्मलं शान्त्यतीताख्यं सदाशिवाधिदैवतम्
ललाटाद् द्वादशाङ्गुल्यामेकोद्घातस्ततः शुचिः ६३
विशुद्धभूतजातेऽस्मिन् देहे धातूंश्च शोधयेत्
त्वचोऽसृङ्मांसयोश्चैव मेदसोऽस्थ्नस्ततः परम् ६४
मज्ञायाः शुक्लकस्यापि शुद्धिं भूरादिसप्तभिः
मन्त्रैः कुर्याच्छिरोवक्त्रकण्ठहृद्गुह्यजानुषु ६५
पादयोः संस्थितान्मत्वा क्रमेणैव जनार्दन
एवं शुद्धं शरीरं तत् स्रवता परमामृतात् ६६
ताररूपाच्छिवादस्मादमृतेनाथ पूरयेत्
ब्रह्मरन्ध्रप्रविष्टेन चन्द्रबीजं समुच्चरन् ६७
ततश्च संस्मरेद्देहं विमलं भास्वरं तथा
अकलङ्को यथा पूर्णश्चन्द्रो नभसि निर्मले ६८
ईदृशीमनयोः शुद्धिं कृत्वा देहात्मनोरपि
शिवीभूते शरीरेऽस्मिञ्शिवीभूतस्य देहिनः ६९
आसनं हृदि निष्पाद्य साष्टपत्रं सकर्णिकम्
पद्मं तत्रस्थमात्मानमनामयमनाकुलम् ७०
बीजरूपं समानीय प्रस्फुरद्रश्मिमण्डलम्
व्योमस्थाद्द्वादशान्ताच्च शिवरूपं निवेशयेत् ७१
अमृतेनाभिषिच्यैनं ताररूपं ततः शिवम्
वौषडन्तेन मूलेन कराभ्यां व्योमसंस्थितम् ७२
आनीयामृतरूपं तमात्मतत्त्वोपरि न्यसेत्

करन्यासं ततः कुर्यात्तद्विधिश्चोच्यते मया ७३
तलके हस्तपृष्ठे च गन्धचन्दनलेपिते
परस्परावघर्षेण सुधूपेन प्रधूपिते ७४
शोधयित्वास्त्रमन्त्रेण मूलेनैव च देशिकः
हस्तयोः करशाखासु पर्वस्वङ्गुष्ठयोरपि ७५
विन्यसेत्पञ्चमं पश्चात्पुरुषादिचतुष्टयम्
तर्जन्याद्यासु विन्यस्य कनिष्ठान्तासु च क्रमात् ७६
ततः कनिष्ठिकाद्यासु पञ्चस्वङ्गुलिषु क्रमात्
हृदादिपञ्चकं न्यस्य तलयोर्नेत्रमेव च ७७
स्थितिन्यासस्त्वयं प्रोक्तो विपरीता तु संहृतिः
दक्षिणेतरयोः पश्चात्सूर्यसोमौ च हस्तयोः ७८
तत्तन्मन्त्रेण विन्यस्य मध्यमाभ्यां परस्परम्
कवचेनावकुण्ठ्याथ करकच्छपिकां ततः ७९
मुद्रां कराभ्यामाबध्य करन्यासं समाप्य च
अङ्गन्यासं ततः कुर्यान्मन्त्रैरेतैर्जनार्दन ८०
मूर्ध्नि वक्त्रे च हृद्देशे गुह्यदेशेऽथ पादयोः
ईशानादिक्रमेणैव विन्यसेत्पिण्डपञ्चकम् ८१
अङ्गुष्ठाग्रेण मूर्ध्नीशं विन्यसेद्बद्धमुष्टिना
मुखे तत्पुरुषं चैव तर्जन्यङ्गुष्ठयोगतः ८२
मध्यमाङ्गुष्ठयोगेन हृद्यघोरं ततो न्यसेत्
अङ्गुष्ठानामिकायोगाद् गुह्ये वामं च विन्यसेत् ८३
कनिष्ठाङ्गुष्ठयोगेन सद्योजातं तु पादयोः
पिण्डमन्त्रैरयं प्रोक्तः कलामन्त्रैस्तथोच्यते ८४
कलाः पञ्च चतस्रश्च ततोऽष्टौ च त्रयोदश

ततश्चाष्टौ समादिष्टाः कलाश्चेशादितः क्रमात् ८५
शक्तयश्च तथैव स्युः स्थानानि च तथैव हि
शशिनी चाङ्गदा निष्ठा मरीची ज्वालिनी तथा ८६
मूर्ध्नि मध्ये ततः पूर्वे दक्षिणोत्तरयोरपि
पश्चिमे च क्रमेणैव कलाभिः सह विन्यसेत् ८७
ईशानस्य कलाः पञ्च विन्यस्यैवमतः परम्
शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्च क्रमेण वै ८८
पूर्वे च दक्षिणे वक्त्रे चोत्तरे पश्चिमेऽपि च
एवं तत्पुरुषस्यापि कलाभिः सह विन्यसेत् ८९
तत्पुरुषकलान्यासे विशेषोऽत्र विधीयते
शान्त्यतीतकलायुक्तं प्रणवं चोर्ध्ववक्त्रके ९०
विन्यसेच्छिवलिङ्गे तु न शरीरे तदिष्यते
तमो मोहा क्षुधा निद्रा मृत्युर्मायाभया जरा ९१
एता घोरकलाशक्तिर्हृदि कण्ठेंऽसयोरपि
नाभौ कुक्षौ च पृष्ठे च वक्षस्यष्टकलायुताः ९२
विन्यस्याथ च वामस्य त्रयोदशकला अपि
शक्तिभिर्विन्यसेत्ताश्च क्रमेण कथयामि ते ९३
रजो रक्षा रतिः पाली कामा संयमिनी क्रिया
बुद्धिः कार्या तथा धात्री भ्रामिणी मोहिनी तथा ९४
एताः क्रमेण गुह्येऽथ मेढ्रे चोर्वोस्तथैव च
जान्वोश्च जङ्घयोश्चापि स्फिचोः कट्यां तथैव च ९५
पार्श्वयोश्च कलाभिस्तु विन्यस्याथ कलाष्टकम्
सद्योजातस्य मन्त्रस्य शक्तिभिः सह विन्यसेत् ९६
सिद्धिर्ऋद्धिर्द्युतिर्लक्ष्मीर्मेधा कान्तिः स्वधा धृतिः

शक्तयस्तु समुद्दिष्टाः स्थानानि क्रमतः शृणु ९७
पादौ पाणी च नासा च शिरो बाहू तथैव च
अष्टत्रिंशत्कला ह्येवं विन्यसेत्स्वस्वशक्तिभिः ९८
निजया मुद्रया पश्चादङ्गान्यङ्गेषु विन्यसेत्
हृदयं हृदि विन्यस्य शिरः शिरसि विन्यसेत् ९९
शिखायां तु शिखां न्यस्य कवचं च तथोरसि
नेत्रं नेत्रद्वयोश्चापि विन्यसेदक्षराणि च १००
अकारं मूर्ध्नि विन्यस्य चाकारं तु ललाटके
भ्रुवोरिकारमीकारं दक्षिणेतरयोः क्रमात् १०१
तथैवोकारमूकारं नेत्रयोरथ विन्यसेत्
ऋकारं तस्य दीर्घं च नासिकापुटयोर्न्यसेत् १०२
लृकारद्वितयं तद्वद् दन्तपङ्क्त्योश्च विन्यसेत्
उत्तरोष्ठे तथैकारमैकारमधरोष्ठके १०३
ओकारं चाप्यथौकारं कर्णयोः स्यात्ततः परम्
अंकाराःकारकौ चापि गण्डयोरथ विन्यसेत् १०४
कवर्गं दक्षिणे हस्ते चवर्गं च तथोत्तरे
टवर्गमुदरं न्यस्य तपवर्गौ च पार्श्वयोः १०५
यवर्गं दक्षिणे पादे शवर्गं वामपादके
ळवर्णं हृदये न्यस्य मूलमन्त्रं च विन्यसेत् १०६
इति मन्त्राक्षरन्यासैः कृत्वा विद्यामयीं तनुम्
परमीकरणं कृत्वा महामुद्राप्रयोगतः १०७
प्ररोच्य तेजसा देहमात्मशुद्धिं समापयेत्
ततः स्थानविशुद्ध्यर्थं नाराचास्त्रप्रयोगतः १०८
दिग्बन्धं पूर्वमापाद्य ततस्तालत्रयेण च

परितस्तालमस्त्रेण कवचेनावकुण्ठनम्  १०९
कुर्याद्यागगृहस्यैवं स्थानशुद्धिरुदाहृता
अन्तर्यागं ततः कुर्याद्धृदये च विधानतः  ११०
नाभौ होमविधानेन ललाटे ध्यानयोगतः
द्रव्यशुद्धिं ततः कुर्यादथ तच्छुद्धिरिष्यते  १११
प्रक्षालितेषु पात्रेषु सर्वेष्वस्त्रप्रयोगतः
पाद्यस्याचमनीयस्य तथार्घ्यस्य च मन्त्रवित्  ११२
पात्राणि वस्त्रपूतेन पूरयेद्गन्धवारिणा
मन्त्रसंहितया तत्तद्द्रव्याणि निक्षिपेत्  ११३
प्रणवेनाभिमन्त्र्यैतन्मुद्रयेद्धेनुमुद्रया
अवकुण्ठनमेतेषां कवचेनाथ कल्पयेत्  ११४
गन्धपुष्पादिकं यत्तद् द्रव्यं संप्रोक्ष्य चास्त्रतः
अभ्युक्ष्य कवचेनाथ मन्त्रसंहितयालभेत्  ११५
द्रव्यशुद्धिर्विधातव्या स्वशिरस्यर्घ्यसेचनम्
कृत्वास्त्रेणाथ मूलेन पुष्पमारोप्य मूर्धनि  ११६
ललाटे तिलकं कृत्वा चन्दनेन सुगन्धिना
मन्त्रशुद्धिं ततः कुर्यात्तच्छुद्धिरिह कथ्यते  ११७
मौनी भूत्वा शिवं ध्यात्वा मूलमन्त्रादिकानणून्
ओंकारदीपितान्सर्वान् नादान्तान् सम्यगुच्चरेत्  ११८
मन्त्रशुद्धिं विधायैवं द्वारदेवान्यजेत्ततः
सामान्यार्घ्यं गृहीत्वाथ सोष्णीषः सोत्तरीयकः  ११९
लिङ्गाग्रे तु वृषस्थाने तस्य पूजां समारभेत्
वृषगायत्रिमन्त्रेण सजलेनाभिषिच्य च  १२०
अर्घ्यं दत्त्वाथ शिरसि गन्धपुष्पादिभिर्यजेत्

प्रासादं संविशेत्तस्य दक्षिणे वामपार्श्वके १२१
नन्दिगङ्गे महाकालयमुने च क्रमाद्यजेत्
द्वारोर्ध्वे विघ्नराजं च भारतीं तस्य दक्षिणे १२२
कवाटयोश्च विमलं सुबाहुं दक्षिणान्ययोः
पूर्वं तारं समुच्चार्य ततो हृद्बीजमुच्चरन् १२३
ततो नाम चतुर्थ्यन्तं नमस्कारेण योजयेत्
मन्त्रेणानेन सर्वेषां कृत्वा यजनमुत्तमम् १२४
नाराचास्त्रप्रयोगेण प्रासादान्तः प्रविश्य च
पुष्पं प्रक्षिप्य चास्त्रेण पार्ष्णिघातत्रयं ततः १२५
कृत्वा दक्षिणपादेन तेनैवान्तः प्रवेशनम्
वामशाखाश्रयी भूत्वा देहलीमस्पृशंस्तदा १२६
देहल्यां विघ्ननाशार्थं पुष्पमस्त्रेण निक्षिपेत्
महाघण्टां ततोऽभ्यर्च्य हेतिना तेन ताडयेत् १२७
कृत्वा यवनिकां पश्चाद्देवाभ्याशप्रवेशने
ईक्षणेन ततो दिव्यान् पुष्पक्षेपेण नाभसान् १२८
भूमिष्ठान् पार्ष्णिघातेन विघ्नानुत्सारयेत्ततः
ततो लिङ्गान्तिकं गत्वा दत्त्वार्घ्यं लिङ्गमस्तके १२९
सामान्यार्घ्येण तां पूजां पूर्वसंध्यार्चितां ततः
गायत्र्याभ्यर्च्य निर्माल्यं पञ्चब्रह्म जपेद्बुधः १३०
कनिष्ठानामिकाभ्यां तु व्यपोह्य शिरसि न्यसेत्
तर्जनीमध्यमाभ्यां तु गृहीतं कुसुमं तु यत् १३१
अपनीय तु निर्माल्यं पिण्डकेशानदेशके
चण्डेशायेति निक्षिप्य बाह्ये चण्डाय दापयेत् १३२
अन्यदाभरणं प्रातर्मुक्त्वा द्रव्येण शोध्य च

प्रक्षाल्यास्त्रेण निक्षिप्य लिङ्गशुद्धिं समाचरेत्  १३३
आवर्तितजलद्रोण्यां चन्दनादिसुवासितम्
मन्त्रसंहितया वाथ पवित्रैरभिमन्त्रितम्  १३४
सुवर्णाद्यैर्यथालाभं कृतेन कलशेन तु
स्वशिरःपरिणाहेन शिवार्धपूरकेण वा  १३५
निश्छिद्रेणातिशुद्धेन शोधितेनास्त्रमन्त्रतः
गृहीत्वाथ जलं तेन लिङ्गशुद्धिं समाचरेत्  १३६
कुशोशीरादिमूलेन कृतेन सुदृढेन तु
कूर्चेन बहुशो लिङ्गं शोधयित्वा सपीठकम्  १३७
अस्त्रेण क्षालयेत्सम्यग्बहुशोऽशून्य मस्तकम्
यथा तथाभिषिच्याथ स्थलशुद्धिं च कारयेत्  १३८
आत्मानं च स्थलं द्रव्यं मन्त्रं लिङ्गं च पञ्चकम्
विशोध्यैवं ततो मन्त्री यजेल्लिङ्गे सदाशिवम्  १३९
पूजार्थमासनं तस्य कल्पयित्वार्चयेच्छिवम्
उत्तराभिमुखः पार्श्वे समासीनः स्थितोऽथवा  १४०
कल्पयेदासनं पीठे भवेदाधार आसनम्
आधेयस्तु शिवस्तत्र मूर्तिमानुपरि स्थितः  १४१
आसनं शब्दवत्प्रोक्तमर्थवत्स्यात्सदाशिवः
आसनं बिन्दुवत्तत्र नादवच्छिव इष्यते  १४२
एवं तदविनाभावः शिवशक्त्योः प्रतीयते
शक्तिरेव भवेद्दिव्यमासनं तद्वदामि ते  १४३
लिङ्गमूले यजेत्पूर्वं शक्तिमाधाररूपिणीम्
तदूर्ध्वेऽनन्तमभ्यर्च्य सिंहं तस्योर्ध्वतो यजेत्  १४४
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम्

आग्नेयादिषु कोणेषु सिंहरूपाणि कल्पयेत् १४५
शुक्लं रक्तं तथा पीतं कृष्णं तद्रूपमुच्यते
विपरीतमधर्मादि महादिक्षु चतुष्टयम् १४६
राजावर्तनिभं प्रोक्तमिन्द्रादिषु यथाक्रमम्
ज्ञानाग्रेऽधश्छदं यष्ट्वा यजेदूर्ध्वच्छदं ततः १४७
ऐश्वर्याग्रे च तावेतावधश्चोर्ध्वे च कल्पयेत्
मध्ये तमो रजश्चैव सत्त्वं चैव क्रमान्न्यसेत् १४८
एवं सिंहासनं यष्ट्वा ततो योगासनं यजेत्
अव्यक्तो नियतिः कालः कला चेति चतुष्टयम् १४९
पूर्वादिषु यजेन्मन्त्री तद्वर्णं प्रथमं सितम्
कृष्णं रक्तं तथा धूम्रं ततो विमलमर्चयेत् १५०
आत्मतत्त्वं तदूर्ध्वे तु विद्यातत्त्वं तदूर्ध्वतः
शिवतत्त्वं तदूर्ध्वेऽथ यष्ट्वा पद्मासनं यजेत् १५१
तन्मध्ये कर्णिकां यष्ट्वा दलेष्वष्टसु च क्रमात्
वामादिशक्तीरष्टौ चापीन्द्रादिषु समर्चयेत् १५२
मध्ये मनोन्मनीं देवीं ततचोपदलेषु च
सूर्यमण्डलमभ्यर्च्य तदूर्ध्वे मण्डलाधिपम् १५३
ब्रह्माणं पूजयित्वाथ केराग्रेषु च क्रमात्
सोममण्डलमभ्यर्च्य तदूर्ध्वे मण्डलाधिपम् १५४
विष्णुमभ्यर्चयेद्दिक्षु चतसृष्वेव मन्त्रवित्
मध्येऽग्निमण्डलं पश्चात्कर्णिकायां तदूर्ध्वतः १५५
मण्डलाधिपतिं रुद्रं सर्वोर्ध्वे च शिवासनम्
स्वनामपदमन्त्रैस्तानर्घ्यगन्धादिभिस्तथा १५६
पूजयेदासनीभूतदेवान्सर्वान्यथाक्रमम्

धरादिशुद्धविद्यान्ततत्त्वजातमयं ततः १५७
शिवासनं प्रकल्प्यैवं ततो मूर्तिं विचिन्तयेत्
पुष्पैरञ्जलिमापूर्य स्थिरधीः संयतेन्द्रियः १५८
बद्धपद्मासनां दिव्यां शुद्धस्फटिकसंनिभाम्
पञ्चवक्त्रशिरोयुक्तां सुप्रसन्नां स्मिताननाम् १५९
सूर्यकोटिप्रतीकाशां प्रत्यग्रोद्दामयौवनाम्
दशहस्तां पिशङ्गोर्ध्वजटाचूडविराजिताम् १६०
प्रतिवक्त्रं लसत्तारशक्तित्रितयलोचनाम्
ज्ञानचन्द्रकलाचूडां सर्वकारणकारणाम् १६१
दक्षिणैरभयं शूलं परशुं खड्गमेव च
वज्रं तथेतरैर्हस्तैः पाशं नागाङ्कुशौ तथा १६२
वह्निं घण्टां क्रमेणैव वहन्तीं पारमेश्वरीम्
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् १६३
विद्याम्बरधरां रम्यां दिव्यस्रग्गन्धलेपनाम्
मूर्तिं संचिन्त्य पूर्वोक्ते तस्मिन्नेव शिवासने १६४
तेनैव पुष्पाञ्जलिना मन्त्रेणानेन पूजकः
आवाहयेत्ततो मूर्तिमन्त्रं शृणु जनार्दन १६५
तारं पूर्वं समुच्चार्य हृद्बीजं च ततस्त्रिधा
शिवमूर्तिपदं पश्चाच्चतुर्थ्यन्तं ततो हरे १६६
नमस्कारेण संयुक्तं मूर्तिमन्त्रमुदाहृतम्
एवं मूर्तिं समावाह्य ततः स्फटिकसंनिभे १६७
न्यसेदीशानमूर्ध्वास्ये कर्णिकारसमद्युतौ
पुरुषे पुरुषं चैव भिन्नाञ्जनसमप्रभे १६८
अघोरे बहुरूपं च जपाकुसुमसंनिभे

वामे वामं ततो मन्त्री कुन्दचन्द्रसमद्युतौ १६९
पश्चिमे विन्यसेन्मन्त्री सद्योजातं समुद्रया
अष्टत्रिंशत्कलान्यासमपि पूर्ववदाचरेत् १७०
विद्यामयीं ततः कुर्यात्तनुं तां पारमेश्वरीम्
तदर्थं मन्त्रमुद्दिष्टमिदमेवं जनार्दन १७१
द्वादशान्तं समुच्चार्य ततो हृद्बीजसंपुटम्
हौंकारमपि तस्यान्ते विद्यादेहपदं सुधीः १७२
चतुर्थ्यन्तं समायोज्य नमस्कारपदं पठेत्
अनेन मन्त्रवर्येण दत्तेऽर्घ्ये शिवमस्तके १७३
भवेत्सर्वसुराराध्या तनुर्विद्यामयी तदा
ततोऽप्यञ्जलिमापूर्य पुष्पैर्विकसितैः शुभैः १७४
ततो हृत्पद्मसुषिरे बिन्दुस्थानस्थितं शिवम्
परमात्माभिधानं तं परात्परतरं प्रभुम् १७५
द्वादशान्तेन संयोज्य वाच्यवाचकभावतः
चिन्मात्रं सर्वभूतस्थं सर्वकारणकारणम् १७६
ध्यात्वा प्राणपथानीय ततो लिङ्गस्य मूर्धनि
मूलमन्त्रं समुच्चार्य सद्योजातपुरःसरम् १७७
तेनैव पुष्पाञ्जलिनावाहन्या मुद्रया सुधीः
आवाह्य स्थापनादीनि ततः कर्माणि कारयेत् १७८
सर्वदा संस्थितस्यापि शिवस्यावाहनक्रिया
लिङ्गमूर्तौ तु या नित्यमाविर्भावाय सा भवेत् १७९
आविर्भूतं तु वामेन स्थापन्या स्थापयेत्ततः
बहुरूपेण मन्त्रेण संनिधीकृत्य मुद्रया १८०
संनिधानं ततश्चापि पुरुषेण निरोधयेत्

निष्ठुरां दर्शयित्वाथ पुष्पमीशानमुच्चरन् १८१
दत्त्वा स्वागतमुद्दिश्य ततः पाद्यं तु पादयोः
मुखेष्वाचमनं दद्यादर्घ्यं शिरसि विन्यसेत् १८२
सद्येन बहुरूपेण पञ्चमेन यथाक्रमम्
ततश्च घण्टां संताड्य हृत्वा यवनिकामपि १८३
ततस्तु देवदेवेशं सर्वात्महृदयेन तु
मन्त्रसंहितया चैव पवित्रैश्चाभिषेचयेत् १८४
पञ्चगव्यविधानेन पञ्चगव्याभिषेचनम्
सर्वात्महृदयेनैव कृत्वा पश्चाज्जनार्दन १८५
शुद्धोदेनाभिषिच्याथ शिवगायत्रिमुच्चरन्
शालिगोधूमनीवारयवमाषादिपिष्टकैः १८६
लिङ्गमालिप्य बहुशः सहवेदिकया क्रमात्
रूक्षयित्वाभिषिच्येशं शुद्धोदेन पुनः पुनः १८७
लक्ष्म्यामलकयोस्तद्वत्क्षोदेनालिप्य मन्त्रवित्
अभिषिच्याथ तोयेन ततश्चापि हरिद्रया १८८
आलिप्य गन्धतोयेन पवित्रैरभिषेचयेत्
मुखेष्वाचमनं दद्यात्तत्तन्मन्त्रमुदाहरन् १८९
स्थलशुद्धिं ततः कुर्यात्कृत्वा यवनिकां बुधः
महाघण्टाप्रहारेण दत्त्वार्घ्यं लिङ्गमूर्धनि १९०
प्रणवेन ततो मन्त्री कार्पासमयवाससा
उन्मृज्यापनयेद्वारि लग्नं तल्लिङ्गपीठयोः १९१
दुकूलपट्टदेवाङ्गकार्पासादिषु संभवम्
वस्त्रं प्रधूपितं दद्याद्धेमाम्बरमथोपरि १९२
चन्दनागरुकर्पूरैः श्लक्ष्णपिष्टैः सकुङ्कुमैः

लिङ्गं पर्याप्तमालिप्य केवलं चन्दनेन वा १९३
प्रणवेन सकृद्दत्त्वा शिरःस्वर्घ्यं सपुष्पकम्
मूलमन्त्रेण देवेशं पूजयेल्लिङ्गमूर्धनि १९४
तत्रैव पञ्चमेनाथ पुरुषाख्येण पूर्वतः
दक्षिणे बहुरूपेण वामदेवेन चोत्तरे १९५
सद्योजातेन मन्त्रेण पश्चिमेऽप्यथ पूजयेत्
आग्नेय्यां हृदयं पश्चादैशान्यां तु शिरो यजेत् १९६
नैर्ऋत्यां तु शिखां यष्ट्वा वायव्यां कवचं यजेत्
दक्षिणेऽस्त्रं तु संपूज्य नेत्रमीशानगोचरे १९७
पूजायामर्घ्यदानं स्यात्प्रथमं तदनन्तरम्
गन्धं पुष्पं च धूपं च दीपं दद्याद्यथाक्रमम् १९८
सोपवीतं ततो दद्याद्भूषणं सर्वमेव हि
सुगन्धपुष्पमालाभिरलंकारं प्रयोजयेत् १९९
आमन्त्रणहविः पश्चाद्दद्यादभिमुखे मुखे
आदाय च महाघण्टां ताडयित्वा शिवाग्रतः २००
हविःप्रदानकालेऽपि दत्त्वा चाचमनीयकम्
हृदयेनाथ संप्रोक्ष्य हविरस्त्रं समुच्चरन् २०१
नाराचास्त्रप्रयोगेण चतुर्दिक्षु कृतेन वा
प्ररोच्य चामृतीकृत्य मुद्रया धेनुसंज्ञया २०२
पुष्पहस्तो हविर्दद्यान्मूलमन्त्रं समुच्चरन्
तदनन्तरतो नीत्वा निश्वासानां तु पञ्चकम् २०३
दत्त्वा चाचमनं तत्र हृदयेन ततोऽर्चयेत्
चण्डेशाय विसृज्याथ ताम्बूलं तु हृदा ददेत् २०४
ततश्च घण्टानादेन हृत्वा यवनिकामपि

धूपदीपौ तदा दद्यात्तयोर्विधिरथोच्यते  २०५
निर्धूमज्वलदङ्गारं धूपपात्रोदरे हृतम्
दह्यमानेन धूपेन दद्याद्धूपं स च त्रिधा  २०६
धूपः कृष्णागरूद्भूतः कर्पूरेण प्रशस्यते
शीतारिर्वात्र धूपाय सघृतो वाथ गुग्गुलुः  २०७
दीपस्तु गोघृताक्तेन भवेत्कर्पूरवर्तिना
धूपदीपप्रदाने तु घण्टां वामेन वादयेत्  २०८
धूपमस्त्रेण संप्रोक्ष्य तन्मन्त्रेण प्रदापयेत्
दीपं चापि तथा दद्याद्दीपपात्रेण दीपयेत्  २०९
व्यजनं दर्पणं चैव च्छत्रचामरमेव च
हृन्मन्त्रेण क्रमाद्दत्वा स्तोत्रैः स्तुतिसमन्वितैः  २१०
गीतनृत्तैश्च सातोद्यैर्जयशब्दादिमङ्गलैः
तोषयेद्देवदेवेशं लिङ्गस्थं भुवनेश्वरम्  २११
ततो हविःप्रदानं स्यात्पञ्चवक्त्रेषु चैव हि
ईशानके तु शुद्धान्नं गौलं तत्पुरुषे तथा  २१२
कृसरं दक्षिणे वक्त्रे मुद्गान्नं च तथोत्तरे
पश्चिमे पायसं चैव स्वस्वनाम्ना समाहितः  २१३
दापयेत्स्वस्वदिग्भाग ईशानस्याग्रके भवेत्
अलाभे पञ्चहविषामग्रे शुद्धान्नमुच्यते  २१४
ततो बलिप्रदानं स्याद् वृषेन्द्रस्य च नन्दिनः
महाकालस्य च द्वारि ततो बाह्ये बलिं क्रमात्  २१५
परिवारविधौ प्रोक्ता ये देवास्तु मया हरे
तेषां शुभ्रोत्तरीयेण पुत्रकेणैव दापयेत्  २१६
ताम्बूलं च ततो दद्यान्मुखवाससमन्वितम्

सामान्यार्घ्यं गृहीत्वाथ कुर्यादावरणार्चनम् २१७
अनन्तेशं च सूक्ष्मं च शिवोत्तमं चैकनेत्रकम्
एकरुद्रं त्रिमूर्तिं च श्रीकण्ठं च शिखण्डिनम् २१८
अग्रादारभ्य संपूज्य तथोमां चण्डमेव च
नन्दिनं च महाकालं वृषं विघ्नेशमेव च २१९
महासेनं च भृङ्गीशं वामादारभ्य पूजयेत्
अथेन्द्राग्नी यमं चैव निर्ऋतिं वरुणं तथा २२०
वायुं सोमं तथेशानमनन्तं कमलासनम्
पूजयित्वाथ वज्रं च शक्तिं दण्डं तथैव च २२१
खड्गं चैव तथा पाशं सृणिं पश्चाद्गदामपि
त्रिशूलं पद्मचक्रे च स्वदिग्भागे तु पूजयेत् २२२
पद्ममिन्द्रेशयोर्मध्ये ब्रह्मबाह्ये समर्चयेत्
रक्षोवरुणयोर्मध्ये चक्रं केशवबाह्यतः २२३
एवं पीठे क्रमाद्देवांश्चतुरावरणस्थितान्
बाह्ये बाह्ये क्रमेणैव पूजयित्वा ततः सुधीः २२४
पूर्वोक्तेन स्वनाम्ना तु सर्वेषामर्चनं भवेत्
महाघण्टानिनादेन हृत्वा यवनिकामपि २२५
सामान्यार्घ्यकरो भूत्वा प्रविश्य च महानसम्
आग्नेय्यां दिशि कुण्डे तु वेदाश्रे हस्तसंमिते २२६
त्रिमेखलासमायुक्ते दक्षिणे योनिसंयुते
प्रलिपेद्गोमयेनाथ चतुर्भिर्विष्टैर्युते २२७
उपविश्योत्तरास्यस्तु समिद्धं पावकं ततः
नमस्कृत्यार्घ्यमायोज्य परिषिच्य ततः क्रमात् २२८
दिक्पतीनर्चयेदर्घ्यगन्धाद्यैरनुपूर्वशः

ततः शिवासनं चाग्नौ पद्ममेकं प्रकल्पयेत् २२९
पद्मासनायेत्युच्चार्य नमस्कारसमन्वितम्
तत्र लिङ्गे यथा देवः सदाशिव इतीरितः २३०
तथा ध्यात्वात्र तं देवं पञ्चब्रह्माङ्गसंयुतम्
आवाहनादिकं सर्वं कृत्वा होमं समारभेत् २३१
संस्कारं सर्पिषः कृत्वा प्रोक्षयित्वा समिच्चरून्
व्याहृतिं सर्पिषा हुत्वा संपूज्य च पुनः शिवम् २३२
समिदाज्यचरूणां तु प्रत्येकं पञ्चविंशकम्
दशकं वाहुतीनां तु मूलेन जुहुयात्क्रमात् २३३
पञ्चब्रह्मशिवाङ्गैस्तु प्रत्येकं पञ्चसंख्यया
सर्पिषा जुहुयात्पश्चादनन्तादि यथाक्रमम् २३४
एकैकामाहुतिं दद्यादथवास्त्रसमन्विताम्
तिलेन चरुभिः कुर्यादाज्येन चरुणापि वा २३५
ततो होमं समाप्यैवं संपूज्य परिषिच्य च
अग्निधाम्नस्ततो मन्त्री प्रविश्याभ्यन्तरं ततः २३६
नित्योत्सवं ततः कुर्याद्यथाशास्त्रविनिश्चितम्
नित्योत्सवसमाप्तौ तु जपं कुर्यात्स्वशक्तितः २३७
त्रिविधेषु जपेष्वेकं मानसादिषु पूजकः
जपं कृत्वा समुत्थाय कृत्वा च त्रिः प्रदक्षिणम् २३८
सव्यापसव्यमार्गेण दद्याच्च चुलुकोदकम्
चुलुकोदविधिं वक्ष्ये तच्छृणु त्वं जनार्दन २३९
अर्घ्योदकं समापाद्य दक्षिणे हस्तसंपुटे
गन्धपुष्पाक्षतैर्देवं हृदि तं संनिवेश्य च २४०
पठेन्मन्त्रमिमं मन्त्री तच्छृणु त्वं समाहितः

गुह्यातिगुह्य गोप्ता त्वं गृहाणास्मत्कृतं जपम्  २४१
सिद्धिर्भवतु मे येन त्वत्प्रसादान्मयि स्थिरा
यत्किंचित्कर्म हे देव सदा सुकृतदुष्कृतम्  २४२
तन्मे शिवपदस्थस्य भुङ्क्ष्व क्षपय शंकर
शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत्  २४३
शिवो यजति सर्वत्र यः शिवः सोऽहमेव तु
एवं मन्त्रं समुच्चार्य स्वनाममूलमन्त्रतः  २४४
लिङ्गमूले समायोज्य क्षमस्वेति विसर्जयेत्
प्रातः संध्यां समाप्यैवमुपसंध्यां समारभेत्  २४५
द्वारदेवार्चनं कृत्वा प्रविश्यान्तर्गृहं ततः
तत्र शुद्धिषु सर्वासु लिङ्गशुद्धिं समाचरेत्  २४६
आसनावाहनं मन्त्रैर्ब्रह्माङ्गैः शिवमर्चयेत्
अथ मध्याह्नसंध्यायां विशेषोऽयं च कथ्यते  २४७
गव्याभिषेककाले तु पञ्चामृतविधिर्भवेत्
मध्याह्नादूर्ध्वसंध्यायां द्वितीयार्चनवद्भवेत्  २४८
रात्रौ प्रथमसंध्यायां द्वितीयायां च कथ्यते
विशेषोऽयं सुरश्रेष्ठ कुर्यादारात्रिकं तयोः  २४९
तस्यामेव तु पूजायां विशेषोऽयमुदीरितः
शक्तिस्थानात्तु तां देवीं सर्वालंकारसंयुताम्  २५०
गीतनृत्तादिभिर्युक्तैः शङ्खदुन्दुभिनिस्वनैः
आलयान्तर्गृहे लिङ्गवामपार्श्वे निधाय च  २५१
पूजयित्वाष्टपुष्पेण देवं देवीं च पूजकः
शिवाभ्यां तु हविर्दत्त्वा पूजामेवं समापयेत्  २५२
अथवा पादुके रम्ये स्वर्णादिभिर्विनिर्मिते

स्थलिकायां तु विन्यस्य तयोर्देवं समर्चयेत् २५३
शिरसा वाहयित्वा ते शङ्खदुन्दुभिनिस्वनैः
पिञ्छचामरसंयुक्ते शक्तिस्थानं समानयेत् २५४
शयने नितरां रम्ये शिवयोः परिकल्पिते
शिवया शिवमभ्यर्च्य पादुके वाममन्त्रवित् २५५
शयनाभ्याशके न्यस्य चक्रवर्त्युपचारतः
शिवयोश्च हविर्दत्त्वा तत्रापूपादिकं तथा २५६
गीतनृत्तादिभिश्चैव शङ्खदुन्दुभिनिस्वनैः
एवं रात्रौ द्वितीयायां पूजां सम्यक्समापयेत् २५७
तृतीयामुपसंध्यां च पूर्ववत्परिकल्पयेत्
चतुर्थायां तु पूजायां शङ्खदुन्दुभिनिस्वनैः २५८
कुर्यात्प्रबोधकं शंभोरतः पूजां समारभेत्
तत्काले स्थलिकायां तु पूर्ववत्पादुके तथा २५९
विन्यस्यातोद्यसंयुक्तमानीयान्तः प्रविश्य च
संपूज्योद्वासयेद्देवं लिङ्गे पूजार्थमव्ययम् २६०
तत्काले चात्मशुद्ध्यादीन्पूजकः संप्रयोजयेत्
पञ्चस्वप्युपसंध्यासु यदि वा स्नपनादिकम् २६१
हित्वा दत्त्वाष्टपुष्पं तु हविर्दत्त्वा समापयेत्
मूलेन मूर्तिमन्त्रेण षडङ्गैरपि च क्रमात् २६२
अर्घ्यानन्तरतः पुष्पं दत्त्वा स्यादष्टपुष्पिका
कालातिक्रमणे दोषो नैव ह्रासे तु विद्यते २६३
तस्मात्सर्वप्रयत्नेन काले काले समर्चयेत्
शुद्ध्यर्थं नाडिका प्रोक्ता नादिकैकाभिषेचने २६४
अर्चने च तथा प्रोक्ता तथालंकारकर्मणि

हविःप्रदाने चार्धा स्याद्बलिदाने तथैव च २६५
तथैवावरणार्चायां शेषं नित्योत्सवं भवेत्
एवं मिश्रेऽथ संकीर्णे हविरादिचतुष्टयम् २६६
कृत्वा नाडिकयान्यानि नृत्तान्तमुपकल्पयेत्
एवं कालविधिः प्रोक्तो महासंध्यात्रयस्य च २६७
पञ्चशुद्धिविधौ पूर्वमर्चालंकारकर्मणि
हविःप्रदाने सर्वत्र तथा चावरणार्चने २६८
ताम्बूलादिप्रदाने च कुर्याद्यवनिकां बुधः
स्नाने यवनिकोद्धारे हविर्दानान्तिमे तथा २६९
आरात्रिके बलौ तद्वन्नित्योत्सवविधावपि
कुर्यादातोद्यवाद्यं तु केवलं शङ्खनिस्वनम् २७०
हविरानयने चैव ताम्बूलानयने तथा
माल्याद्यानयने चैव भक्ष्यपानीययोस्तथा २७१
कारयेद्यजने नित्यमाचार्यः शास्त्रपारगः
परार्था स्यादियं पूजा चात्मार्थं तु जनार्दन २७२
एककाले द्विकाले वा त्रिकाले वा विधीयते
न द्वारपूजा तत्रोक्ता न चण्डेशनिवेदनम् २७३
नामन्त्रणहविस्तत्र न नित्योत्सवमेव हि
महाघण्टा च नोद्दिष्टा न तिरस्करिणीक्रिया २७४
शुद्धनृत्तविधिर्नोक्तो सूर्यं विघ्नं गुरुं तथा
संपूज्य यजनं कुर्यादात्मार्थं मन्त्रवित्तमः २७५
इत्यजिताख्ये महातन्त्रे क्रियापादे अर्चनाविधिर्नाम विंशः पटलः

## एकविंशः पटलः

## अग्निकार्यविधिः

अग्निकार्यमथो वक्ष्ये भोगमोक्षैकसाधनम्
हविषां हवनं त्वग्नावग्निकार्यमिति स्मृतम् १
पूजां गृह्णाति लिङ्गस्थो वह्निस्थो हविषा हुतम्
एक एव शिवस्तस्मादुभयत्र समः शिवः २
इति संचिन्त्य यत्नेन लिङ्गेऽग्नौ च शिवं यजेत्
इष्टकाभिः सुपक्वाभिरपक्वाभिरसंभवे ३
कुण्डं कृत्वाथ तत्कुण्डे होमं कुर्याद्विचक्षणः
त्रिमेखलं भवेत्कुण्डमेकमेखलमेव वा ४
विस्तारसमखातं च तस्य लक्षणमुच्यते
शतार्धशतहोमे तु मुष्टिरत्निमितं भवेत् ५
सहस्रायुतहोमस्य हस्तं हस्तद्वयं क्रमात्
लक्षे च दशलक्षे च चतुर्हस्तं च षट्करम् ६
कोटिहोमेऽष्टहस्तं स्यात्तस्मादूर्ध्वं न कारयेत्
सहस्रकोटिं वा तत्र होमयेदष्टहस्तके ७
पञ्चाङ्गुलं तु मुष्टिः स्याद्रत्निस्तु तिथिसंख्यया
मुष्टिमात्रस्य कुण्डस्य प्रथमार्धाङ्गुला मता ८
एकाङ्गुला तदूर्ध्वस्था तृतीया स्याद् द्वियङ्गुला
रत्निमात्रस्य कुण्डस्य प्रथमाङ्गुलसंमिता ९
मेखला द्व्यङ्गुलोर्ध्वा स्यात्तदूर्ध्वा तु त्रियङ्गुला
हस्तमात्रस्य कुण्डस्य प्रथमा द्व्यङ्गुला मता १०
द्वितीया त्र्यङ्गुला ज्ञेया तृतीया चतुरङ्गुला
द्विकरस्य तु कुण्डस्य त्रिचतुष्षड्भिरङ्गुलैः ११
मेखलात्रितयं कार्यं पूर्ववत्कुण्डसंविदैः

चतुर्हस्तस्य कुण्डस्य प्रथमा चतुरङ्गुला १२
रसाङ्गुला द्वितीया स्यादूर्ध्वा वस्वङ्गुला भवेत्
षट्करस्यास्य कुण्डस्य भवेदाद्या षडङ्गुला १३
अष्टाङ्गुला द्वितीया च तृतीया स्याद्दशाङ्गुला
अष्टहस्तस्य कुण्डस्य मेखलाष्टाङ्गुला मता १४
द्वितीया दशाङ्गुला ज्ञेया तृतीया द्वादशाङ्गुला
मुष्टिमात्रस्य कुण्डस्य योनिरर्काङ्गुलायता १५
वस्वङ्गुलविशाला च तथोष्ठेऽङ्गुलविस्तृता
शेषाणामङ्गुलाद् वृद्धिर्विस्तारायामयोरपि १६
मेखलालक्षणं प्रोक्तं कुण्डलक्षणमुच्यते
चतुरश्रं धनुर्वृत्तं पद्मं दिक्षु प्रकल्पयेत् १७
योनिं त्रिकोणं षट्कोणं वस्वश्रं च विदिक्षु च
चतुरश्रे तु कुण्डानि सर्वाण्यपि भवन्ति हि १८
पूर्वसूत्रं पुरा कृत्वा द्वितीयं चोत्तरायतम्
चतुरश्रं समं कृत्वा प्रमाणेन विनिश्चितम् १९
क्षेत्रे दशांशके तस्मिंश्चतुरश्रेंऽशमुत्तरे
विसृज्य दक्षिणे चापि भागमेकं परित्यजेत् २०
तयोर्मध्ये प्रमाणे तु सूत्रेण सुमिते ततः
उत्तरेऽङ्कितसूत्रे तु न्यस्यावष्टभ्य यत्नतः २१
दक्षिणे भ्रामयेदङ्काच्चापाकारं यथा भवेत्
ज्यारेखामुत्तरे कुर्याद् धनुष्कुण्डमिदं भवेत् २२
नन्दांशे चतुरश्रे तु ह्येकांशार्धं बहिर्नयेत्
मध्यार्धेन प्रमाणेन वर्तितं वर्तुलं भवेत् २३
वर्तुलं तु समाख्यातं चतुरश्रेऽष्टभाजिते

भागं न्यस्य चतुर्दिक्षु प्रत्येकं बाह्यतः सुधीः २४
तस्मान्मध्यं गृहीत्वाथ सूत्रेण सुमितं ततः
तयोर्मध्ये चतुर्दिक्षु लाञ्छयित्वा विचक्षणः २५
तत्रावष्टभ्य सूत्रं तु दिशासु चतसृष्वपि
भ्रामयेत्कुण्डपर्यन्तं पद्मकुण्डं तु तद्भवेत् २६
चतुर्दलमिदं पद्ममथाष्टदलमुच्यते
चतुरश्रे कृते तस्मिंश्चतुर्विंशतिभाजिते २७
एकांशं परितस्त्यक्त्वा जनयेच्चतुरश्रकम्
मध्यात्कोणं गृहीत्वा तु पश्चाद्दिक्षु च लाञ्छयेत् २८
दिक्ष्वेकादशकैः सूत्रैश्चतुर्भिश्चतुरश्रकम्
अपरं जनयेत्तत्र भवेदष्टदलाम्बुजम् २९
पद्ममेवं द्विधा प्रोक्तं योनिकुण्डमथोच्यते
चतुरश्रे समे तत्र चतुष्कोष्ठसमन्विते ३०
पश्चात्तत्कोष्ठयोर्मध्ये सूत्रेण सुमितं ततः
मध्यात्कोणं गृहीत्वाथ भ्रामयेदुभयोरपि ३१
क्षेत्रार्धावधिकं यावत्ततस्तत्क्षेत्रबाह्यके
पञ्चांशं प्राचि विन्यस्य तस्मात्पार्श्वद्वयोरपि ३२
सूत्रेण संगतिं कुर्याद्योनिकुण्डमिदं भवेत्
अश्वत्थपत्रवत्कार्यं तस्याग्रं चोत्तरं भवेत् ३३
त्रिकोणमथ वक्ष्यामि चतुरश्रे समे कृते
तस्य क्षेत्रस्य पञ्चांशं दक्षिणोत्तरयोर्न्यसेत् ३४
पार्श्वयोस्तु ततो मध्यान्मानसूत्रं विगृह्य च
निर्ऋतौ वायुदेशे च कुर्यान्मत्स्यद्वयं ततः ३५
मत्स्यद्वयविनिष्क्रान्तात्सूत्राद्वै दक्षिणोत्तरात्

दक्षिणोत्तरयोश्चापि पञ्चभागविवर्धनात्  ३६
आलिख्य पश्चिमां रेखां तन्मानेनैव दक्षिणे
उत्तरे चापि विन्यस्य सूत्रं प्राग्दिशि संगतम्  ३७
विलिखेत्तेन मानेन त्रिकोणं व्यज्यते स्फुटम्
कुण्डं त्रिकोणमुद्दिष्टं षडश्रमधुनोच्यते  ३८
वसुभागकृते क्षेत्रे दक्षिणोत्तरयोरपि
एकैकं भागमादाय बाह्ये कुण्डावधेस्ततः  ३९
तस्मान्मध्यं गृहीत्वा तु मत्स्यं कोष्ठचतुष्टये
कृत्वा क्षेत्रेषु तत्तेषु कुर्यात्षट्सूत्रसंगतिम्  ४०
एवं कृते षडश्रं तु कुण्डं व्यक्तमिदं भवेत्
षडश्रं कुण्डमुद्दिष्टमष्टाश्रमधुनोच्यते  ४१
चतुरश्रे कृते तस्मिंश्चतुर्विंशतिभागिके
एकांशं परितो न्यस्य जनयेच्चतुरश्रकम्  ४२
तस्य कर्णार्धमानेन प्रतिकोणं स्थितेन च
कोणानां पार्श्वयोः कुर्यादष्टौ चाङ्कानि तेषु च  ४३
अङ्कादङ्कगतैः सूत्रैः कोणच्छेदं तु कारयेत्
एवं कृतेऽष्टकोणं तत्कुण्डं भवति हि स्फुटम्  ४४
यादृशं तु भवेत्कुण्डं तादृशी मेखला भवेत्
मेखलोपरि योनिः स्याद्दक्षिणे पश्चिमेऽपि वा  ४५
मेखलानामधः कुण्डपर्यन्ते तद्गलो भवेत्
सर्वेषामपि तत्कार्यं परितोऽङ्गुष्ठमानतः  ४६
सुधया च प्रयुञ्जीत यदि पक्वेष्टकामयम्
अपक्वेष्टकया कुर्याद्यदि मृत्तिकया भवेत्  ४७
समा दृढतराः कार्या मेखलास्ताः प्रमाणतः

मेखलानां समुत्सेधं यत्प्रमाणं प्रकीर्तितम्  ४८
विस्तारं च ततस्तासां तन्मानेनैव कल्पयेत्
नित्याग्निकार्यकुण्डं तु चतुरश्रं प्रकल्पयेत्  ४९
अन्यत्र कुण्डक्लृप्तिस्तु तत्तत्कल्पोक्तमानतः
यदि वा स्थण्डिले होमं कुर्याद्वि सैकते शुचौ  ५०
सैकतं स्थण्डिलं कार्यं हस्तमात्रेण नान्यथा
उत्सेधमङ्गुलं तस्य समन्ताच्चतुरश्रकम्  ५१
गोमयालेपनं कृत्वा कुण्डे वा स्थण्डिले भवेत्
शिवेन प्रोक्षणं चाथ होमकर्माभिधास्यते  ५२
होमारम्भेषु कुण्डस्य वह्नेः स्रुक्स्रुवयोरपि
आज्यस्य चैव कुर्वीत तत्संस्कारश्च कथ्यते  ५३
असंस्कृतेषु तेष्वग्नौ हुतं भवति निष्फलम्
तस्मात्कुण्डादिसंस्कारं कुर्यान्मन्त्रेण देशिकः  ५४
निरीक्ष्यास्त्रेण तत्कुण्डं संप्रोक्ष्य नयनेन च
संताड्य च पुनस्तेन हेतिनाभ्युक्षयेत्ततः  ५५
खननं कवचेनैव तेनैवोत्कीर्य देशिकः
पूरयित्वा समीकृत्य हृन्मन्त्रेणाथ सेचयेत्  ५६
तेनैव कुट्टयेत्पश्चाद् वौषडन्तेन मन्त्रवित्
संमार्जनोपलेपौ च हेतिना तत्र कारयेत्  ५७
कुण्डार्चनं ततः कुर्यात्कवचेन तु मन्त्रवित्
निवृत्तिं पूर्वदिग्भागे प्रतिष्ठां दक्षिणे पुनः  ५८
विद्यां च पश्चिमे चैव शान्तिमुत्तरगोचरे
मध्ये च शान्त्यतीतां तु कलां विन्यस्य पूजयेत्  ५९
तस्य कुण्डस्य मध्ये तु रेखां पूर्वायतां हृदा

कृत्वा रेखात्रयं पश्चाद्दक्षिणोत्तरयोरपि ६०
तद्वत्कृत्वा पुनर्मध्ये रेखां तेनोदगायताम्
अस्त्रेण वा समालिख्य प्रोक्षयेत्तां शिवाम्भसा ६१
यच्चोत्तराग्रास्तिस्रस्ता रेखां पूर्वायतामपि
विलिखेत्कुण्डसंस्कारमेवं कृत्वाथ मन्त्रवित् ६२
तत्रैव संस्कृते कुण्डे वागीशीमग्निमातरम्
वागीश्वरं च पितरमावाह्य स्थाप्य चार्चयेत् ६३
हृन्मन्त्रेणैव गन्धाद्यैस्तयो रूपमिदं शृणु
वागीशी सा भवेद्गौरी वागीशः स्यान्महेश्वरः ६४
त्रिनेत्रं चतुर्भुजं देवं पद्मरागसमद्युतिम्
वरदाभयदं चैव शूलपाशधरं करैः ६५
वागीशीं पुण्डरीकाभां चतुर्हस्तां घनस्तनीम्
व्याख्यानपुस्तकाभ्यां तु कमण्डल्वक्षधारिणीम् ६६
एवं ध्यायीत तौ देवौ संस्कारोऽथ निगद्यते
हविर्भुजस्तु सूर्याश्मभवश्चारणिजस्तथा ६७
विप्रगेहोत्थितश्चापि श्रेष्ठो मध्यश्च कन्यसः
मृत्पात्रे ताम्रपात्रे वा कांस्ये वानीय चानलम् ६८
कुण्डस्य देशे विन्यस्य निरीक्ष्यैनं हृदा बुधः
प्रोक्ष्य नेत्रेण संताड्य हेतिनाथ हविर्भुजम् ६९
वर्मणाभ्युक्ष्य तत्राग्नौ क्रव्यादांशं परित्यजेत्
अस्त्रेण चाथ तत्रैव मूर्तिमन्त्रं समुच्चरन् ७०
वह्निद्वयैकीकरणं कृत्वाथ ब्रह्मपञ्चकैः
अभिमन्त्र्यावकुण्ठ्याथ कवचेन हविर्भुजम् ७१
मुद्रया चामृतीकृत्य गोस्तनाकारया ततः

पात्रेण अ हृदोद्धृत्य जानुभ्यामवनौ स्थितः ७२
भ्रामयित्वा त्रिधा कुण्डमाललाटात्समुद्धृतम्
वागीशीगर्भनाड्यां तु वह्निबीजमनुस्मरन् ७३
कुण्डमध्ये क्षिपेदग्निमात्मनः संमुखं यथा
ईशबीजमिति स्मृत्वा दत्त्वा चाम्बुलवं हृदा ७४
गर्भरक्षार्थमग्नेस्तु दर्भैराच्छादयेत्तनुम्
आदीप्य कवचेनाग्निं सद्योजातेन पूजितम् ७५
गर्भाधानं भवेत्पश्चाद्वामदेवेन पूजितम्
भवेत्पुंसवनं पश्चात्सीमन्ते शिरसार्चनम् ७६
घोरेण शिरसा वापि पूजयेद्वक्त्रक्लृप्तये
वक्त्रोद्घाटनकर्माथ शिखया निष्कृतिस्तथा ७७
जातकर्म नरेणाथ कवचेनापि पूजनम्
ततः कुण्डस्य परितः सेचनं हेतिनाचरेत् ७८
कुशास्तरणकर्मापि ततस्तेनैव मन्त्रवित्
इध्महोमं ततः कुर्यादस्त्रमन्त्रेण देशिकः ७९
विष्टरान्परिधींश्चैव प्रागादिष्वथ विन्यसेत्
त्रिंशद्दर्भदलैर्गाढं गृहीता बाहुमात्रिकाः ८०
वेणिका वेष्टिका वापि विष्टराः परिकीर्तिताः
तन्माना ऋृजवश्चार्द्राः सत्पालाशलतोद्भवाः ८१
अङ्गुष्ठपरिणाहेन युक्ताः परिधयः स्मृताः
पूर्वादिष्वथ तेनैव विष्टरेषु यथाक्रमम् ८२
ब्रह्माणं शंकरं विष्णुमनन्तं चापि पूजयेत्
स्वनामपदमन्त्रैस्तु रक्षार्थं हुतभुक्शिशोः ८३
एवं सुसंस्कृते वह्नौ ततः पित्रोर्विसर्जनम्

हृदयेन प्रयुञ्जीत ततः स्रुक्स्रुवयोरपि ८४
लक्षणोपेतयोरिध्म प्रक्षाल्य च पुनः पुनः
निरीक्ष्य हेतिना प्रोक्ष्य नेत्राणुना पिधाय च ८५
तनुत्राणेन चाभ्युक्ष्य गृहीत्वा हृदयेन च
प्रताप्याग्नौ कुशैः पश्चात्त्रिधा लेखनमाचरेत् ८६
कुशमूलेन तन्मूलं मध्यं मध्येन योजयेत्
अग्रमग्रेण संयोज्य ततो मूलादिषु क्रमात् ८७
आत्मविद्याशिवाख्यं तु न्यसेत्तत्त्वत्रयं बुधः
स्रुचि शक्तिं स्रुवे शंभुं विन्यसेच्च क्रमेण वै ८८
कवचेनावकुण्ठ्याथ गन्धाद्यैः पूजयेद्धृदा
दक्षिणे स्वस्य भागे तु कुशोपरि ततश्च तौ ८९
नमोऽस्तु शक्तिशंभुभ्यामित्युदीर्य निवेशयेत्
ततः कापिलमानीय ताम्रपात्रे स्थितं घृतम् ९०
निरीक्ष्यास्त्रेण संप्रोक्ष्य नेत्रेणाभ्युक्ष्य च क्रमात्
संताड्यास्त्रेण मन्त्रज्ञो गृहीत्वा हृदयेन तु ९१
आग्नेय्यां दिशि संस्थाप्य चैशान्यां चाप्यधिश्रयम्
कृत्वाग्नावथ सर्पिस्तद्योन्यामारोपयेद्धृदा ९२
कूर्चं तु द्विकुशाग्रेण ततः प्रादेशसंमितम्
अङ्गुष्ठानामिकाभ्यां तु गृहीत्वोभयपाणिना ९३
स्वाहान्तमुच्चरन्मन्त्री त्रिरुत्प्लवनमाचरेत्
ततः संप्लवनं चैव स्वाहान्तेन हृदा तथा ९४
अग्नेरभिमुखं पूर्वं द्वितीयं चात्मसंमुखम्
ततः पवित्रीकरणं कुशाग्रस्य निवेशनात् ९५
नीराजनं कुशाग्रेण दीपितेनाथ वह्निना

अवद्योतं तथा तस्य सर्पिषः परिकल्पयेत् ९६
शुक्ले कृष्णे च मध्ये च हृदये परिकल्पयेत्
अग्नेः सोमस्य चाप्यंशं तयोश्चापि त्रिधा स्मरेत् ९७
तत्र स्रुवेण होतव्यमाहुतीनां चतुष्टयम्
अग्नये त्वथ सोमाय प्रजानां पतये नमः ९८
इन्द्रायेति च स्वाहान्तं ततस्तदभिमन्त्रणम्
पवित्रैरणुभिः कृत्वाऽमृतीकृत्य हृदा बुधः ९९
कवचेनावकुण्ठ्याथ सर्पिष्येवं सुसंस्कृते
स्रुवेण घृतपूर्णेन वह्नेर्वक्त्राभिघारणम् १००
वक्त्रसंधानकर्माथ वक्त्रैकीकरणं ततः
स्वाहान्तेन हृदा हुत्वा पञ्चमेनाग्निमर्चयेत् १०१
हेतिना च ततश्चाग्नौ नामकर्म कृतं भवेत्
एवं सुसंस्कृते पञ्च संस्कारैर्जातवेदसि १०२
शिवाग्निस्त्वमित्यामन्त्र्य तत्राग्निमभिचिन्तयेत्
एकहृदयं द्विवक्त्रं च द्विनासं च षडक्षकम् १०३
त्रिमेखलं त्रिपादं च सप्तजिह्वाभिरावृतम्
चतुःशृङ्गं सुखासीनं जटामकुटमण्डितम् १०४
दक्षिणे च चतुर्हस्तं वामे चैव त्रिहस्तकम्
स्रुक्स्रुवौ शक्तिमग्निं च दक्षिणे चापरैः करैः १०५
तोमरं व्यजनं चैव घृतपात्रं तथैव च
वहन्तमभिचिन्त्यैवमग्निबीजेन पूजयेत् १०६
सद्योजातादिभिर्मन्त्रैः पञ्चभिः षड्भिरेव च
हृदयाद्यैः पृथक् पञ्च पञ्च चैवाहुतीः क्रमात् १०७
हुत्वा मूलेन मन्त्रेण वौषडन्तेन मन्त्रवित्

पूर्णाहुतिः स्रुचा कार्या यथाविधिपुरःसरम् १०८
ततोऽग्निं परिषिच्याथ व्याहृत्या होमयेद्बुधः
सद्योजातादिभिर्मन्त्रैराज्येनैकेन केवलम् १०९
एवं निष्पादिते वह्नौ कल्पोक्तं होममाचरेत्
होमारम्भेऽग्निरूपस्य हृदि देवं सदाशिवम् ११०
यथा लिङ्गे तथा ध्यात्वा कृत्वा चावाहनादिकम्
पूजयित्वाथ गन्धाद्यैर्होमकर्म समारभेत् १११
सर्पिषाथ समित्पूर्वात्कल्पोक्तं जुहुयात्ततः
हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ११२
अतिरक्ता बहुरूपा सप्तजिह्वा हविर्भुजः
हिरण्या वारुणे जिह्वा कनका मध्यमे स्थिता ११३
रक्ता वै चोत्तरा जिह्वा कृष्णा याम्यदिशि स्थिता
सुप्रभा पूर्वजिह्वा स्यादतिरक्तानले स्थिता ११४
बहुरूपेशदिग्भागे जिह्वास्थानमुदीरितम्
जिह्वेति यात्र निर्दिष्टा ज्वाला सा स्याद्धविर्भुजः ११५
इध्महोमो हिरण्यायां कनकायां घृतं भवेत्
रक्तायां तु यवादीनि कृष्णायां लाजपूर्वकम् ११६
सुप्रभायां तिलादीनि होमयेच्च यथाक्रमम्
सिद्धार्थमतिरक्तायामाद्यायां पत्रमेव च ११७
दधिमध्वादिकं तत्र चरुं सर्वासु बुद्धिमान्
होमयेत्फलभक्ष्यादिवस्तुजातं च मध्यमे ११८
आज्याद्यं यद् द्रवद्रव्यं स्रुवपूर्णप्रमाणतः
अन्नमक्षप्रमाणं स्याल्लाजा मुष्टिमितं भवेत् ११९
तिलसर्षपपूर्वाणां शुक्तिमात्रं विधीयते

अखण्डं पत्रजातीनां फलानां च यथोचितम् १२०
दध्नश्च शुक्तिमात्रं स्यात्कन्दमूलादि खण्डशः
कर्पूरादीनि गन्धानि माषमात्रं तु होमयेत् १२१
इन्धनानि च शुष्काणि जन्तुवर्ज्यानि साधयेत्
कुशाग्रान् कोमलानार्द्राञ्शुचिदेशसमुद्भवान् १२२
समित्कनिष्ठिकामात्रा द्वादशाङ्गुलदैर्घ्यका
रुद्रसंख्या समच्छिन्ना निर्व्रणा त्वग्युता तथा १२३
आर्द्रा च सरसच्छिन्ना पुनः शुष्का प्रशस्यते
एवं संपाद्य संभारान्होमकर्म समारभेत् १२४
होमार्थं स्रुक्स्रुवौ ग्राह्यौ तयोर्लक्षणमुच्यते
पलाशखदिराश्वत्थप्लक्षोदुम्बरचन्दनैः १२५
वैकङ्कतशमी बिल्वैर्मधूकपनसाम्रकैः
श्रेष्ठमध्याधमाः स्युस्ते स्रुक्स्रुवा होमकर्मणि १२६
षट्त्रिंशाङ्गुलसंमिता दृढतरा स्रुक् तेषु नेत्राङ्गुलं
कुम्भं साक्षमरुदिद्वधाङ्गुलकृतो दण्डस्ततो गण्डका ।
वेदाश्रा त्वथ वेदिका द्विगुणिता कण्ठोऽम्बरांशस्ततो
वक्त्रं स्यात्स्वरसंमितं तदधरे तारत्रिभागैकतः १२७
तारं दैर्घ्यसमं मुखे युगमितं कण्ठे ततो वेदिका
तारेण द्विगुणाश्रमानतबिलाखाता तदर्धार्धतः ।
तत्राग्न्याथ च गण्डका युगमितास्यार्धार्धहीनेऽपरे
दण्डः स्याद्रसभागनाहसहितः कुम्भं च दिङ्नाहतः १२८
युक्तं तद्घनमाश्रमाङ्गुलमितं वेद्यास्तु पृष्ठं ततः
सम्यक्पङ्कजपृष्ठवद्वसुदलं कृत्वा बिलस्याभितः ।
वेदाश्रं यवमात्रकोन्नतवृतिं वेत्राकृतिं कारयेद्

ञ्राज्यस्याथ बिलात्तु यावदधरं मार्गं कनिष्ठामितम्  १२९
वस्वङ्गुलैस्त्रिगुणितैः स्रुवदैर्घ्यमुक्तमृत्वङ्गुलं भवति तस्य तु मूलनाहम्
ञ्रास्यस्य नाहमपि मूलवदेव कुर्यात्कगठस्य नाहमुदितं सममर्धमेव १३०
नासापुटप्रतिमपुष्करमास्यनाहं कर्षाज्यपूरमनलाङ्गुलदैर्घ्यमुक्तम्
मूलात्क्रमेण कृशतामपि तद्गलान्तं कुर्वीत सर्वहवनेषु मनोज्ञरूपम् १३१
उक्तं स्रुक्स्रुवयोरेवं समासाल्लक्षणं मया
लक्षणं यदरगयादौ तदिदानीं विविच्यते  १३२
शम्यश्वत्थतरूद्भवा द्विगुणितैरर्काङ्गुलैरायता
विस्तारेण तदर्धमानसहिता तस्यार्धमानोच्छ्रया  ।
कर्तव्या ह्यरणिः षडङ्गुलततिं वृत्तालिनीं कारयेद्
उत्पत्त्यै ज्वलनस्य मध्यतिलकीभूतां तु तन्मध्यमे   १३३
मध्येऽर्काङ्गुलसंमितो भवति तन्नाहस्तदर्धाङ्गुलं
कृत्वा कीलमयोमयं दृढतरं तन्मूर्ध्नि संयोजयेत्  ।
तस्यार्धामरणीं तु मध्यसुषिरामर्काङ्गुलैरायतां
कुर्यादुक्ततरूद्भवां दृढतरां नाहेन वस्वङ्गुलाम्  १३४
एवं त्रीरयपि निष्पाद्य प्रक्षाल्य च पुनः पुनः
पञ्चगव्येन संप्रोक्ष्य प्रणवं समुदाहरन्  १३५
गायत्र्या तां समभ्यर्च्य मन्थानं प्रणवेन च
हृन्मन्त्रेण ततो विद्वान्पूजयेदुत्तरारणिम्  १३६
गोमयालेपिते देशे प्रोक्षितेऽथ शिवाम्भसा
कुशैरास्तरणं कृत्वा तत्र तामरणिं न्यसेत्  १३७

प्राक्पश्चिमगतं तस्यां मन्थानं विन्यसेद्धृदा
तस्योर्ध्वे योक्त्रमाधाय प्रणवेन समाहितः १३८
उत्तराभिमुखो भूत्वा गोवालकृतरज्जुना
त्रिवृता वल्कलोत्थेन शुद्धतन्तुभवेन वा १३९
मथ्नीयाद् दृढमाक्रम्य सर्वात्मानं समुच्चरन्
ज्योतिर्ज्योतिपदेनाथ संजातं जातवेदसम् १४०
ताम्रपात्रे शरावे वा संगृह्याग्निं गृहे क्षिपेत्
अरणीलक्षणं प्रोक्तम् १४१
अथ वह्नेः समासतः
शुभाशुभफलं वक्ष्ये निमित्तैर्बहुभिर्गुणैः १४२
हुतभुजि जलदशङ्खभेरिध्वनिमनुकुर्वति सर्वलोकपुष्टिः
भवति सततमूर्ध्वगेऽप्रयत्नादुदितशिखे परिमण्डते तथैव १४३
सततमुदितभूरिपुण्यगन्धे ज्वलितशिखे च हवींषि लेलिहाने
जगति भवति हि सदैव वृष्टिर्हुतभुजि भूसुरभूभृतां च तुष्टिः १४४
द्रुतकनकनिभेऽथ पद्मरागे मुषितजपासदृशे हुताशने तु
भवति हि यजतां सदा समृद्धिर्बहुधनधान्यकलत्रपुत्रभृत्यैः १४५
कमलकुमुदकुन्दचन्द्रहारैः सदृशरुचिः शुकपिच्छसंनिभो वा
सकलदुरितनाशमाशु कृत्वा जनयति वह्निरशेषवाञ्छितार्थम् १४६
छत्रचामरसरोजदर्पणस्वस्तिकैरथ रथेन वै पुनः
आकृतिं दधति पावके समां सिद्धिराशु यजतां प्रवर्तते १४७
प्रवाललाक्षारसचक्रतो वै गोरोचनाकुङ्कुमशक्रचापैः
मार्जारपारावतनेत्रकण्ठैस्तुल्यद्युतिः सिद्धिद एव वह्निः १४८
श्रुतिपथकटुकध्वनिप्रकीर्णः प्रकटितवर्मविपाटकध्वनिर्वा
परितो दुर्धरविष्फुलिङ्गयुक्तो दरितकरो यजतां समीरबन्धुः १४९

धूमदुर्दिनितयागमन्दिरे यत्नतोऽपि महता कृतोदयः
पापगन्धसहितोऽपि पावकः कार्यनाशकर एव देहिनाम् १५०
भृङ्गाञ्जनाम्बुधरहेतिसमानवर्णः सर्वैस्तु कृष्णकुसुमैः समुदीप्तवह्निः
वेतालसर्पसरमाखररूपभूतैराहुत्यनिष्टमसकृद्यजतां विधत्ते १५१
शुद्धः सिद्धिकरः प्रदक्षिणशिखश्चोर्ध्वं गतो पावकः
सह्यो भद्रमखण्डशैलसदृशः श्रीवर्धमानाकृतिः ।
वामावर्तशिखो लिहन्वसुमतीं विश्लिष्टकीलो मुहु-
र्मर्त्यानाकुलयन्करोति यजतामिष्टार्थविघ्नं सदा १५२
इत्यजिताख्ये महातन्त्रे क्रियापादे अग्निकार्यविधिर्नामैकविंशः पटलः

## द्वाविंशः पटलः

## अर्चनाङ्गविधिः

अथ वक्ष्येऽर्चनाङ्गानां द्रव्याणामिह निर्णयम्
स्नानोदकमुखानां तु तच्छृणु त्वं समासतः १
पञ्चभारैर्जलैः स्नानमुत्तमोत्तममुच्यते
अधमाधमं भारेण भारार्धह्रासतो भवेत् २
नवप्रकारमुद्दिष्टं स्नानाम्भस्तु जनार्दन
यथोक्तपञ्चगव्येन तथा पञ्चामृतेन च ३
कुशाम्भसा सुगन्धेन क्रमेणैवाभिषेचनम्
प्रातर्मध्याह्नसायेषु श्रेष्ठमित्यभिधीयते ४
प्रातर्मध्याह्नयोस्ताभ्यां मध्यमं समुदाहृतम्
प्रातस्तु पञ्चगव्येन स्नानं कन्यसमुच्यते ५
गोमूत्रं गोमयं क्षीरं दधि सर्पिर्यथाक्रमम्

षट्चतुस्त्रिद्विरेकैस्तु भागैर्योज्यं क्रमेण वै ६
कपिलायास्तु गोमूत्रं रक्ताया गोमयं भवेत्
कृष्णायाः क्षीरमुद्दिष्टं सिताया दधि चैव हि ७
धूम्रायास्तु घृतं ग्राह्यं पञ्चगव्योपपादने
सर्वं वा कपिलायास्तु नानावर्णयुजोऽथवा ८
तस्य योगं प्रवक्ष्यामि गोमयेनोपलेपिते
शिवाग्रे भूतले मन्त्री प्रोक्षयित्वा शिवाम्भसा ९
स्थण्डिलं कारयेच्छालिं प्रत्येकं प्रस्थमाचरेत्
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि १०
स्थापयेत्स्नपनेनैव स्थण्डिले व्रीहिनिर्मिते
मध्यमे सर्पिराधाय गोमूत्रं गोमयं पुनः ११
क्षीरं दधि क्रमेणैव प्रागादिषु च विन्यसेत्
ईशानादिभिरभ्यर्च्य मन्त्रैर्मध्यादिषु क्रमात् १२
तत्तन्मुखाणुभिर्मध्ये योजयेत्तान्क्रमात्सुधीः
प्रणवेन तदेकस्थं ब्रह्मभिस्त्वभिमन्त्रयेत् १३
मुद्रयेदथ पात्रस्थं मुद्रया चामृताख्यया
एवं भागैः समायुक्तमाढकं तत्प्रकीर्तितम् १४
पञ्चामृतमथो वक्ष्ये सर्वसंपत्करं नृणाम्
क्षीरं दधि घृतं क्षौद्रं सिता चैवेति पञ्चकम् १५
पञ्चामृतमिति ख्यातं प्रतिप्रस्थं पृथङ्न्यसेत्
पादहीनं तु मध्यं स्यादर्धहीनं तु कन्यसम् १६
मध्यादि पूर्ववन्न्यस्य पूर्ववत्पूजयेत्ततः
खण्डाभावे तु संग्राह्यं भवेदिक्षुरसं तथा १७
खण्डं चाप्यभिषेकाय जलेनालोलितं भवेत्

अभिषेकः पृथक् प्रोक्तस्तोयस्नानान्तरान्तरे १८
उशीरचन्दनोपेतं कुशाग्रैश्च समन्वितम्
कुशाम्भ इति निर्दिष्टं प्रणवेनाभिमन्त्रितम् १९
तिलतैलेन शुद्धेन वासितेन सुगन्धिना
वारेष्विन्दुबुधार्कीणां श्रेष्ठमभ्यञ्जनं स्मृतम् २०
अधमं कोणवारेषु मध्यमं बुधकोणयोः
यवमाषशालिपिष्टं श्रेष्ठमध्येतरं भवेत् २१
सुगन्धामलकं लक्ष्मीर्हरिद्रा च तथैव च
त्रिभिरेतैर्वरं स्नानं हरिद्रामलकद्वयात् २२
मध्यमं स्नानमुद्दिष्टं कन्यसं स्याद्धरिद्रया
चन्दनोशीरह्रीबेरैस्त्रुटिना पाद्यमुत्तमम् २३
ह्रीबेरेण विना मध्यमधमं सोशीरचन्दनम्
उशीरचन्दनोपेतं लोहकर्पूरसंयुतम् २४
जातीतक्कोलसंयुक्तं श्रेष्ठमाचमनीयकम्
कर्पूरलोहौ हिवा तु मध्यमं समुदाहृतम् २५
कर्पूरलोहतक्कोलान् हित्वा कन्यसमुच्यते
अर्घ्यं तु यवसिद्धार्थशलितण्डुलसंयुतम् २६
क्षीरकृष्णतिलोपेतं कुशदूर्वाग्रसंयुतम्
उत्तमं त्विति निर्दिष्टं द्वाभ्यां हीनं तु मध्यमम् २७
अधमं त्रिभिरुद्दिष्टमर्घ्यं चापि त्रिधा स्मृतम्
सर्वद्रव्यसमायुक्तं निष्कं निष्कार्धमेव वा २८
तदर्धं वा प्रयुञ्जीत श्रेष्ठमध्याधमक्रमात्
चन्दनागरुकर्पूरकुष्ठकुङ्कममुत्तमम् २९
विलेपनार्थमुद्दिष्टं काश्मीरागरुवर्जितम्

मध्यमं केवलेनैव चन्दनेन तु कन्यसम्  ३०
कुङ्कुमागरुकर्पूरान्यथालाभं प्रयोजयेत्
पलद्वयं सपादं तु श्रीखण्डं चोत्तमोत्तमम्  ३१
ततः पादक्रमेणैव ह्रासेदापादतः क्रमात्
कन्यसात्कन्यसं प्रोक्तं मध्ये सप्तविधं भवेत्  ३२
श्वेतै रक्तैस्तथा पीतैः कृष्णैश्च कुसुमैः शुभैः
अपर्युषितनिश्छिद्रैः कृमिकेशादिवर्जितैः  ३३
सर्वैरेतैः कृतं यच्च पत्रैश्चैव तथाविधैः
श्रेष्ठमभ्यर्चनं प्रोक्तं कृष्णैः पुष्पैर्विना कृतम्  ३४
मध्यमं यजनं प्रोक्तं सितरक्तैस्तु कन्यसम्
पुष्पाणि तानि वक्ष्यामि श्वेतादीनि यथाक्रमम्  ३५
सितपद्मं सितार्कं च मन्दारं करवीरकम्
नन्द्यावर्तं च पुन्नागं मल्लिका जातिरेव च  ३६
माधवी कुरवं चैव द्रोणं धुत्तूरमेव च
बकपुष्पं च भद्रा च गिरिकर्णी तथैव च  ३७
श्रीपुष्पं वकुलं चैव लोध्रपुष्पं तथैव च
सिन्धुवारं शमीपुष्पं सितान्युक्तानि तानि तु  ३८
रक्तपद्मं पलाशं च हयमारं च पाटली
रक्तार्कं बृहती चैव पिण्डीतकमतः परम्  ३९
पट्टिका चोत्पलं रक्तं मुनिपुष्पं तथैव च
कदम्बं चेति रक्तानि पीतानि च ततः शृणु  ४०
चम्पकं कर्णिकारं च तथारग्वधमेव च
हेमधुत्तूरकं चैव कुरण्डं गोक्षुरं तथा  ४१
असनं शिखिनी चैव पीतपुष्पं प्रकीर्तितम्

नीलोत्पलं विष्णुक्रान्तिरतसीपुष्पमेव च ४२
कुरराडं कृष्णवर्णं च कृष्णपुष्पं प्रकीर्तितम्
पत्रारयर्चनयोग्यानि समासाच्छृणु साम्प्रतम् ४३
बिल्वं शमी मयूरं च तुलसीपत्रमेव च
हरिताङ्कोलकं चैव धुत्तूरं करवीरकम् ४४
नन्द्यावर्तं च मल्ली च द्रोणं चापि तपस्विनी
सहादेवी च दूर्वा च कुशा भद्रा तथैव च ४५
गोत्तुरं शङ्खिनी चैव सिन्धुवारं तथैव च
वकुलारग्वधद्रूणां पल्लवं चाप्युदुम्बरम् ४६
विष्णुक्रान्त्येकपत्रं च धातकी दान्तमेव च
यवाङ्कुरार्कपत्रं च पत्रमेवं हि कीर्तितम् ४७
पुष्पैः पत्रैर्यथालाभैः पूजयेत्परमेश्वरम्
कनकानि कदम्बानि जातीपुष्पं तथैव च ४८
रात्रौ दद्याच्छिवे शेषं दद्याद्देवे दिवानिशम्
नन्द्यावर्तं भवेत्प्रातर्मध्याह्ने द्रोणमेव च ४९
जातिः साये विशेषेण दातव्या स्याच्छिवाय वै
निर्गन्धान्युग्रगन्धानि पुष्पारयन्यानि वर्जयेत् ५०
अङ्कोलनिम्बवानीरयवधात्र्यादिसंभवैः
पिशाचत्तीरवृत्तोत्थैर्वाकुचीनीलिकोद्भवैः ५१
एररडार्जुनसंभूतैः पल्लवैर्नार्चयेच्छिवम्
जपाकिंशुकबन्धूकैः श्लेष्मातककरञ्जकैः ५२
भल्लातपारिभद्रोत्थैः कुसुमैश्च तथा भवेत्
पुष्पमेवं समाख्यातं ततो धूपविधिं शृणु ५३
कृष्णागरु सकर्पूरं श्रेष्ठं धूपार्थमुच्यते

चन्दनागरुनिर्यासैरीषत्कर्पूरसंयुतैः ५४
मध्यमस्तु भवेद्धूपः कन्यसो गुग्गुलोद्भवः
एवं धूपः समाख्यातस्ततो दीपविधिं शृणु ५५
गोघृतेनोत्तमं दीपं मध्यमं चाजमाहिषैः
तिलतैलादिभिः स्नेहैः कन्यसं दीपमुच्यते ५६
अष्टोत्तरशतं दीपमुत्तमोत्तममुच्यते
क्रमाद् द्वादशहीने तु द्वादशं कन्यसाधमम् ५७
एवं नवविधं प्रोक्तं दीपं तु शिवमन्दिरे
सदा ज्वलत्प्रयोक्तव्यं यावदष्टोत्तरं शतम् ५८
एकमारभ्य दीपं तु यथाविभवविस्तरम्
चन्दनागरुकर्पूरचूर्णयुक्तं तु यद्भवेत् ५९
कार्पासतूलं तेनैव वर्तिं कृत्वा युगाङ्गुलाम्
पात्रस्थया तया दद्याद्दीपं वै गोघृताक्तया ६०
कर्पूरवर्तिः श्रेष्ठा स्यान्मध्यमागरुवर्तिका
या तु चन्दनचूर्णेन कृता सा कन्यसा भवेत् ६१
एवं दीपं समाख्यातं वस्त्रयोग्यमतः शृणु
देवाङ्गमुत्तमं प्रोक्तं मध्यमं क्षौममुच्यते ६२
कार्पासतन्तुजं वस्त्रमधमं परिकीर्तितम्
एकवर्णकृता माला श्रेष्ठेति परिकीर्तिता ६३
बहुवर्णैस्तथा पुष्पैर्मध्यमा परिकीर्तिता
पत्रपुष्पैः कृता माला कन्यसेति प्रकीर्तिता ६४
लक्षणं भूषणादीनामथ वक्ष्ये जनार्दन
मूर्ध्नि पुष्पं तु कुर्वीत पद्माकारं तु शोभनम् ६५
कर्णिकाष्टदलोपेतं दलैर्वा षोडशैर्युतम्

चतुरङ्गुलमानेन स्वयंभूते च गाणपे ६६
दैविके चार्षके लिङ्गे मानुषे चापि दैववत्
एकहस्तादिलिङ्गानां नवानामपि तद्भवेत् ६७
एकाङ्गुलविवृद्ध्या तु कर्णपुष्पैस्तथैव हि
अथवा मूर्ध्नि कुर्वीत जटामकुटमुत्तमम् ६८
गङ्गाचन्द्रसमायुक्तं शिरोनाहेन संयुतम्
ऊर्ध्वमूर्ध्नि युगाङ्गुल्यं सर्वरत्नविचित्रितम् ६९
हारं यज्ञोपवीतं च सोत्तरीयं प्रकल्पयेत्
हारं लिङ्गोच्छ्रयसमं नानारत्नविचित्रितम् ७०
त्रिगुणं तूपवीतं स्यान्मौक्तिकं तद्वरं भवेत्
सौवर्णं वापि कुर्वीत वेद्यन्तं प्रविलम्बितम् ७१
उत्तरीयं तथा प्रोक्तमर्धाङ्गुलसुविस्तृतम्
अर्धाङ्गुलविवृद्ध्या तु पूर्ववत्तत्प्रकल्पयेत् ७२
चतुरङ्गुलविस्तारं लिङ्गनाहसमन्वितम्
हस्तलिङ्गेऽपि पट्टं स्याद् द्विहस्ते त्र्यङ्गुलं भवेत् ७३
एवमेकैकवृद्ध्या तु नवहस्तान्तमिष्यते
अथवान्यप्रकारेण पट्टलक्षणमुच्यते ७४
त्रिद्व्येकाङ्गुलविस्तारनाहे च चतुरंशके
त्र्यंशकैर्द्व्यंशकैर्वापि कुर्याज्जाम्बूनदेन तत् ७५
मालाद्वयं गुणाङ्गुल्यं लिङ्गोच्छ्रायार्धमायतम्
पद्मबन्धं विधातव्यं विस्तारेऽङ्गुलवृद्धिदम् ७६
प्रतिहस्तं यथापूर्वं नानारत्नविचित्रितम्
कटिसूत्रं तथा कुर्याल्लिङ्गमूलगतं यथा ७७
अर्धाङ्गुलं स्याल्लिङ्गस्थं वेद्यामग्न्यङ्गुलं भवेत्

पादाङ्गुलाङ्गुलाद् वृद्धिः पूर्ववच्चाङ्गयोर्द्वयोः ७८
लिङ्गनाहेन तन्नाहं कल्पयेद्देशिकोत्तमः
लिङ्गतारसमायाममंशुकस्य प्रकीर्तितम् ७९
पादाधिकं तु मध्यं स्याच्छ्रेष्ठमर्धाधिकं भवेत्
पार्श्वयोश्च षडङ्गुल्यं विस्तारं च प्रकीर्तितम् ८०
मध्ये गुणाङ्गुलं चापि विस्तारं पद्ममण्डितम्
सर्वरत्नविचित्रं च पार्श्वयोस्तस्य मध्यमे ८१
अर्धाङ्गुलेन पादेन वृद्धिः पूर्ववदिष्यते
एवं हेमांशुकं प्रोक्तं लम्बांशुकमथोच्यते ८२
वेद्यर्धमानमुच्छ्रायं विस्तारं चतुरङ्गुलम्
विस्तारशरभागैकं मध्यभागस्य विस्तृतम् ८३
विस्तारेऽङ्गुलवृद्धिं च यथापूर्वं प्रकल्पयेत्
प्रभाशोभं च सौवर्णं यन्त्रारूढं तु कारयेत् ८४
प्रभायां पद्मपुष्पं स्यादुत्पलं वा हिरण्यजम्
पार्श्वयोर्मूर्ध्नि चास्य स्याद्विवरं च षडङ्गुलम् ८५
मध्योर्ध्वे तस्य कुर्वीत सौवर्णं चाम्रपल्लवम्
अधोभागे तु कुर्वीत मुक्तालम्बमनोहरम् ८६
शुभं पञ्चगुणं कुर्यात्त्रिगुणं वा चतुर्गुणम्
शिरस्पर्शि भवेद्यद्वत्तथा लिङ्गस्य कारयेत् ८७
सौवर्णं तां प्रभां कुर्यादथवा तोरणात्मिकाम्
लिङ्गवद्गोलकां कुर्याच्छुद्धजाम्बूनदेन तु ८८
लिङ्गस्य परितस्तस्या विवरं द्वियवं भवेत्
लिङ्गोर्ध्वे विवरं चापि कुर्यादङ्गुलमानतः ८९
पूर्वे च दक्षिणे तस्याः पश्चिमे चोत्तरे तथा

ऊर्ध्वे च बन्धयेद्रत्नं पुरुषादिमुखेषु वै ९०
पूर्वे माणिक्यमेवोक्तं महानीलं तु दक्षिणे
मुक्ताफलमधश्चापि सद्योजाते तु बन्धयेत् ९१
प्रवालमुत्तरे विष्णो स्फटिकं चोर्ध्वदेशतः
पिण्डिकायां च कुर्वीत गोलकां रजतेन वै ९२
अग्रभागेऽथवा कुर्याद्यथापीठव्यवस्थितम्
एवमाभरणं प्रोक्तं हविरत्र निगद्यते ९३
गोधूमो गन्धशाली च यवः कलस एव च
व्रीहयस्तु सिताश्चान्ये क्रमाच्छ्रेष्ठा उदाहृताः ९४
व्रीहीणां पञ्चविंशद्भिः शतद्वयसमायुतैः
पूरितं शुक्तिरित्युक्तं मानं तेनैव कल्पयेत् ९५
तद्द्वयं तलमित्युक्तं प्रकुञ्चः स्यात्तलद्वयम्
प्रसृतिस्तद्द्वयं प्रोक्तं कुडवं प्रसृतिद्वयम् ९६
अञ्जलिस्तद्द्वयं प्रोक्तं प्रस्थः स्यादञ्जलिद्वयम्
चरु प्रस्थद्वयं प्रोक्तमाढकं तद्द्वयं भवेत् ९७
तद्द्वयं शिवमित्युक्तं द्रोणं विद्याच्छिवद्वयम्
द्रोणद्वयं भवेत्खारी भारं खारीत्रयं भवेत् ९८
उत्तमोत्तममित्युक्तं हविरष्टोत्तरैः शतैः
प्रस्थैराद्वादशान्तं स्याद् द्वादशैर्द्वादशैः क्रमात् ९९
ह्रासे तु कल्पिते तत्र नवधा दृश्यते हविः
अभावेऽन्यप्रकारेण हविरेवं प्रकल्पयेत् १००
आढकं तु समारभ्य यावत्स्यात्तन्नवाढकम्
आढकाढकवृद्ध्या तु नवधा परिकल्पयेत् १०१
न भवेदाढकाद्धीनं हविर्लिङ्गस्य केशव

चरु प्रस्थद्वयं तच्च होमकर्मणि कल्पयेत्  १०२
अधमं तद्द्वयेद्धोमे द्विगुणं मध्यमं भवेत्
त्रिगुणं चोत्तमं प्रोक्तं नवपात्रे प्रकल्पितम्  १०३
प्रस्थं कुडवसंयुक्तं पिशाचाद्येषु दापयेत्
शुद्धान्नं पायसं गौलं मुद्गान्नं कृसरं तथा  १०४
हवींषि पञ्चवर्णानि तेषां लक्षणमुच्यते
शुद्धान्नं तु हविः शुद्धैस्तण्डुलैरेव कल्पितम्  १०५
तण्डुलेन समे क्षीरे पाचितं पायसं भवेत्
तण्डुलार्धेन पयसा तदर्धेन गुलेन च  १०६
पाचितं गौलमाख्यातं मुद्गान्नमधुनोच्यते
तण्डुलेन समैर्वार्धैर्मुद्गैर्मुद्गान्नमुच्यते  १०७
शुद्धान्ने पूर्ववत्सिद्धे तिलसर्षपयोः क्षिपेत्
दग्धं यत्सूक्ष्मचूर्णं तु तण्डुलात्षोडशांशयोः  १०८
तयोः पादमितं तत्र मरीचं जीरकेण युक्
तदर्धं रजनीचूर्णं पाकान्ते तु विनिक्षिपेत्  १०९
कृसरान्नमिति प्रोक्तमुच्यन्ते व्यञ्जनानि च
तण्डुलात्षोडशांशं तु मौद्गं श्रेष्ठमुदाहृतम्  ११०
तस्मात्पादार्धहीनं तु मध्यमन्त्यं च कल्पयेत्
कृष्णमुद्गकुलत्थं च मसूरं तुवरी तथा  १११
सतुषं वितुषं चापि पूर्ववत्परिकल्पयेत्
कदलीं बृहतीं चापि कूष्माण्डोर्वारुकं तथा  ११२
अलाबूं कर्करीं चैव पनसं नालिकेरकम्
तिन्त्रिणीं चाम्रकं चैव कारवल्लीद्वयं तथा  ११३
क्षुद्रां व्याघ्रीं च निष्पावं यथालाभं समाहरेत्

कन्दानि भक्ष्यपर्णानि व्यञ्जनानि प्रकल्पयेत् ११४
उत्तमं तु प्रतिप्रस्थं व्यञ्जनं स्यात्पलत्रयम्
द्विपलं मध्यमं प्रोक्तं पलं कन्यसमुच्यते ११५
चत्वारिंशत्पलानां तु कुडवं लवणं क्षिपेत्
कुडवं मरीचकं चापि श्रेष्ठकं तु पलं स्मृतम् ११६
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत्
तदर्धं जीरकं प्रोक्तमाज्यमानमतः शृणु ११७
द्वात्रिंशदंशकं सर्पिस्तण्डुलस्योत्तमं भवेत्
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत् ११८
आढकस्य पलं श्रेष्ठं तदर्धं मध्यमं भवेत्
गुलं तदर्धमधमं यथालाभं सिता भवेत् ११९
अर्धांशं तण्डुलाच्छ्रेष्ठं दधि मध्यं तदर्धतः
तदर्धमधमं प्रोक्तं नैवेद्यं परिकल्पितम् १२०
कदलीपनसाम्राणां यथालाभं फलानि च
व्यञ्जनानि पवित्राणि जन्तुवर्ज्यानि कल्पयेत् १२१
उक्तान्येतानि सर्वाणि शुष्काण्यार्द्राणि चाहरेत्
उपदंशानि रम्याणि शिवाय परमात्मने १२२
भक्त्याथ मूलशाकाद्यं स्वादु भक्ष्यं च शोभनम्
दद्यात्सुसंस्कृतं सम्यङ्ग नैवेद्येन समन्वितम् १२३
सर्वदोषविनिर्मुक्तांस्तण्डुलाञ्शुद्धपात्रगान्
भाण्डेषु प्रक्षिपेत्तेषु प्रतिमानां पृथक्पृथक् १२४
आढकं तु शिवं वापि द्रोणं वा प्रोक्ष्य पात्रकम्
पञ्चधा वा चतुर्धा वा त्रिधा वा क्षालनं भवेत् १२५
अस्त्रेण क्षालनं कुर्यात्सद्येन प्रक्षिपेज्जलम्

तण्डुलेन समं पश्चाद्वामदेवेन चोद्धरेत् १२६
घोरेण चुल्लीमारोप्य हेतिना चेन्धनं क्षिपेत्
घोरेणाग्निं च संदीप्य पाचयित्वा नरेण तु १२७
अवतार्य मृजेत्सर्वानस्त्रेणैवार्द्रपाणिना
मृद्भाण्डानि नवान्येव हविषां पूजितानि हि १२८
लोहपात्रमपि श्रेष्ठमयःपित्तलवर्जितम्
मृद्भाण्डमधमं प्रोक्तमसकृत्पात्रतां गतम् १२९
मासि मासि त्यजेद्भाण्डं मार्त्तिकं सर्वमेव हि
निर्माल्यसंकरादौ तु सद्य एव परित्यजेत् १३०
एवं हविः समापाद्य ततो देवान्तिकं नयेत्
परिचारस्तु तत्काले बद्धोष्णीषः सदा भवेत् १३१
तस्यानयनकाले तु पटाद्याच्छादितं तु तत्
अभ्युन्दय पुरतः कृत्वा शङ्खध्वनिसमायुतम् १३२
हेमादिनिर्मिते पात्रे प्रोक्तद्रव्यैस्तु शोधिते
प्रोक्षिते तु शिवास्त्रेण निक्षिपेत्प्रणवं स्मरन् १३३
सर्वोपदंशसंयुक्तं यथोक्तं तन्निवेदयेत्
हविर्भाण्डेष्वधोभागे चतुर्भागैकभागकम् १३४
न्यस्य बलिप्रदानाय तत्र किंचित्समाहरेत्
शेषं तु परिचाराणां भोजनाय प्रकल्पयेत् १३५
ततो देवाय ताम्बूलं दद्यात्तल्लक्षणं शृणु
प्रतिप्रस्थं तु गृह्णीयात्क्रमुकस्य फलद्वयम् १३६
एकं वापि तदर्धं वा पर्णानां च चतुष्टयम्
त्रितयं मध्यमं प्रोक्तं द्वितयं त्वधमं भवेत् १३७
लवङ्गत्रुटिजातीनां चूर्णं तक्कोलजं तथा

कर्पूरेण समायुक्तं पञ्च सौगन्धिकं स्मृतम् १३८
मुखवासं तु तच्छ्रेष्ठं कर्पूरेणैव मध्यमम्
लवङ्गेनाधमं प्रोक्तमेवं सौगन्धिकं त्रिधा १३९
मातुलुङ्गफलं पक्वं नालिकेरफलं तथा
संस्कृत्य सम्यक् ताम्बूलसहितं तन्निवेदयेत् १४०
चूर्णं प्राणयङ्गजं वापि ताम्बूले न तु दूष्यते
यथा प्राणयङ्गजं मुक्ताशङ्खादि शुचि दृश्यते १४१
अन्नाच्छतगुणं श्रेष्ठं पिष्टं तु घृतपाचितम्
गुलखण्डेन संमिश्रं तस्मात्तच्च निवेदयेत् १४२
फलानि च सुपक्वानि भक्ष्याणि विविधानि च
हविःप्रदानादूर्ध्वं तु पुरा नित्योत्सवस्य तु १४३
हविषा सह वा नित्यं पृथक्पात्रे निवेदयेत्
यथालाभं ततश्चापि ताम्बूलं दापयेच्छिवे १४४

इत्यजिताख्ये महातन्त्रे क्रियापादे अर्चनाङ्गविधिर्नाम द्वाविंशः पटलः

## त्रयोविंशः पटलः

## आरात्रिकविधिः

आरात्रिकं ततो वक्ष्ये सर्वदोषप्रशान्तये
नवदीपयुतं श्रेष्ठं पञ्चदीपैस्तु मध्यमम् १
कन्यसं त्वेकदीपेन युतं पात्रं क्रमाच्चरेत्
दीपाधाराणि लोहानि कारयेत्पिष्टजानि वा २
दीपाधारेषु सर्वेषु गोघृताक्तां तु विन्यसेत्
वर्तिमन्येषु पात्रेषु निम्बपत्रं च सर्षपम् ३

कार्पासबीजं लवणं चतुष्पलं च विन्यसेत्
गौरीधाम्नस्तु तत्सर्वं यागमण्टपतोऽपि वा ४
पुष्पमण्टपतो वापि समाहृत्य समानयेत्
मण्टपाभ्यन्तरे वाथ तत्सर्वं परिकल्पयेत् ५
रुद्रायतनयोषिद्भिरथवा परिचारकैः
तानि सर्वाणि पात्राणि वाहयित्वा शिरोपरि ६
समानीय शिवस्याग्रे कृत्वा तद्वर्तिदीपनम्
त्रिपाद्यां तु शिवस्याग्रे विन्यसेत्पात्रपञ्चकम् ७
शिवस्याचमनं दत्त्वा संपूज्य शिवमन्त्रतः
ततो दीपार्चनं कुर्याद्गन्धपुष्पादिभिः क्रमात् ८
नवग्रहा नवानां तु पञ्चानां भूतपञ्चकम्
एकस्य वह्निरेवोक्तो दीपानामधिदेवताः ९
नवदीपेषु सूर्यं तु मध्ये दिक्षु समन्ततः
गुरुशुक्रज्ञचन्द्रांस्तु भौममर्कसुतं तथा १०
राहुं केतुं च संपूज्य विदिक्षु क्रमशस्तथा
पञ्चस्वग्निं यजेन्मध्ये प्रागादिषु यथाक्रमम् ११
आकाशं च तथा वायुमपं पृथ्वीं च पूजयेत्
वह्निमेवैकदीपे तु प्रोक्षयेच्चास्त्रमन्त्रतः १२
नाराचास्त्रप्रयोगेण दिक्षु चास्त्रं प्रयोजयेत्
बध्वा तु सुरभिं पश्चाद्दीपस्योपरि दर्शयेत् १३
उद्धृत्योपरि देवस्य त्रिः परिभ्रामयेद्धृदा
अन्यानि द्रव्यपात्राणि भ्रामयेच्च पृथक् पृथक् १४
अथवा तेषु पात्रेषु किंचित्किंचिद्विगृह्य च
तत्तद्द्रव्यं समस्तं तु गृहीत्वा दक्षमुष्टिना १५

अस्त्रेण भ्रामयित्वा तु निक्षिपेद्दीपपात्रके
ततो भस्म सुसंगृह्य कर्पूरादिसुगन्धितम्  १६
गृहीत्वा मुद्रया मृग्या भ्राम्य लिङ्गोपरि त्रिधा
प्रक्षिपेद्दीपपात्रे तु ततो लिङ्गस्य मूर्धनि  १७
अस्त्रेण विन्यसेद्दिक्षु दक्षिणेतरयोस्ततः
पार्श्वयोर्हृदये चैव विन्यसेद्भस्म मन्त्रवित्  १८
अथवा द्रव्यवर्जं तु दीपमेव प्रयोजयेत्
तत्काले तु प्रयुञ्जीत स्तोत्रमङ्गलवादनम्  १९
जयशब्दं सशङ्खं च वेदध्वनिसमायुतम्
विसर्जयेत्ततः सर्वं दीपादिद्रव्यसंचयम्  २०
विसर्जनं महापीठे लिङ्गे वाथ प्रकल्पयेत्
एवमारात्रिकं दत्त्वा दद्यादाचमनीयकम्  २१
ताम्बूलं दापयेन्मन्त्री मुखवाससमन्वितम्  २२

इत्यजिताख्ये महातन्त्रे क्रियापादे आरात्रिकविधिर्नाम त्रयोविंशः पटलः

## चतुर्विंशः पटलः

## नीराजनविधिः

नीराजनविधिं वक्ष्ये काम्यं नैमित्तिकं च तत्
आत्मजक्षेत्रवित्तादि काम्यमत्र प्रकीर्तितम्  १
उत्पातपरचक्रादि निमित्तं स्याज्जनार्दन
पूर्ववत्कल्पिते पात्रे दीपाधारे सुशोभने  २
हेमरूप्यादिसंसिद्धे कुष्ठचन्दनजेन वै
क्षोदेन शलिगोधूमयवमाषोद्भवेन वा  ३

पिष्टेन कुर्यात्सुव्यक्तं दीपस्य परितः क्रमात्
त्रिशूलवज्रशङ्खाब्जश्रीवत्सस्वस्तिकान् क्रमात् ४
छत्रचामर संयुक्तानष्टदिक्षु क्रमेण वै
गोमयं श्वेतसिद्धार्थं यवं कृष्णतिलं तथा ५
दधि गोरोचनां बिल्ववटपिप्पलसंभवान्
प्रवालान्विकिरेत्पात्रे सुगन्धिकुसुमानि च ६
गोघृताक्तां ततो वर्तिं दीपाधारेषु योजयेत्
कर्पूरागरुचूर्णेन युक्ता वर्तिः प्रशस्यते ७
नवदीपमिदं प्रोक्तं नीराजनविधिं प्रति
इति संपादितं पात्रं शिवाग्रे स्थण्डिलोपरि ८
पद्ममष्टदलं कृत्वा तत्र पात्रं निधाय च
पुण्याहं वाचयित्वा तु दीपानारोप्य तत्र वै ९
पूर्ववत्पूजयित्वाथ शङ्खदुन्दुभिनिस्वनैः
स्नानकाले प्रयुञ्जीत शिवस्योपरि पूर्ववत् १०
भस्मादिकं तथान्यच्च तत्र तत्परितो यजेत्
विसर्जनं च तस्यापि पूर्ववत्परिकल्पयेत् ११
अष्टम्यां च चतुर्दश्यां पञ्चदश्यां च पक्षयोः
आर्द्रायामर्कवारे च योजयेत्काम्यसिद्धये १२
अद्भुतादिषु सर्वेषु दृष्टमात्रेषु योजयेत् १३

इत्यजिताख्ये महातन्त्रे क्रियापादे नीराजनविधिर्नाम चतुर्विंशः पटलः

## पञ्चविंशः पटलः

## नित्योत्सवविधिः

अथ नित्योत्सवं वक्ष्ये सर्वारिष्टनिवारणम्
लोकपुष्टिप्रदं सम्यङ्ग नित्यार्चाङ्गं तथैव च १
तस्मान्नित्योत्सवं शास्त्रे त्रैसंध्यमिति कीर्तितम्
नवप्रकारमेतत्स्यात् तत्प्रकारमतः शृणु २
विनायकं ततो देवं देवीं पाशुपतेश्वरम्
बलिपात्रस्थितं चास्त्रं गोलकां लिङ्गमेव वा ३
पादुके वृषराजं च चण्डेशं च यथाक्रमम्
शिरसा वाहयित्वा तु क्रियते यत्र नित्यशः ४
नवभिः प्रथमं चाहुरुत्तमोत्तमसंज्ञितम्
चण्डं हित्वाष्टभिर्देवैर्भवेदुत्तममध्यमम् ५
चण्डं पाशुपतेशं च हित्वा स्यादुत्तमाधमम्
चण्डपाशुपताभ्यां तु हित्वा विघ्नेशमेव हि ६
तद्भवेन्मध्यमश्रेष्ठं त्रिभिस्तैर्गोलकां विना
मध्यमध्यमिदं ज्ञेयं तैश्चतुर्भिश्च पादुके ७
हित्वा यत्क्रियते तत्तु मध्यमाधममिष्यते
पूर्वोक्तैस्तैर्वृषं हित्वा कृतं स्यात्कन्यसोत्तमम् ८
पूर्वोक्तैस्तैरुमां हित्वा भवेत्कन्यसमध्यमम्
उमामहेश्वराभ्यां वा कुर्यादधममध्यमम् ९
एकासनस्थयोर्भेदः शिवयोरत्र नेष्यते
पूर्वोक्तैस्तैर्महेशं च हित्वा केवलमस्त्रतः १०
अधमाधममेवं तु प्रोक्तं नवविधोत्सवम्
अग्निकार्ये कृते कुर्यान्नित्योत्सवमतन्द्रितः ११
हित्वा वा नित्यहोमं तु नित्योत्सवमथाचरेत्
महोत्सवं तु कुर्वीत विना वा नित्यमुत्सवम् १२

अतोऽर्चनक्रमो ह्येषां सर्वेषामभिधास्यते
पूजकः कृतहोमस्तु प्रविश्याभ्यन्तरं ततः १३
गन्धपुष्पादिभिः सम्यग् देवान्विघ्नेश्वरादिकान्
क्रमेण पूजयेन्मन्त्री सर्वांश्च स्वस्वमन्त्रतः १४
स्थलिकाकर्णिकामध्ये यजेत्पाशुपतास्त्रकम्
त्रिनेत्रं चतुर्भुजं चैव श्लक्ष्णपिङ्गोर्ध्वकेशकम् १५
वरदाभयहस्तं च वामसव्याक्षशूलधृत्
एवं पाशुपतं ध्यात्वा बलिलिङ्गे समर्चयेत् १६
पूर्वाह्ने पुष्पलिङ्गं स्यान्मध्याह्ने चान्नलिङ्गकम्
सायाह्नेऽक्षतलिङ्गं स्यादाढकार्धप्रकल्पितम् १७
पुष्पलिङ्गं तु वा प्रोक्तं रात्रावपि तदुत्सवे
गोलकायां भवेदेवं पादुकाद्वितये यजेत् १८
धर्मयज्ञौ तु संपूज्य महाघण्टां तु ताडयेत्
पुत्रकैस्तु ततो देवाञ्शुचिभिः सुसिताम्बरैः १९
सोष्णीषैः सोत्तरीयैश्च सपवित्रकरैस्तदा
कृतत्रिपुण्ड्रकैश्चैव मालादिभिरलंकृतैः २०
वाहयेच्च ततो देवान्क्रमेणानेन देशिकः
पूर्वं विनायकं चाग्रे देवं तदनु वाहयेत् २१
देवीं तद्वामभागे तु ततः पाशुपतेश्वरम्
ततोऽस्त्रं बलिपात्रस्थं वितानेन समन्वितम् २२
गृहीत्वा वाहयेद्धस्ते दक्षिणे हस्तसंमितम्
वैणवं वेत्रजं वापि दण्डं खण्डादिवर्जितम् २३
गोलकामानयेत्पश्चात्पादुके च ततो नयेत्
वृषं तदनु तस्यानु चण्डेशं च समानयेत् २४

शङ्खदुन्दुभिनिर्घोषैर्धूपदीपसमाकुलम्
छत्रचामरसंयुक्तं पिञ्छध्वजसमायुतम् २५
गीतनृत्तसमायुक्तं मङ्गिणीतालसंयुतम्
आद्यं प्रदक्षिणं कृत्वा विनिष्क्रम्य बहिस्ततः २६
निःशब्दं गोपुरे कृत्वा ततो बाह्ये प्रदक्षिणम्
गत्वा बाह्यमहापीठं कृत्वा तत्र प्रदक्षिणम् २७
कारयेत्त्रयमेकं वा यातुधानादिगीतये
ततः प्रविश्य निःशब्दं द्वारि कृत्वा पुनः क्रमात् २८
अन्तः प्रदक्षिणं कुर्यात्तालैरेतैः समन्वितम्
इन्द्रस्य समतालं स्यादग्नौ बद्धावणं भवेत् २९
यमस्य भृङ्गिणीतालं नैर्ऋत्यां मल्लितालकम्
वारुणयां नवतालं तु वायोश्च बलितालकम् ३०
सोमे तु कोटिशिखरमैशान्यां टङ्करी तथा
एतानष्टौ तदा तालान्दिक्षु सर्वासु वादयेत् ३१
ततः प्रवेशयेद्देवान्वृषतालसमन्वितम्
वाहनानां तु सर्वेषां पादं प्रक्षालयेत्तदा ३२
प्रविष्टेषु च देवेषु पूर्ववत्पूजयेत्सुधीः
अस्त्रं च बलिपात्रस्थमभ्यर्च्यादाय मन्त्रतः ३३
लिङ्गस्य दक्षिणे पार्श्वे योजयेत्तेन मन्त्रतः
आसारे महति प्राप्ते प्राप्ते वा चण्डमारुते ३४
परचक्रभयादौ च केवलास्त्रेण चोत्सवम्
कारयेद्देशिको धीमानन्तर्गर्भगृहेऽपि वा ३५
पादुकाभ्यां विनाभूते तस्मिन्नित्योत्सवे सुधीः
अन्तः प्रविष्टे देवे तु पूर्वाभिमुखसंस्थिते ३६

गोमयालेपिते देशे तस्याग्रे पादुके न्यसेत्
तत्र देवं समभ्यर्च्य पूर्वोक्तं मन्त्रवित्तमः ३७
देवं पाद्यादिभिर्यष्ट्वा प्रविश्यान्तर्गृहं ततः
उपवेश्यासने देवं देवाग्रे पादुके न्यसेत् ३८

इत्यजिताख्ये महातन्त्रे क्रियापादे नित्योत्सवविधिर्नाम पञ्चविंशः पटलः

## षड्विंशः पटलः

## मुद्रालक्षणविधिः

मुद्राया लक्षणं वक्ष्ये तया सर्वार्थसिद्धये
यया सिध्यति मन्त्राणां फलं सर्वमभीप्सितम् १
मुद्रं ददाति देवानां द्रावयत्यसुरानपि
मोदद्रावणधर्मित्वं मुद्राशब्देन कथ्यते २
शोधनी कालकर्णी च मुकुली शशकर्णिका
निष्ठुरा पद्ममुद्रा च नमस्कारा मनोरमा ३
शान्ता च लिङ्गमुद्रा च ध्वजा चावाहनी तथा
स्थापनी रोधिनी चैव संनिधीकरणी तथा ४
गायत्री च तथा नेत्रा चास्त्रा चैव तथापरा
सुधा पञ्चमुखी चैव संहाराख्या तथैव च ५
वज्राख्या शक्तिमुद्रा च दण्डा खड्गा तथैव च
पाशमुद्राङ्कुशाख्या च गदा शूला तथैव च ६
पद्माख्या चक्रमुद्रा च द्रव्याख्या करकच्छपी
नाराचास्त्रा मृगी चैव महामुद्रा तथापरा ७
शङ्खमुद्रा तालमुद्रा वाराही त्रासिनी तथा

शिवयागे समुद्दिष्टाश्चत्वारिंशदिमाः क्रमात् ८
मणिबन्धौ तु संलग्नौ पाणी कृत्वा जनार्दन
हृद्देशे त्वथ विन्यस्य ताडयेच्च परस्परम् ९
शोधनी तु भवेदेषा मुद्रा शोधनकर्मणि
कराभ्यां मुष्टिमाबध्य योजयेन्मणिबन्धकौ १०
मुष्टी कृत्वा ततोत्ताने ततो नाङ्गुलि योजयेत्
अङ्गुष्ठाग्रौ च संलग्नौ कृत्वा स्यात्कालकर्णिका ११
कालकर्णी प्रयोक्तव्या द्रव्यलक्षणकर्मणि
कराभ्यामञ्जलिं कृत्वा मध्ये तु सुषिरं नयेत् १२
सरोजमुकुलाकारा मुकुली द्रव्यसंचये
तर्जन्यौ कुञ्चिते कृत्वा त्वङ्गुष्ठाभ्यां समाक्रमेत् १३
शेषा ऋज्वीर्घनाः कृत्वा मणिबन्धे नियोजयेत्
शशकर्णीति विज्ञेया सर्वेषामृद्धिकारिणी १४
मणिबन्धे च संविष्टौ करौ कृत्वा ततस्तयोः
अङ्गुष्ठौ गर्भगौ कृत्वा मुष्टिबन्धे कृते सति १५
निष्ठुरेयं भवेन्मुद्रा सर्वेषां तु निरोधने
पूर्वोक्तमुकुली या तु सा हृद्देशे निवेशिता १६
व्याकोचकमलाकारा विश्लिष्टप्रसृताङ्गुलिः
पद्ममुद्रा भवेदेषा प्रोक्ता ह्यासनकल्पने १७
हस्ताभ्यामञ्जलिं कृत्वा हृद्देशे तु समाश्रिताम्
अङ्गुष्ठेन तु सव्येन वामाङ्गुष्ठं तु पीडयेत् १८
नमस्कारा भवेदेषा सर्वेषां वन्दनोचिता
अङ्गुलीवलनं कृत्वा हस्तयोरुभयोरपि १९
कनिष्ठिके तु संयुक्ते कृतोत्ताने तथा बहिः

वामे कृत्वा तले लग्नं कृत्वा चानामिकाद्वयम्  २०
मध्यमे प्रसृते युक्ते कृत्वा तद्देशिनीद्वयम्
अङ्गुष्ठमूलपर्वस्थं कृत्वाङ्गुष्ठद्वयं तथा  २१
अनामिकापृष्ठलग्नं कृत्वा कुर्यान्मनोरमाम्
पूजकेन प्रयोक्तव्या शिवसायुज्यकर्मणि  २२
कुर्यादङ्गुष्ठलग्नाग्रां तर्जनीं हस्तयोर्द्वयोः
एषा शान्तेति विख्याता मन्त्रस्थापनकर्मणि  २३
शिथिलं दक्षिणां मुष्टिं बध्वा तस्योदरे क्षिपेत्
वामाङ्गुष्ठं ततोऽङ्गुष्ठं दक्षिणं चोच्छ्रितं नयेत्  २४
वामहस्ताङ्गुलीभिश्च सव्यमुष्टिं च वेष्टयेत्
लिङ्गमुद्रा भवेदेषा लिङ्गस्थापनकर्मणि  २५
वामहस्ततले हस्ततलमन्यं प्रयोजयेत्
वामहस्ताङ्गुलीभिस्तु तत्पृष्ठमभिवेष्टयेत्  २६
अङ्गुष्ठं वामहस्तस्य दक्षिणेनाथ पीडयेत्
दक्षिणस्याङ्गुलीरन्याः श्लिष्टास्तिर्यगवस्थिताः  २७
चालयेद् ध्वजसंज्ञैषा मुद्रा वायोः प्रियावहा
हस्ताभ्यामञ्जलिं कृत्वा संमुखं तु तयोः पुनः  २८
कनिष्ठामूलगे तत्तदङ्गुष्ठाग्रे च कारयेत्
आवाहनी भवेदेषा मुद्रावाहनकर्मणि  २९
स्थापनी सैव निर्दिष्टा प्रयुक्ताधोमुखं यथा
शोधिनी निष्ठुरेव स्यात्सर्वेषां तु निरोधिनी  ३०
शोधिनी सैव संश्लिष्टोच्छ्रिताङ्गुष्ठा यदा भवेत्
सैव स्यात्संनिधानी च संनिधीकरणोचिता  ३१
करयोः सुषिरोपेता मुष्टिबन्धे कृते सति

गायत्रीयं भवेन्मुद्रा गायत्र्यां तां प्रयोजयेत्  ३२
या शान्तेति पुरा प्रोक्ता सैव नेत्रा त्वधोमुखी
दर्शने तु प्रयोक्तव्या सर्वेषां तु जनार्दन  ३३
करयोः शिथिलां मुष्टिं कृत्वाङ्गुल्यः प्रसारिताः
सहसा तु भवेदेषा मुद्रास्त्रा चास्त्रकर्मणि  ३४
द्वयोस्तु वलिताः कृत्वाङ्गुलीः सर्वाः परस्परम्
कनिष्ठानामिके ऊर्ध्वं देशिनी मध्यमे तथा  ३५
अङ्गुष्ठौ मध्यगौ कृत्वा मुद्रेयं धेनुसंज्ञिता
अमृतिकरणे योग्या द्रव्याणां यज्ञकर्मणि  ३६
वलिताः पृष्ठतः सर्वाश्चाङ्गुल्यस्तु परस्परम्
अङ्गुष्ठाभ्यां कनिष्ठाग्रात्संक्रामे मध्यमे तथा  ३७
तर्जनीभ्यां समाक्रम्यानामिके चोच्छ्रिते उभे
एषा पञ्चमुखी ख्याता वक्त्रक्लृप्तौ प्रयोजिता  ३८
विश्लिष्टाङ्गुलिके हस्ते क्रमादङ्गुष्ठमूलगाः
कनिष्ठानामिकामध्यातर्जन्यः संहृतिर्भवेत्  ३९
विसर्जने तु सर्वेषां योक्तव्या मन्त्रवित्तमैः
कनिष्ठां करयोस्तत्तदङ्गुष्ठाभ्यां समाक्रमेत्  ४०
शेषाश्चैव स्थिराः श्लिष्टाः कृत्वा तन्मणिबन्धकौ
वामेतरावधोर्ध्वस्थौ तिर्यक्स्थौ च प्रकल्पयेत्  ४१
वज्रमुद्रा भवेदेषा वज्रक्लृप्तौ प्रयोजिता
सैवोक्ताङ्गुलिविश्लेषाच्छक्तिमुद्रा प्रकीर्तिता  ४२
शक्तिमुद्रा भवेदेषा वह्नेः प्रीतिकरी सदा
उद्गते दक्षिणे मुष्टौ तर्जन्यन्तरिते कृते  ४३
दण्डाख्या सा यमस्यैषा सदा प्रीतिकरी स्मृता

पाणी परस्परं श्लिष्टौ कृत्वा सर्वाङ्गुलीयुतौ ४४
दक्षिणस्योन्नतश्लिष्टौ तर्जनीमध्यमे उभे
खड्गमुद्रा भवेदेषा छेदने निर्ऋतिप्रिया ४५
हस्तयोस्तर्जनीयुग्ममङ्गुष्ठाभ्यां तु वेष्टयेत्
शेषाः प्रसारयेत्सर्वा विश्लिष्टाः पाशसंज्ञिता ४६
बन्धने तु प्रयोक्तव्या वरुणप्रीतिदा सदा
मुष्टिबन्धे कृते हस्ते दक्षिणे तु समुद्धृते ४७
विसृज्योर्ध्वस्थिते कृत्वा तर्जनी मध्यमे उभे
श्लिष्टाभ्यां कुञ्चयेत्ताभ्यां तर्जनीमङ्कुशा भवेत् ४८
एषा ह्याकर्षणे प्रोक्ता वायुप्रीतिकरा सदा
उच्छ्रिते दक्षिणे हस्ते मुष्टिबन्धे कृते सति ४९
तिर्यक्चलनसंयोगान्मुष्टेर्मुद्रा गदा भवेत्
सोमप्रीतिकरी मुद्रा सर्वाप्यायनकर्मणि ५०
हस्ताभ्यामञ्जलिं कृत्वा कुञ्चितेऽथ कनिष्ठके
वामाङ्गुष्ठं समाक्रम्य दक्षिणेनेतराः समाः ५१
तर्जन्यनामिकामध्याः संयुक्तास्तु परस्परम्
विश्लिष्टाः शूलमुद्रेयं सर्वदुष्टभयंकरी ५२
बध्वा तौ पद्मवत्पाणी चक्रा स्याद्भ्रमणात्तयोः
सेनास्तम्भे प्रयोक्तव्या विष्णुप्रीतिकरी सदा ५३
पद्ममुद्रेति या प्रोक्ता पद्माख्या सैव कीर्तिता
सृष्टिकर्मणि निर्दिष्टा ब्रह्मप्रीतिकरी सदा ५४
अनामिकामूलपर्वे कृत्वा चाङ्गुष्ठसंगतिम्
दर्व्यमुद्रा भवेदेषा हीनद्रव्यस्य पूरणी ५५
वामपाणितलोर्ध्वे तु दक्षहस्तं तु योजयेत्

तिर्यक्स्थं संपुटं कृत्वा सर्वाङ्गुल्यः सुसंगताः ५६
करशुद्धौ विधातव्या करकच्छपिका सदा
कृत्वा दक्षिणहस्तेन मुष्टिं दृढतरं तथा ५७
अङ्गुष्ठाग्रेण तर्जन्याः सम्यगग्रं निपीडय च
प्रोक्षिपेत्तर्जनीं भेदे यथा शब्दोदयो भवेत् ५८
नाराचास्त्रसमाख्येयं मुद्रा दिग्बन्धकर्मणि
दक्षिणाङ्गुष्ठशिरसि मध्यमानामिके उभे ५९
संयोज्य दर्शयेन्मुद्रा मृगी गोवृद्धिकारिणी
अधोमुखाभ्यां पाणिभ्यामापादान्मस्तकान्तकम् ६०
क्रमात्संस्पर्शनादेषा महामुद्रा प्रकीर्तिता
अपसव्यं पुटं कृत्वा दक्षिणस्य करस्य तु ६१
देशिन्यन्तं कनिष्ठायां योजयेन्निम्नमङ्गुलीः
शङ्खमुद्रा भवेदेषा त्वभिषेकविधौ परा ६२
दक्षिणाङ्गुलिभिर्वामहस्तस्य तलताडनात्
अङ्गुष्ठवर्जिताभिः स्यात् तालमुद्रा तु शुद्धिदा ६३
मध्यानामिकयोरग्रे दक्षिणस्य करस्य तु
अङ्गुष्ठोदरमायोज्यं तर्जनीं च कनिष्ठिकाम् ६४
उन्नमेच्च वराहाख्या मुद्रेयं शुद्धिकर्मणि
तर्जनीमध्यमाभ्यां तु श्लिष्टाभ्यां दक्षिणस्य तु ६५
वामहस्ततले कुर्यात्ताडनं सकृदेव हि
त्रासिनी स्यादियं मुद्रा त्रासने परियोजिता ६६

इत्यजिताख्ये महातन्त्रे क्रियापादे मुद्रालक्षणविधिर्नाम षड्विंशः पटलः

## सप्तविंशः पटलः

## महोत्सवविधिः

अथोत्सवविधिं वक्ष्ये सर्वलोकहितावहम्
सवः कल्याणमित्युक्तं सर्वजन्तुसुखावहम् १
उद्भूतस्तु सवो यस्मात्तस्मादुत्सव उच्यते
नवप्रकारस्तस्यायं क्रमाद्भेदो विधीयते २
शैवो गौणोऽथ भौतश्च प्रथमत्रितयं भवेत्
भौवनश्च चतुर्थश्च शाक्तः पञ्चम एव च ३
रौद्रः षष्ठस्तथा सौरः सप्तमः परिकीर्तितः
अष्टमो मानवः प्रोक्तो नवमः पक्ष एव हि ४
एकाहस्तु भवेच्छैवस्त्रियहो गौण उच्यते
पञ्चाहो भौत उद्दिष्टः सप्ताहो भौवनः स्मृतः ५
नवाहः शाक्त इत्युक्तो रौद्र एकादशाहकः
द्वादशाहस्तु सौरः स्यान्मानवः स्याच्चतुर्दश ६
पक्षः पञ्चदशाहस्तु नामान्येतनि योगतः
तीर्थार्थमुत्सवारम्भस्तस्मात्तीर्थर्क्षमुच्यते ७
चैत्रे त्वाष्ट्रभमुद्दिष्टं वैशाखे शूर्पमुच्यते
ज्येष्ठे मूलमथाषाढे वैश्वदेवमिति स्मृतम् ८
श्रावणे तु श्रविष्ठा स्यात्प्रोष्ठपदे त्वजैकपाद्
अश्विनी चाश्वयुङ्मासे कार्तिके मासि कृत्तिका ९
मार्गशीर्षे तथा मासे रौद्रनक्षत्रमुच्यते
बार्हस्पत्यं भवेत्पुष्ये माघे पैत्रमिति स्मृतम् १०
फाल्गुने मासि चार्यम्णो नक्षत्रं तीर्थभं भवेत्
मासर्क्षाण्येवमुक्तानि तीथार्थं तु जनार्दन ११

पूर्णमासीयुतान्येव नक्षत्राणि भवन्ति हि
वियुक्तेष्वपि भेष्वेषु नद्यादौ तीर्थमुच्यते १२
युक्ते वाथ वियुक्ते वा मासर्क्षेण तु पर्वणि
समुद्रतीर्थमुद्दिष्टं सर्वपापप्रणाशनम् १३
चैत्रादिसर्वमासेषु रौद्रर्क्षं तीर्थभं भवेत्
षष्ठी माघे तथा ज्येष्ठे चाष्टमी कृष्णपक्षके १४
तीर्थार्थे तु तिथी प्रोक्ते सर्वकामफलप्रदे
उभयोः पक्षयोश्चापि पर्वं तद्वच्चतुर्दशीम् १५
सर्वमासेषु तीर्थार्थं कल्पयेत्कल्पवित्तमः
यजमानस्य जन्मर्क्षं ग्रामादीनां तथैव च १६
लिङ्गस्थापननक्षत्रं तथा चैवायनद्वयम्
विषुवद्वयं जन्मर्क्षं भूपतीनां विशेषतः १७
नक्षत्रतीर्थं संकल्प्य तिथ्यादिषु न कारयेत्
नक्षत्रं मुख्यमेवं स्यात्तिथ्यादि गौणमेव च १८
तमान्नक्षत्रसंकल्पे तिथ्यादितीर्थकं न हि
यदि मोहाच्च कुर्वीत तत्कर्तुः सर्वदोषकृत् १९
तीर्थर्क्षद्वयसंप्राप्तौ चैकमासे परस्परम्
ध्वजारोहादितीर्थान्तमेकमासे प्रशस्यते २०
यागारम्भादि मध्यं स्यादन्यतीर्थाच्च केवलम्
उत्सवेषु नवस्वेषु शैवाद्यैस्तु भवेत्त्रिभिः २१
अधमत्रितयं पश्चाद्धौवनाद्यैस्त्रिभिस्तथा
मध्यमत्रितयं प्रोक्तमथ सौरादिभिस्त्रिभिः २२
उत्तमत्रितयं तेषु प्रथमत्रितयस्य तु
न ध्वजारोहणं प्रोक्तमन्ययोरेव कल्प्यते २३

प्रथमत्रितयस्यापि पञ्चाहत्रियहोत्सवम्
मध्यमत्रितयस्यापि सप्ताहं वा नवाहकम्  २४
अङ्कुरानर्पयित्वादौ भेरीं संताड्य चारभेत्
एकाहमारभेद्धीमान्भेरीताडनपूर्वकम्  २५
भौवनात्पद्मपर्यन्तं ये स्युरत्र महोत्सवाः
ध्वजारोहणपूर्वाश्च भेरीताडनपूर्वकाः  २६
अङ्कुरार्पणपूर्वाश्च त्रिविधास्ते भवन्ति हि
त्रैविध्यं तेषु यत्प्रोक्तं तदिदानीं विविच्यते  २७
षण्णामप्युत्सवानां तु प्रोक्तानां तीर्थभं तु यत्
विगण्य्य ततः पूर्वे त्रिगुणेऽहनि निश्चिते  २८
ध्वजमारोप्य तद्रात्रौ कृत्वा भेर्यादिताडनम्
ततः प्राप्तदिने रात्रावुत्सवारम्भ उच्यते  २९
ध्वजारोहणपूर्वोऽयं प्रोक्तोऽथ विधिरुच्यते
भेरीताडनपूर्वस्य पूर्ववन्निश्चिते सति  ३०
द्विगुणीकृत्य दिवसं तद्रात्रौ ताडनं पुरा
भेर्याः कृत्वा ध्वजारोहं कारयेत्तदनन्तरम्  ३१
ततः प्राप्तदिने रात्र्यामुत्सवारम्भ उच्यते
भेरीताडनपूर्वश्च प्रोक्त एवं जनार्दन  ३२
अङ्कुरार्पणपूर्वे तु प्रोक्ताहस्यादिमे निशि
अङ्कुरानर्पयित्वाथ ध्वजमारोप्य ताड्य च  ३३
भेरीं सदेवताह्वानमारभेदुत्सवं ततः
अङ्कुरार्पणपूर्वश्च प्रोक्त एव विधिर्मया  ३४
ध्वजस्योत्थापनं भेर्यास्ताडनं चाङ्कुरार्पणम्
सर्वेषामुत्सवानां स्याद्व्यत्यासोऽत्र विवक्षितः  ३५

एकाहस्यादिमे रात्रौ त्रियहस्य चतुर्थके
पञ्चाहस्योत्सवस्यापि निशि षष्ठे जनार्दन ३६
भौवनस्याष्टमे रात्रौ शाक्तस्य दशमे निशि
रौद्रस्य द्वादशाहे तु सौरस्यापि त्रयोदशे ३७
चतुर्दशस्य तत्पूर्वे निशि पञ्चदशे भवेत्
पद्मस्य षोडशाहे तु निश्यारम्भ उदाहृतः ३८
रात्रावेवोत्सवारम्भो दिवावभृथ उच्यते
पद्मे त्रिंशद्बलिः प्रोक्तो मानवे चाष्टविंशतिः ३९
सौरे बलिश्चतुर्विंशो रौद्रे द्वाविंश एव हि
शाक्तेऽष्टादश उद्दिष्टा भौवने स्युश्चतुर्दश ४०
भौते दशबलिं विद्धि गौणे षड्बलिरुच्यते
शैवे बलिद्वयं चैव निशि चाह्नि प्रकल्पयेत् ४१
एवं त्रैविध्यमत्रोक्तम् ध्वजादिविधिरुच्यते
उत्तमं दशहस्तं स्यान्मध्यमं नवहस्तकम् ४२
अधमं चाष्टहस्तं स्याद्वस्त्रं प्रोक्तं ध्वजाय वै
चतुःपञ्चषडंशैकविस्तारं स्यात्सुदैर्घ्यकात् ४३
श्रेष्ठमध्यकनिष्ठं तद्विस्तारार्धं शिरो भवेत्
पार्श्वयोस्तु शिरोमानात्कल्पयेत भुजद्वयम् ४४
विस्तारेण समं पादं त्रिपादं चार्धमेव वा
जयदं शान्तिदं चैव पुष्टिदं च क्रमाद्भवेत् ४५
पादयोर्द्वितयं कुर्यात्त्रितयं वा यथेच्छया
कार्पाससूत्रनिष्पन्नं सुश्लक्ष्णं सुदृढं सितम् ४६
नातिस्थूलं नातिसूक्ष्मं केशवैवर्ण्यवर्जितम्
एवं निष्पाद्य वस्त्रं तन्मध्ये च विलिखेद् वृषम् ४७

कलाङ्गुलसमुत्सेधमुत्तमोत्तममुच्यते
अङ्गुलत्रितयह्रासाद्यावन्मन्वङ्गुले कृते ४८
अधमाधममुक्तं स्यादुत्सेधं नवधा वृषे
ककुद्मन्तमतिश्वेतं विधिना कारयेत्ततः ४९
आस्यं शृङ्गे खुराः कर्णौ सास्ना च वृषणावपि
ओष्ठौ च सर्वे रक्ता स्युः श्वेतकृष्णे च लोचने ५०
वालः पीतनिभः प्रोक्तो रक्तपीतनिभं गुदम्
क्षुद्रघण्टामयीं मालां पीतामस्य प्रकल्पयेत् ५१
छत्रचामरसंयुक्तं पद्मविष्टरमास्थितम्
शान्त्यै शयानं पुष्ट्यर्थं स्थितं दीपद्वयान्वितम् ५२
पूर्णकुम्भसमायुक्तं मालादिभिरलंकृतम्
कृताक्षिमीलनं चापि विधिना वृषभेश्वरम् ५३
तमानीय शिवस्याग्रे दक्षिणे चोत्तरेऽपि वा
मण्टपेऽलंकृते रम्ये विधिना स्थण्डिले कृते ५४
तन्मध्ये विन्यसेत्कुम्भं वृषदैवतमुत्तमम्
षोडशप्रस्थसंपूर्णं पक्वबिम्बफलप्रभम् ५५
शोधितं क्षालितं चैव सितसूत्रविचित्रितम्
गन्धोदपूरितं सम्यक् सहिरण्यं सवस्त्रकम् ५६
सकूर्चं सापिधानं च तदर्धपरिमाणकान्
तादृशान्कलशानष्ट दलाग्रेष्वभितो न्यसेत् ५७
तदग्रे स्थण्डिलं कृत्वा ध्वजं तत्रैव विन्यसेत्
तदग्रे सैकतं कृत्वा स्थण्डिलं मुष्टिमात्रकम् ५८
तत्र वह्निं समाधाय शास्त्रदृष्टेन कर्मणा
पुण्याहं वाचयित्वादौ वृषकुम्भे वृषं यजेत् ५९

परितो लोकपालांश्च यथास्थानं समर्चयेत्
मुद्गान्नं तु वृषेन्द्राय दत्त्वा कुम्भस्थिताय तु ६०
वृषमूलेन मन्त्रेण सर्वं तस्य प्रकल्पयेत्
वृषगायत्रिमन्त्रेण ध्वजं चाथ समर्चयेत् ६१
होमयेत्तु ततो मन्त्री विधिना तत्र पावके
समिदाज्यचरूँल्लाजान्मुद्गमाषकुलत्थकान् ६२
तिलांश्च सर्षपान्मन्त्री प्रत्येकं जुहुयाच्छतम्
तदर्धं वा तदर्धं वा वृषमूलेन देशिकः ६३
समिदाज्यचरून्वापि होमयेत्तानथापि वा
सर्पिषा च ततो मन्त्री वृषगायत्रिमन्त्रतः ६४
होमं कृत्वाथ मूलेन दद्यात्पूर्णाहुतिं सुधीः
ततो वृषेन्द्रमग्रस्थमचलं चलमेव च ६५
संस्नाप्याभ्यर्च्य गन्धाद्यैर्हविस्तस्यापि दापयेत्
ततः प्रतिसरं बेरे शूले वापि प्रयोजयेत् ६६
विशेषादर्चनं चाथ तयोर्लिङ्गे च कारयेत्
ध्वजाधिवासनं कृत्वा रात्रौ तस्योत्सवं ततः ६७
प्रभाते विमले धीमन् विधिरेवं प्रदृश्यते
मालाभरणवस्त्राद्यैरलंकृत्य ध्वजं ततः ६८
अर्चयित्वाथ गन्धाद्यैरुत्सवार्थमतन्द्रितः
रथे वा शिबिकायां वा समारोप्यानयेत्सुधीः ६९
अथवानयनं प्रोक्तं केवलं परिचारकैः
शूलमग्रे नयेत्तत्र सर्वालंकारसंयुतम् ७०
बलिदानयुतं वाथ तस्यानु ध्वजमानयेत्
ध्वजस्यानूत्सवेशं च सर्वालंकारसंयुतम् ७१

आनयेद्वाथ चराडेशं ग्रामादिषु यथाक्रमम्
गीतनृत्तसमायुक्तं सर्वातोद्यसमन्वितम्  ७२
संप्रविश्यालयं पश्चाद्ध्वजमारोपयेत्ततः
आरोहणविधिश्चापि वक्ष्यते क्रमशोऽधुना  ७३
सालस्तमालः क्रमुको मधूकः सचम्पकश्चैव सवेणुकश्च
अशोकपुन्नागशिरीषबिल्वा दशाप्यमी स्युर्ध्वजदराडयोग्याः  ७४
वक्राश्च दुष्टाः कृमिकोटराद्यैर्दुःस्थानजाता स्वयमेव शुष्काः
वज्रादिभग्नाः प्रविदारिताश्च वृक्षास्तु सर्वे परिवर्जनीयाः  ७५
प्रासादसमदैर्घ्यं वा शिखरावधिकं तु वा
नासिकावधिकं चापि गोपुरावधिकं तु वा
प्रस्तरान्तं गलान्तं वा ध्वजदराडं प्रकल्पयेत्  ७६
दिग्रुद्रसूर्यैर्ध्वजदराडमानं हस्तैः क्रमात्कन्यसपूर्वमुक्तम्
द्वाविंशदङ्गुल्यममुष्य नाहं मूलेऽधमे मध्यवरिष्ठयोश्च  ७७
द्विद्व्यङ्गुलाद् वृद्धिरथाग्रनाहं तत्तत्त्रियंशेन मितं विदध्यात्
तत्रोपदराडं दृढवेणुजातं स्कन्धत्रयं संप्रतियोजयेच्च  ७८
ध्वजदराडोच्छ्रये तस्मिंश्चतुःपञ्चषडंशकैः
एकांशेनोपदराडं तु कल्पयेत्कल्पवित्तमः  ७९
सप्तषट्पञ्चमात्रं स्यादुपदराडस्य नाहकम्
तत्त्रिभागैकभागेन नाहमग्रे प्रकल्पयेत्  ८०
अश्वत्थचूतप्रभवं तु तस्य स्कन्धत्रयं चापि मधूकजं वा
दराडोपदराडप्रतिबन्धनाय न्यग्रोधजं वा पनसोद्भवं वा  ८१
स्कन्धत्रयस्य चायामं विंशदङ्गुलमुत्तमम्
अङ्गुलाङ्गुलहानिः स्यान्मध्यमे चाधमेऽपि च  ८२
विस्तारं तु भवेत्तस्य चायामे वह्निभागकम्

नेत्रभागेन तस्यापि घनं नेत्राङ्गुलं भवेत् ८३
सरोजमुकुलाकारं स्कन्धत्रयमुदीरितम्
सुषिरं दण्डमानं स्याद्दण्डोर्ध्वे तत्स्थितिः समा ८४
दण्डपार्श्वेऽप्यधःस्कन्धेऽप्युपदण्डस्थितिर्भवेत्
शेषयोस्तत्प्रवेशार्थं सुषिरं तत्प्रमाणतः ८५
उपदण्डाग्रदेशे तु हित्वा वस्वङ्गुलं दृढम्
आयसे वलये बद्धे यन्त्ररज्जुं प्रवेशयेत् ८६
ध्वजदण्डाग्रदेशे स्यादथाधो वलयस्थितिः
वलयं सुदृढं कार्यमुपदण्डाग्रनाहतः ८७
कार्पासतन्तुजो रज्जुर्भवेद् दृढतरः समः
तद्दण्डद्विगुणायामत्रिवृद्ग्रन्थिविवर्जितः ८८
कनिष्ठानामिकाङ्गुष्ठनाहात्सोऽपि त्रिधा स्मृतः
प्रदक्षिणक्रमेणैव वेष्टितं दर्भमालया ८९
मालापल्लवसंयुक्तं यन्त्ररज्जुसमन्वितम्
ध्वजदण्डं तु संपाद्य सर्वलक्षणसंयुतम् ९०
प्रासादाग्रे ततो धीमान्प्राकाराभ्यन्तरेऽपि वा
पीठाग्रे गोपुराग्रे वा वृषाग्रे वृषपृष्ठके ९१
पीठगोपुरयोर्मध्ये वृषगोपुरयोस्तु वा
मर्यादिमध्यमे वापि महामर्यादिमध्यमे ९२
चतुस्तालमितं खात्वा तस्मिन्कूर्मं वृषं तु वा
हेमोद्भूतं हृदा न्यस्य दण्डं तस्योपरि क्रमात् ९३
स्थापयेद्बलवद्भिस्तु देवाभिमुखसंस्थितम्
तन्मूले वेदिकां कुर्याच्चतुस्तालप्रमाणतः ९४
सा भवेदधमा पश्चाद् षड्षडङ्गुलवृद्धितः

मध्यमामुत्तमां चैव कुर्यात्पक्वेष्टकामयीम् ९५
अपक्वाभिरलाभे स्यादिष्टकाभिस्तु वेदिका
विस्तारार्धसमुच्छ्रायां तत्त्रिभागाब्जमण्डिताम् ९६
शैलजां वा स्थिरां कृत्वा तस्यां वा दण्डसंस्थितिः
गोमयेनोपलिप्याथ पुण्याहं तत्र कारयेत् ९७
तदग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः
परिस्तीर्य कुशैः पश्चाद् ध्वजं तत्रैव विन्यसेत् ९८
ध्वजपीठसमीपस्थे स्थण्डिले विन्यसेद् बुधः
पूर्वाधिवासितं कुम्भं वृषराजाधिदैवतम् ९९
कर्णिकायां तु विन्यस्य परितः कलशान्न्यसेत्
उभयत्रापि संपूज्य पूर्ववद्देशिकोत्तमः १००
कूर्चाम्भसा घटस्थेन वृषमूलमनुस्मरन्
वृषेन्द्रे प्राणभूतं तं वृषमन्त्रं प्रयोजयेत् १०१
तस्याङ्गानि यथास्थानं मन्त्ररूपाणि कल्पयेत्
ततो ध्वजं समुद्धृत्य बन्धयेद्यन्त्ररज्जुना १०२
क्षुद्रघण्टासमायुक्तं वृषगायत्रिमुच्चरन्
सुमुहूर्ते सुलग्ने तु सर्वातोद्यसमन्वितम् १०३
आरोपयेद् ध्वजं सम्यग्गीतनृत्तसमन्वितम्
ततः प्रदक्षिणेनैव रज्जुना वेष्टयेत्सुधीः १०४
आरोपितं च संपूज्य सर्वात्महृदयेन तु
नमस्कृत्वा महादेवं वृषेन्द्रं कलशे ततः १०५
कूर्चाम्भसा तु संप्रोक्ष्य ध्वजदण्डस्य मूलके
दिगीशकलशाद्भिस्तु मन्त्रान्स्थानेषु योजयेत् १०६
अथवा ध्वजमूले तु चण्डाष्टवसुदेवतान्

कलशान्पूर्ववत्स्थाप्य संपूज्याथ च मन्त्रवित् १०७
दण्डमूले च परितो विन्यसेदनुपूर्वशः
चण्डेशं दण्डमूले तु दण्डमध्ये ध्रुवं तथा १०८
स्कन्धेषु सूर्यसोमाग्नीनुपदण्डेऽनिलं तथा
ध्वजे च वृषभेन्द्रं तमर्चयित्वा क्रमेण तु १०९
मुद्गान्नं पायसान्नं वा वृषेन्द्राय निवेदयेत्
यन्निवेदितमन्नं तद् वन्ध्यस्त्रीणां प्रदापयेत् ११०
अथवा ध्वजदण्डेन बध्वा संस्थाप्य पूजयेत्
एवमारोपयित्वाह्नि रात्रौ भेरीं तु ताडयेत् १११
प्रासादाग्रे ततो धीमान्मण्टपेऽलंकृतेऽथवा
ध्वजमूले तु संलिप्ते गोमयेन यथाविधि ११२
स्थण्डिलद्वितयं कृत्वा शालिभिर्विमलैस्ततः
लिङ्गस्याभिमुखं तत्र ध्वजस्याभिमुखं तु वा ११३
अस्त्रराजं समाधाय भेरीं तस्याग्रतो न्यसेत्
वेष्टयेन्नववस्त्रेण भेरीं स्थण्डिलसंस्थिताम् ११४
पुण्याहं वाचयित्वाथ प्रोक्षयेत्तेन वारिणा
ततः शूलास्त्रपूजा स्यात्सापीदानीं निगद्यते ११५
शूलस्य मध्यमे पत्रे पूजयेत्तु महेश्वरम्
ब्रह्माणं दक्षिणे पत्रे वामे विष्णुं समर्चयेत् ११६
पालिकायां भवानीं च कुम्भे विघ्नेशमेव च
दण्डाग्रे षण्मुखं तत्र दण्डमध्ये रविं तथा ११७
दण्डमूले शशाङ्कं च तदधश्चण्डमेव हि
लोकपालान्यथास्थानं शूलपीठे समर्चयेत् ११८
एवं गन्धादिभिः शूलं समभ्यर्च्य विधानतः

नैवेद्यं चापि ताम्बूलं दत्त्वा देवस्य मध्यमे  ११९
भेर्याश्च स्वार्चनं पश्चात्तद्विधिश्च निगद्यते
नन्दिनं मध्यमे पूज्य दक्षिणेतरपार्श्वयोः  १२०
सूर्याचन्द्रमसौ पूज्य भेर्यां तत्र यथाविधि
कोणे चण्डं समभ्यर्च्य दिक्पालान्परितो यजेत्  १२१
नैवेद्यं दापयेत्तत्र नन्दिने तु विशेषतः
ताम्बूलं च ततो दद्याद् देवाह्वानं ततो भवेत्  १२२
शिवादिसर्वदेवांश्च साष्टादशगणानपि
नक्षत्रादीन्नदीश्चापि समुद्रान्पर्वतानपि  १२३
द्वीपाँल्लोकान्सपातालान् समाहूय विशेषतः
उत्सवावभृथौ पश्चाच्छ्रावयेत्सकलं जनम्  १२४
वाद्यकं च समाहूय प्रोक्षयित्वा त्वनन्तरम्
तस्य हस्ते तु सलिलं कुसुमं चापि दापयेत्  १२५
सोऽपि पुष्पं विनिक्षिप्य भेरीमुद्धृत्य वादयेत्
वादयित्वात्र दिक्तालान्गाननृत्तसमन्वितम्  १२६
वृषतालं ततश्चान्ते सर्वेषामपि वादयेत्
नृत्तं चैवाष्टदिग्भागे संस्थिताभिर्भवेदिह  १२७
शिवायतनयोषिद्भिः सर्वातोद्यसमन्वितम्
चतुर्विधं भवे दद्यादातोद्यमिति कीर्तितम्  १२८
ततं च विततं चैव घनं सुषिरमेव च
ततं वीणादिकं प्रोक्तं विततं मुरजादिकम्  १२९
घनं च कांस्यतालाद्यं वंशादि सुषिरं स्मृतम्
एतैश्चतुर्भिः संयुक्तैर्गीतैः शब्दैस्तु तच्छ्रुतः  १३०
स हि पञ्चमहाशब्दः शिवप्रियकरः सदा

त्रिसंध्यं कारयेत्तेन चोत्सवेषु शिवालये १३१
भेरीमेवं तु संताड्य ग्रामादिष्वथ देशिकः
बलिप्रदानं कुर्वीत त्रिशूलेन समन्वितम् १३२
बेरेण सहितं वापि बद्धप्रतिसरेण हि
अन्नलिङ्गयुतं वापि सर्वालंकारसंयुतम् १३३
ब्रह्मादीशानपर्यन्तदिक्पालेभ्यो बलिं ददेत्
तांश्चापि स्वस्वदिग्भागे स्थित्वा तु स्तुतिपूर्वकम् १३४
आहूय तीर्थदिवसं श्रावयित्वा जनार्दन
स्वस्वनामपदोपेतैर्मन्त्रैर्दद्याद्बलिं ततः १३५
अथ चैकं बलिं दत्त्वा दिक्पालाह्वानवर्जितम्
देवालये प्रयुञ्जीत प्रोक्ता ह्येवं बलिक्रिया १३६
उत्सवारम्भकालस्य सायाह्ने तु विशेषतः
विघ्नेशं सर्वविघ्नानां शान्त्यर्थमभिपूज्य च १३७
मालाभरणवस्त्राद्यैर्भूषयित्वा विनायकम्
रथे वा शिबिकायां वा समारोप्य च भक्तितः १३८
ग्रामादावुत्सवं कुर्यात्सर्वालंकारसंयुतम्
तदग्रे शूलमस्त्रेशमुत्सवेशं च पृष्ठतः १३९
आनयेद्वा सचण्डेशं केवलं वा विनायकम्
विनायकानु मुद्गादिबीजद्रव्याणि चानयेत् १४०
अङ्कुरार्थं मृदं गृह्य चण्डेशं तदनु क्रमात्
मृत्संग्रहणकं वक्ष्ये तच्छृणु त्वं जनार्दन १४१
समुद्रसरितां तीरे तटाकस्य च तीरके
पुष्करिण्यास्तटे वापि वने वोद्यानकेऽपि वा १४२
शुद्धस्थानमनुप्राप्य शुद्धिं कृत्वाथ भूतलम्

संप्रोक्ष्यास्त्रेण मन्त्रेण भूमिं यष्ट्वा स्वनामतः १४३
खात्वा च पुनरस्त्रेण खनित्रेणोक्षितेन च
कुशेन च परिस्तीर्य प्राङ्मुखो वाप्युदङ्मुखः १४४
मृत्तिकां वालुकां वापि पाणिभ्यां पुरुषेण तु
स्थाल्यां कुशोपरीशेन मन्त्रेणाहृत्य निक्षिपेत् १४५
पुनः प्रोक्ष्य हृदा मन्त्री पुष्पं तस्यां तु विन्यसेत्
शङ्खदुन्दुभिनिर्घोषैर्गीतवाद्यसमाकुलैः १४६
एवं मृद्ग्रहणं कृत्वा तथा चोत्सवमाचरेत्
अथवा मृत्तिकामेनामुत्सवान्ते समाहरेत् १४७
प्रविश्य भवनं पश्चाद् भक्ष्याद्यैस्तु विनायकम्
संपूज्य चाङ्कुरार्थं तु बीजावापनमाचरेत् १४८
तीर्थार्थमङ्कुरं कुर्यात्तत्स्थानं यागमण्टपे
शिवाग्रे मण्टपे वा स्याद्दक्षिणे वाथ चोत्तरे १४९
तद्विधिप्रोक्तमार्गेण कुर्यात्सर्वमतन्द्रितः
ततोऽधिवासनं कुर्याच्छिवयज्ञाय मण्टपे १५०
ऐशान्यामग्निदेशे वा पार्श्वयोरुभयोस्तु वा
उत्तमं दशहस्तं स्यान्मध्यमं सप्तहस्तकम् १५१
अधमं पञ्चहस्तं तु चतुरश्रं मनोरमम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् १५२
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भकं तु वा
पङ्क्तित्रयसमायुक्तं पङ्क्तिमानसमुच्छ्रयम् १५३
तन्मध्ये वेदिकां कुर्यान्नवभागैकभागतः
विस्तारार्धसमुत्सेधां दर्पणोदरसंनिभाम् १५४
परितश्चाष्टकुण्डानि चतुरश्राणि दिक्षु वै

विदिक्षु वृत्तरूपाणि पद्मकुण्डं प्रधानकम् १५५
ईशानशक्रयोर्मध्ये तस्य देश उदाहृतः
उत्तमत्रितयस्यैवं ह्युत्सवस्य विशेषतः १५६
मध्यमत्रितयस्यापि पञ्चाग्निविधिरुच्यते
दिक्षु चत्वारि कुण्डानि पद्ममीशे प्रधानकम् १५७
अधमत्रितयस्याथ कुण्डमेकं विधीयते
यथेष्टदेशे कर्तव्यमाशासु चतसृष्वपि १५८
उत्सवानां तु सर्वेषामेको वा होम उच्यते
गोमयेनोपलिप्याथ मण्डपं वेदिकुण्डयुक् १५९
वितानाशाध्वजैर्युक्तं दर्भमालाभिवेष्टितम्
मुक्तादामसमायुक्तं फलपल्लवशोभितम् १६०
मङ्गलाङ्कुरसंयुक्तं मङ्गलाष्टकशोभितम्
द्वारकुम्भसमायुक्तं द्वारशोभासमन्वितम् १६१
स्तम्भवेष्टनसंयुक्तं कृत्वा तन्मण्डपं सुधीः
पुण्याहं वाचयित्वादौ कृत्वा वै वास्तुहोमकम् १६२
वेदिकायां ततः कुर्यात्स्थण्डिलं शालिभिः समम्
अष्टद्रोणैर्भवेच्छ्रेष्ठं तदर्धैर्मध्यमं भवेत् १६३
तदर्धैरधमं चापि तन्मध्ये पद्ममालिखेत्
कर्णिकाष्टदलोपेतं तण्डुलैः समलंकृतम् १६४
तिलैर्लाजैः कुशैश्चापि शोभितं सुमनोहरम्
कर्णिकायां तु संपूज्य गन्धाद्यैस्तु मनोन्मनीम् १६५
वामादिशक्तीः शक्रादिदलेष्वष्टसु पूजयेत्
अन्तस्तम्भचतुष्के तु धर्मादीन्परितो यजेत् १६६
वेदिकायां भुवं पूज्य परितश्चाष्टमङ्गलम्

पूर्वादिदिक्षु संपूज्य स्वनाम्ना देशिकोत्तमः १६७
द्वारकुम्भेषु पूर्वादि वसूनष्टौ तु पूजयेत्
कुण्डेषु परितश्चाथ प्रागादिषु यथाक्रमम् १६८
भवादिकांस्तु संपूज्य प्रधाने तु शिवं यजेत्
पञ्चहोमविधाने तु पञ्चब्रह्माण्यनुक्रमात् १६९
पुरुषं पूर्वकुण्डे तु दक्षिणेऽघोरमेव च
सद्यं पश्चिमकुण्डे तु वामदेवं तथोत्तरे १७०
ईशानं च प्रधाने च पूजयेत्तु विधानतः
एकहोमविधाने तु शिवमेकत्र पूजयेत् १७१
भद्राख्यं विजयं चैव विजृंभं लोहितं तथा
पूर्वादि तोरणेष्वेतानर्चयेत्तु यथाक्रमम् १७२
वैकर्तनादिकान्बाह्ये यजेत्स्तम्भेषु पूर्वतः
विताने चन्द्रमभ्यर्च्य लोकपालान्ध्वजेष्वथ १७३
वासुकिं दर्भमालायां संपूज्य च विधानतः
एवमभ्यर्च्य देवांस्तु कलशस्थापनं ततः १७४
सौवर्णान्राजतान्वापि ताम्रजान्मृण्मयांस्तु वा
निर्दोषान्सर्वतो रम्यान् कलशांस्तु समाहरेत् १७५
षोडशप्रस्थसंपूर्णं शिवाख्यं कलशं स्मृतम्
तदर्धपरिमाणः स्याच्छक्तिकुम्भो जनार्दन १७६
शेषाश्च तत्समा ज्ञेयास्ते च विद्येश्वरात्मकाः
क्षालिताञ्शोधितांश्चैव प्रोक्षितान्कुशवारिणा १७७
सूत्रेण वेष्टितान्सम्यक् पुनरभ्युक्षितान्हृदा
गन्धोदपरिपूर्णांश्च सहिरण्यान्सवस्त्रकान् १७८
सकूर्चान्सापिधानांश्च गन्धचन्दनचर्चितान्

सर्वानिकत्र संसाध्य सर्वात्मानं समुच्चरन् १७९
शिवकुम्भं न्यसेन्मध्ये शक्तिकुम्भं च दक्षिणे
दलेष्वष्टसु पूर्वादि विद्येशकलशान्न्यसेत् १८०
एवं विन्यस्य कुम्भांस्तु ततो देवान्समर्चयेत्
पश्चिमाभिमुखं स्थाप्य वेदीमध्ये विशेषतः १८१
ध्यात्वा सदाशिवं देवं शिवकुम्भे समर्चयेत्
आदिशक्तिं च तत्कुम्भे विद्येशान्परितो यजेत् १८२
गन्धादिभिः समभ्यर्च्य नैवेद्यान्तं विशेषतः
लोकपालान्यथास्थाने सास्त्रान्सर्वान्समर्चयेत् १८३
ततोऽग्निं विधिवत्स्थाप्य देशिकः शान्तमानसः
सर्वकुण्डेषु होमार्थं मूर्तिपानादिशेत्ततः १८४
सोष्णीषः सोत्तरीयश्च नववासो वसञ्छुचिः
देशिकस्तादृशाः सर्वे साधका वात्र पुत्रकाः १८५
अष्टौ वा चतुरो वाथ होतारस्ते भवन्ति हि
प्रधाने स्वयमेव स्यादेकहोमविधावपि १८६
अध्येतृभिश्चतुर्भिश्च प्रागादिक्रमयोगतः
ऋगादिसामपर्यन्तं कुर्यादध्ययनं ततः १८७
होमयेच्च ततो धीमान्मूर्तिपैः साधकैः सह
अग्निकार्यविधिप्रोक्तं कृत्वा कर्माखिलं बुधः १८८
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान्
मुद्गशलिसमायुक्तान्वेणुमाषांश्च होमयेत् १८९
अश्वत्थोदुम्बरप्लक्षवटाः पूर्वादितः क्रमात्
शमीबिल्वखदिरार्का विदिक्षु परिकल्पिताः १९०
समिदर्थे पलाशस्तु प्रधानस्य प्रकीर्तितः

तैस्तैः परिधयः प्रोक्ताश्चत्वारो विष्टराः समाः  १९१
सर्वत्रौदुम्बरी वात्र समिद् ग्राह्या विचक्षणैः
पञ्चब्रह्मषडङ्गैस्तु समिदादीन्क्रमेण तु  १९२
ईशानदिशिरोऽन्तं स्यात्सप्तद्रव्यहुतं क्रमात्
सद्यादि हेतिपर्यन्तैर्होमयेन्मन्त्रवित्तमः  १९३
प्रतिद्रव्यावसाने तु व्याहृत्या जुहुयात्ततः
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा  १९४
अष्टोत्तरशतं वापि तदर्धं वापि होमयेत्
उत्तमत्रितये सर्वैः सप्तभिर्मध्यमत्रये  १९५
अधमत्रितये षड्भिर्द्रव्यैर्होमोऽत्र कथ्यते
उत्तमे ब्रह्ममूलाङ्गैर्होमं कुर्याद्विचक्षणः  १९६
मध्यमे मूलपूर्वैस्तु होममग्रे प्रकल्पयेत्
कन्यसे ब्रह्मभिस्तद्वत्समिदादिक्रमेण तु  १९७
ततः पूर्णाहुतिं दद्याच्छिवमन्त्रेण देशिकः
ततो वह्निं समभ्यर्च्य परिषिच्य समापयेत्  १९८
ततः शूलं समानीय शांकरे वाथ मारुते
स्थण्डिले स्थाप्य तं देवं पूज्य गन्धादिभिस्तदा  १९९
बन्धयेत्कौतुकं मन्त्री विधिस्तस्य च कथ्यते
शूलाग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्तथा  २००
तन्मध्ये पद्ममालिख्य स्थालीं तत्रैव विन्यसेत्
पूरयित्वा ततः स्थालीं तण्डुलैराढकैस्ततः  २०१
तत्र पद्मं समालिख्य हैमं वा राजतं तु वा
कार्पासतन्तुजं वापि सूत्रं तत्रैव विन्यसेत्  २०२
भस्म चापि ततस्तत्र विन्यसेद्देशिकोत्तमः

पुरयाहं वाचयित्वाथ शूलं संपूज्य पूर्ववत्  २०३
कौतुकं च हृदाभ्यर्च्य सर्वात्मानमुदाहरन्
अस्त्रमध्यमपत्रस्य मूले तद्बन्धयेत्सुधीः  २०४
अस्ति चेत्प्रतिमा तत्र तद्धस्ते दक्षिणे भवेत्
भस्म चाप्यस्त्रमन्त्रेण बन्धिते कौतुके न्यसेत्  २०५
उत्सवप्रतिमायां च तद्वदेवं प्रबन्धयेत्
विशेषेष्वपि बेरेषु यदा येनोत्सवं भवेत्  २०६
तस्मिंस्तस्मिंस्तदा बेरे पूर्वमेव प्रबन्धयेत्
देवीनां गौरिगायत्र्या भवेत्कौतुकबन्धनम्  २०७
लवणोपरि तासां विन्यसेद्वाथ कौतुकम्
अन्येषां स्वस्वनाम्नैव प्रोक्तः प्रतिसरे विधिः  २०८
बन्धनान्ते च सर्वेषां विधिना बलिरुच्यते
ततो बलिप्रदानं स्यात्तद्विधिश्चात्र कथ्यते  २०९
अस्त्रराजादिशस्त्राणि सेश्वराणि यजेत्क्रमात्
तत्तद्दिशोत्तमाङ्गस्थान्यथवा केवलानि च  २१०
लोहानि वा सवृक्षाणि तानि कृत्वा यथाविधि
बल्यर्चयापि वा सार्धं कुर्यात्तां च बलिक्रियाम्  २११
ततश्चाप्यन्नलिङ्गं तु कारयेत्तु विचक्षणः
अन्नेन शालिसिद्धेन दध्याज्याभ्यां प्लुतेन च  २१२
उक्तलक्षणसंयुक्तं स्थलिकामध्यसंस्थितम्
द्वादशाङ्गुलविस्तीर्णमुत्तमं तद्भवेदिह  २१३
अङ्गुलाङ्गुलहान्या तु मध्यमं चाधमं भवेत्
विस्तारेण समोत्सेधं मूलादग्रे क्रमात्कृशम्  २१४
तत्र पाशुपतं देवं सर्वदोषनिकृन्तनम्

त्रिनेत्रं चतुर्भुजाकारं शिखाकोटिसमुज्ज्वलम् २१५
वरदाभयहस्तं च वामसव्याक्षशूलधृत्
एवं ध्यात्वा समभ्यर्च्य गन्धपुष्पादिभिः क्रमात् २१६
अर्चितांस्तु ततो देवान्सर्वांस्तान्परिचारकैः
सोष्णीषैः सोत्तरीयैश्च सपवित्रकरैस्तथा २१७
धृतत्रिपुण्ड्रकैश्चापि वाहयित्वा क्रमेण तु
सोष्णीषः सोत्तरीयश्च बलिदानाय साधकः २१८
अस्त्रस्य पुरतो गच्छेदर्घ्यहस्तः समाहितः
वज्राद्यैः सास्त्रदेवैस्तु परितश्च क्रमात्ततः २१९
तेषां पृष्ठेऽन्नलिङ्गं च प्रोक्तलक्षणलक्षितम्
वितानध्वजसंयुक्तं पिञ्छचामरसंयुतम् २२०
धूपदीपसमायुक्तं सर्वातोद्यसमन्वितम्
आनयेद्बलिदानार्थं बल्यन्नमपि वक्ष्यते २२१
शुद्धतण्डुलसंसिद्धं शिवं वापि तदर्धकम्
हेमरूप्यादिपात्रस्थमुक्तद्रव्यसमन्वितम् २२२
पिधाय तद्विधानेन वस्त्रेण सुसितेन च
साधकस्तु समाहृत्य गन्धपुष्पादिसंयुतम् २२३
पार्श्वे समानतं तस्य सोऽपि मौनव्रतस्थितः
ततो बलिं पुरा दद्यान्नित्यवन्मन्त्रवित्तमः २२४
तत्तद्दिशाधिपानां च महापीठे बलिं क्षिपेत्
गन्धपुष्पादिभिः सम्यक् कुक्कुटाण्डप्रमाणतः २२५
अथवा तद्दिनेशानां समाप्तौ वा बलिक्रियाम्
ग्रामादिषु ततो दद्याद् ब्रह्मादीशान्तमेव च २२६
बलिपीठेऽथवा शुद्धे भूपृष्ठे वा बलिक्रियाम्

बलिदानविधौ तत्र ये देवा वीथिपार्श्वगाः २२७
तेषामग्रे बलिं दद्यात् स्वनामपदमन्त्रतः
अथवा वीथिमध्ये तु तानुद्दिश्य प्रदापयेत् २२८
चतुष्पथे पिशाचेभ्यस्त्रिपथे रक्षसां भवेत्
सभास्थाने सरस्वत्यै ज्येष्ठायास्तु जलाशये २२९
न्यग्रोधे क्षेत्रपालस्य विघ्नेशस्यापि पिप्पले
चैत्यवृक्षे गुहस्यापि कूपे कुम्भोदरस्य च २३०
गोस्थाने चण्डरुद्रस्य भीमरुद्रस्य गोपुरे
एवं बलिविधिः प्रोक्तो दिनेशानप्यथ शृणु २३१
एकाहस्य शिवो देवो ब्रह्मविष्णुमहेश्वराः
त्रियहस्याथ पञ्चाहे मूर्तयः पञ्च चैव हि २३२
उत्सवानां तथान्येषां वक्ष्ये देवान्दिनेश्वरान्
सर्वेषु प्रथमाहस्तु विघ्नेशस्य प्रकीर्तितः २३३
अन्तिमस्तु शिवस्य स्यात्तत्पूर्वो रक्षसो भवेत्
उत्सवस्य तु निर्दिष्टो भौवनस्य जनार्दन २३४
द्वितीयाहस्तु वैरिञ्चस्तृतीयो भौत उच्यते
गान्धर्वस्तु चतुर्थश्च पञ्चमः शाक्र उच्यते २३५
भौवने देवताः प्रोक्ताः शाक्ते चाथ महोत्सवे
षष्ठस्य सप्तमस्यापि मुनयो विष्णुरेव च २३६
पूर्वोक्तैः सह निर्दिष्टा दिनानामधिपाः क्रमात्
रौद्रस्याप्याधिके चाह्नि चाष्टमे नवमेऽपि वा २३७
वसवो मरुतश्चैव क्रमाद्देवाः प्रकीर्तिताः
सौरे चाप्यधिके चाह्नि चन्द्रो देव उदाहृतः २३८
मानवस्योत्सवस्याथ यौ दिनावधिकौ तु तौ

एकादशद्वादशयो रुद्रा रवय एव च  २३९
ततः पञ्चदशाहस्य यो दिनस्त्वधिको भवेत्
त्रयोदशाहस्तस्यापि पितरो देवताः स्मृताः  २४०
एवं दिनाधिपा देवाः क्रमेण परिकीर्तिताः
एकाहस्य तु शैवस्य शुद्धमन्नं ततः परम्  २४१
हारिद्रं कृसरान्नं च गौणे यवभवं तथा
मुद्गमाषकुलत्थान्नं वेणुनिष्पावजं तथा  २४२
भौतोत्सवस्य निर्दिष्टं क्रमेण दिनपञ्चके
अपूपयवगोधूमतिलखण्डाज्यमेव च  २४३
आढकी च क्रमाद् द्रव्यं भौवनाहेषु सप्तसु
प्रियङ्गुवरकौ चापि शाक्तस्याप्यधिकौ मतौ  २४४
रौद्रस्य गुलनीवाराधिकौ तु ततः परम्
सक्तुः सौरेऽधिकः प्रोक्तस्ततः पनसलाजकौ  २४५
मानवेऽप्यधिके द्रव्ये पक्षे स्याच्च पयोऽधिकम्
शुद्धतण्डुलसंसिद्धे सर्पिषान्ने परिप्लुते  २४६
यद्यद्द्रव्यं दिनेषूक्तं तत्तन्निक्षिप्य दापयेत्
सायं प्रातर्बलिं दद्यादथवापि मधुप्लुतम्  २४७
एवं द्रव्यं समाख्यातमुत्सवक्रम उच्यते
ग्रामादौ यत्र देवानां दीयते बलिकर्म तत्  २४८
तत्रैवोत्सवयानं स्यात्सर्वालंकारसंयुतम्
वीथीनां शोधनं पूर्वं मार्जनं चापि कारयेत्  २४९
शुद्धतोयेन सर्वापि वीथीः सर्वत्र सेचयेत्
गृहश्रेण्यां च सर्वत्र बध्नीयाद्विविधान् ध्वजान्  २५०
सभास्थानेऽपि विधिना बध्नीयाद्वा वृषध्वजान्

पूर्णकुम्भं प्रतिद्वारं मङ्गलाङ्कुरसंयुतम्  २५१
दीपयुक्तं समायोज्य दर्भमालावलम्बनैः
रथे वा शिबिकायां वा प्रतिमां बद्धकौतुकाम्  २५२
सर्वाभरणसंयुक्तां चित्रहृद्यांशुकैर्युताम्
मालापुष्पप्रभायुक्तां सर्वालंकारसंयुताम्  २५३
छत्रचामरसंयुक्तं पिञ्छध्वजसमन्वितम्
धूपदीपसमायुक्तं सर्वातोद्यसमन्वितम्  २५४
गीतनृत्तसमायुक्तं ग्रामादावानयेच्छनैः
चण्डेशं च तथाभूतं तस्याश्चानु समानयेत्  २५५
डोलादीनि च यन्त्राणि वृषाश्वगजयन्त्रकान्
गायकान्नर्तकांश्चैव तथा वन्दिजनानपि  २५६
मालाभरणहृद्याङ्गशिवायतनयोषितः
शैवांश्चतुर्विधांश्चापि देशिकादींस्तथैव च  २५७
ब्राह्मणांश्च स्वकर्मस्थान्क्षत्रियादींस्तथैव च
भक्तानन्यान्बहूंश्चापि सेवार्थं तत्र कल्पयेत्  २५८
उत्सवान्ते प्रविश्यान्तः संस्थाप्यास्थानमण्टपे
वितानध्वजसंयुक्ते स्तम्भवेष्टनसंयुते  २५९
पाद्यमाचमनं चार्घ्यं हृच्छिरश्शूलिकाणुभिः
दत्त्वा देवस्य देव्याश्च ततः स्नपनमाचरेत्  २६०
शङ्खदुन्दुभिनिर्घोषैर्जयशब्दादिमङ्गलैः
ततः सिंहासनादौ तु देवमारोप्य भक्तितः  २६१
पाद्यादीन्पूर्ववद्दत्त्वा गन्धाद्यैरर्चयेद्धृदा
वस्त्राभरणमाल्यादींस्तेन मन्त्रेण दापयेत्  २६२
प्रभूतं च हविर्दत्त्वा मुखवाससमन्वितम्

ताम्बूलं च ततो दत्त्वा शङ्खध्वनिसमन्वितम्  २६३
प्रच्छादनपटं चाथ देवाग्रे प्रेरयेत्तदा
गीतनृत्तादिभिः पश्चाद्विनोदं सम्यगाचरेत्  २६४
देशिकः सव्यभागे तु स्वासीनो वामके नृपः
तयोः पृष्ठप्रदेशे तु शिष्या भृत्याश्च संस्थिताः  २६५
मृदङ्गाद्या महाशब्दा देवस्य पुरतः स्थिताः
पद्मपत्रवदाकारं शुद्धकांस्यमयेन तु  २६६
तालमध्येऽवटं कुर्यात्सुषिरे रज्जुयोजनम्
ग्रन्थिपुच्छयुता रज्जुश्चैवं तालद्वयं कुरु  २६७
तालहस्तयुतो वामभागे गान्धर्वसंस्थितेः
मद्दलं च मृदङ्गं वा सव्ये पार्श्वे इति स्मृतम्  २६८
नृत्तं गेयसमायुक्तं बिम्बाग्रे भरतोक्तवत्
उच्चैर्यष्टिप्रदीपैस्तु रात्र्युत्सवमथाचरेत्  २६९
आरात्रिकं च कुर्वीत रात्रावास्थानमण्टपे
सर्वेष्वेषु दिनेष्वेवं कृत्वा बल्युत्सवक्रियाम्  २७०
तीर्थर्क्षादह्नि पूर्वे तु मृगयात्रा भवेत्ततः
तत्पूर्वेऽह्नि च देवेशं नृत्तरूपं महेश्वरम्  २७१
कृष्णगन्धं समालिप्य कारयेच्च महोत्सवम्
व्यत्यासेनाथवा चैते कल्पयेत्कल्पवित्तमः  २७२
तीर्थार्थं कौतुकं शूले प्रतिमायां यथाविधि
बन्धयेत्पूर्वमुत्सृज्य तीर्थर्क्षस्यादिमे निशि  २७३
प्रत्यूषे च ततो धीमान्कुर्यात्तीर्थस्य संग्रहम्
यागधाम्नि शिवाग्रे वा जलतीरेऽथवा सुधीः  २७४
स्थण्डिलद्वितयं कृत्वा शालिभिर्विमलैस्तयोः

पद्ममष्टदलं कृत्वा तण्डुलैरुपशोभितम् २७५
परिस्तीर्य कुशैस्तत्र शूलमेकत्र विन्यसेत्
तदग्रे कलशान्सोदान्सर्वलक्षणलक्षितान् २७६
मध्यात्प्रभृति विन्यस्य नव तेषु समर्चयेत्
नवशक्तीस्तु संपूज्य गन्धपुष्पादिभिः क्रमात् २७७
त्रिशूलं चाथ संपूज्य पूर्ववद्देशिकोत्तमः
ततस्तैः कलशैः शूलमभिषिच्य यथाक्रमम् २७८
अवगाह्य जले पश्चाच्छूलमभ्यर्च्य देशिकः
सर्वास्त्रैर्वा समोपेतः संनिमज्य यथाविधि २७९
प्रविश्य यागगेहं तं शूलं संस्थाप्य पूजयेत्
तीर्थार्थं कौतुके बद्धे तत्र वा कलशांस्तु तान् २८०
शूलेऽभिषिच्य कृत्वा तु धाम चाथ प्रदक्षिणम्
यागधाम्नि ततः शूलं स्थाप्य सम्यक्समर्चयेत् २८१
एवं कौतुकतीर्थं तद्वैकल्पिकमुदाहृतम्
प्रभाते दिवसे कृत्वा पूजाहोमबलिक्रियाम् २८२
उत्सवं च समाप्यैवं चूर्णोत्सवमथाचरेत्
सुशुष्कां रजनीं शुद्धां शुद्धपात्रे विगृह्य च २८३
आस्थानमण्टपे तत्र शिवाग्रे वाथ मण्टपे
स्थण्डिलद्वितयं कृत्वा विधिना तत्र विन्यसेत् २८४
शूलं तदग्रे विन्यस्योलूखलं मुसलेन युक्
आवेष्ट्याहतवस्त्रेण शूलं संपूज्य पूर्ववत् २८५
लूखलं मुसलं चैव हेतिना सम्यगर्चयेत्
लूखले रजनीं तत्र निक्षिपेद्धृदयेन तु २८६
चूर्णयेन्मुसलेनैव घोरमन्त्रं समुच्चरन्

यजमानादिभिः पश्चाच्चूर्णयेद्रजनीं तदा २८७
ततश्चूर्णीकृतं सर्वं पात्रे स्वर्णादिनिर्मिते
निक्षिप्यास्त्रेण मन्त्रेण ततस्तच्च त्रिधा भजेत् २८८
शिवलिङ्गाभिषेकार्थं तथार्चाशूलयोरपि
जनानामपि सर्वेषां भागमेकं प्रकल्पयेत् २८९
अथवा रजनीचूर्णं तैलेन च समन्वितम्
तीर्थकाले प्रयोक्तव्यं प्रतिमाशूलयोरपि २९०
जनानामपि सर्वेषां तस्मिन्काले प्रयोजयेत्
आस्थानमण्टपे रम्ये शिवाग्रे वाथ मण्टपे २९१
जलतीरेऽथ शुद्धे च निम्नोन्नतविवर्जिते
गोमयालेपिते रम्ये शालिभिः स्थण्डलद्वयम् २९२
कृत्वा तत्र त्रिशूलं तु स्थाप्यैकत्र तदग्रके
स्थण्डिले कलशान् रम्यान्पूर्ववत्संस्कृतानपि २९३
नवसंख्यान्समादाय मध्यादीशान्तमेव च
ततस्त्रिशूलमभ्यर्च्य गन्धपुष्पादिभिः क्रमात् २९४
कलशेष्वथ सर्वेषु गङ्गाद्यास्तीर्थदेवताः
पूजयेन्मध्यमारभ्य तासां नामाभिधीयते २९५
गङ्गा च यमुना चैव नर्मदा च सरस्वती
सिन्धुर्गोदा च कावेरी शोणा पुष्करमेव च २९६
प्रणवादिचतुर्थ्यन्तस्वनामपदमन्त्रकैः
देवताह्वानमप्यत्र कुर्याद्वा पूर्ववत्सुधीः २९७
ततः स्नानोचितं द्रव्यं सर्वं शूलाय दापयेत्
दन्तकाष्ठं च दत्त्वास्य हृन्मन्त्रेण विचक्षणः २९८
सुमुहूर्ते सुलग्ने तु कलशैर्मध्यमक्रमात्

अभिषिच्यास्त्रराजानं ततस्तीर्थेऽवगाह्य च २९९
अस्त्रराजं समभ्यर्च्य गन्धपुष्पादिभिः क्रमात्
सास्त्रान्दिगीश्वरान्वापि परितस्तत्र पूजयेत् ३००
आचार्यो मज्जनं कुर्यात्त्रिशूलेन समाहितः
ये तत्र सह मज्जन्ति जना भक्तिसमन्विताः ३०१
ब्रह्महत्यादिभिः सर्वैर्मुच्यन्ते पापराशिभिः
समुत्तीर्य जलात्पश्चात् कृत्वा धामप्रदक्षिणम् ३०२
ततो यागगृहं गत्वा दद्यात्पूर्णाहुतिं तदा
पूर्णाहुतिविधिं वक्ष्ये ततः शृणु जनार्दन ३०३
अभ्युक्ष्य स्रुचमस्त्रेण सर्पिषापूर्य तद्बिलम्
प्रणवेन ततः पुष्पं साक्षतं सकुशं स्रुचि ३०४
विन्यस्य स्रुवमारोप्य तन्मध्ये चाप्यधोमुखम्
दण्डमूलाग्रयोः पश्चाद्गृहीत्वा स्रुक्स्रुवौ च तौ ३०५
सव्येतराभ्यां पाणिभ्यां विन्यस्यास्यं तु शङ्खवत्
ऋजुकायः समुत्थाय स्थितः समपदान्वितः ३०६
नाभिदघ्नं तयोः कृत्वा मूलं तु करयोस्ततः
दक्षिणेतरयोः कुर्यादुन्नत्यवनतिं तयोः ३०७
यथा धाराग्निमध्ये तु पततीत्येकधा सुधीः
पूर्णाहुतिं तु मूलेन सम्यक्पश्चात्समापयेत् ३०८
होमान्ते तु पुरा दद्यादनेन विधिना गुरुः
शिवयोः कुम्भमुद्धृत्य कलशानितरानपि ३०९
स्कन्धे संवाहयित्वाथ प्रासादे तु प्रदक्षिणम्
उपावृत्त्य प्रविश्याथ शिवमन्त्रमनुस्मरन् ३१०
शैवेन शिवलिङ्गं तु कुम्भेनैवाभिषेचयेत्

शक्तिकुम्भेन पीठं तु तद्गायत्रीमुदाहरन्  ३११
वेदिस्थैः कलशैः पश्चात् कुर्याल्लिङ्गेऽभिषेचनम्
अथवाताननुद्धृत्य योजयित्वा शिवे घटे  ३१२
शिवयोः कलशावेव समुद्धृत्याभिषेचयेत्
ततश्च स्नपनं कुर्यात्सहस्रादिषु संभवैः  ३१३
कलशैस्तु विधानेन ततो नैवेद्यमुत्तमम्
दत्त्वा देवस्य सर्वेषां सकलानां च देशिकः  ३१४
स्नपनं च पृथक् कृत्वा नैवेद्यं च प्रदापयेत्
उत्सवेष्वेषु सर्वेषु कुर्यात्सर्वदिनेष्वपि  ३१५
सायं प्रातर्विशेषेण शिवलिङ्गे जनार्दन
सकलानां च सर्वेषां यथावित्तानुसारतः  ३१६
तस्मिन्निशि  तृतीये वा पञ्चमे वाथ सप्तमे
ध्वजावरोहणं कुर्याच्चण्डयागसमन्वितम्  ३१७
चण्डयागमथो वक्ष्ये सर्वकामार्थसाधनम्
गणानामपि सर्वेषां चण्डानां नायकस्तु यः  ३१८
चण्डेशस्तु भवेत्सोऽयं तस्य पूजाप्रकल्पना
चण्डयागः स्मृतः सोऽत्र समासेनाभिधास्यते  ३१९
धाम्नि चण्डेश्वरस्यार्चामभिषिच्य समाहितः
गन्धोदकेन तस्याग्रे कलशान्स्थण्डलेऽथ वा  ३२०
पूर्ववत्स्थापयित्वाऽथ तेषु मध्ये यजेत्सुधीः
चण्डेशमथ शेषेषु वसूनष्ट यजेत्क्रमात्  ३२१
गन्धादिभिः समभ्यर्च्य तैश्चण्डमभिषेचयेत्
हविर्दत्त्वाथ ताम्बूलं दद्याच्चण्डे समाहितः  ३२२
ध्वजान्तिकं ततो गत्वा तन्मूले स्थण्डिलं ततः

शालिभिर्विधिना कृत्वा तत्र संस्थापयेन्नव ३२३
कलशांस्तेषु मध्यस्थे वृषेन्द्रं देवमर्चयेत्
परितो लोकपालांश्च ध्वजे वापि वृषं यजेत् ३२४
ततस्तैः कलशैः सर्वैर्दराडमूलेऽभिषेचयेत्
ततो वृषभदेवस्य मुद्गान्नं तु निवेदयेत् ३२५
ततश्चराडेश्वरं चैव ध्वजस्थं वृषभेश्वरम्
सूर्यसोमाग्निकांश्चैव क्रमेरौव जनार्दन ३२६
पूजयित्वाथ गन्धाद्यैस्तत्तत्स्थानाद्विसर्जयेत्
ध्वजावरोहरां कुर्यादस्त्रमन्त्रं समुच्चरन् ३२७
ततश्चापि त्रिशूलेन सर्वातोद्यसमन्वितम्
ग्रामादिषु बलिं दद्यात्संधिदेवान्विसर्जयेत् ३२८
प्रासादे वा बलिं दत्त्वा विना शूलं विसर्जयेत्
शिवोत्सवेषु मातॄरां बल्युत्सवविधिं सुधीः ३२९
वर्जयेदन्यदेवानां बल्युत्सवविधावपि
यौगपद्यं तु शैवेन भवेत्तत्र दिने दिने ३३०
शैवं प्राधानिकं कुर्याद्देशिकः शास्त्रचिन्तकः
देवताह्वानकाले तु श्रुत्वा तीर्थदिनं जनः ३३१
यस्तीर्थसेवां नो कुर्यात्तस्याधिव्याधिसंभवः
कल्यारां देवकल्यारो न कुर्वीत तथा भवेत् ३३२
तस्मात्तौ परिहर्तव्यौ नरेरा हितमिच्छता
एवं शिवोत्सवे सम्यङ् निर्वृत्ते विधिना ततः ३३३
दत्तिरां देशिकस्यापि विभवस्यानुरूपतः
होतॄरां जापिनां चैव दद्याद्वस्त्रादिभिस्तदा ३३४
शिवभक्तांश्च संपूज्य प्रीयतां मे सदाशिवः

इत्युक्त्वा प्रणमेद्भूयो भूयो देवं सदाशिवम्  ३३५
इति यः कारयेन्मर्त्यः शिवोत्सवमनुत्तमम्
सर्वयज्ञफलं प्राप्य शिवेन सह मोदते  ३३६
इत्यजिताख्ये महातन्त्रे क्रियापादे महोत्सवविधिर्नाम सप्तविंशः पटलः

## अष्टाविंशः पटलः

## डोलोत्सवविधिः

डोलोत्सवविधिं वक्ष्ये शृणु सम्यग्जनार्दन
आयुरारोग्यधनदं राजराष्ट्रविवर्धनम्  १
ग्रामशान्तिकरं पुण्यं सर्वपापहरं शुभम्
मङ्गलार्थं जयार्थं च राज्ञां प्रीतिकरं शुभम्  २
नित्यमारोग्यफलदं पुत्रपौत्रविवर्धनम्
धर्मार्थकाममोक्षार्थं कुर्यान्मन्त्री यथाविधि  ३
धनुर्मासे महाविष्णो डोलानां कर्म चोत्तमम्
आर्द्रानक्षत्रमुद्दिश्य तत्पूर्वे व्रतमुत्सवम्  ४
पुष्ये वा कुम्भमासे वा झषे त्वाष्ट्रे वृषेऽथवा
याम्ये वाथ शुचौ विष्णो कुर्वीत श्रवणेऽपि वा  ५
कुर्यात्प्रोक्तेषु मासेषु तत्तन्मासर्क्षकान्तकम्
पूर्णिमायामथान्तं वा भूताष्टम्यन्तमेव वा  ६
राज्ञां त्रिजन्मनक्षत्रे यजमानदिनेऽपि वा
प्रोक्ता मङ्गलदाः काला डोलारोहणकर्मणि  ७
गुणसंख्ये भूतसंख्ये ऋषिसंख्यदिनेऽपि वा
नवाहे केवले रौद्रे कर्तव्यो मधुसूदन  ८

पञ्चधा च समाख्यातो डोलारोहो जनार्दन
एकत्रिपञ्चदिवसे चोत्सवे तु विना ध्वजम् ९
सप्ताहे च नवाहे च ध्वजयुक्तं तु कारयेत्
अङ्कुरार्पणपूर्वं च भेरीताडनपूर्वकम् १०
ध्वजारोहणपूर्वं तु कुर्याच्छास्त्रोक्तवर्त्मना
उत्सवारम्भकालस्य सायाह्ने तु विशेषतः ११
विघ्नेशं सर्वविघ्नानां शान्त्यर्थं चार्चयेद् बुधः
आवाहनार्घ्यपाद्याद्यैः षोडशैरुपचारकैः १२
विघ्नेशं पूजयेन्मन्त्री यथाशास्त्रं जनार्दन
विघ्नेश्वरस्य पूजान्ते मूललिङ्गस्य संनिधौ १३
संकल्पं चैव पुण्याहं ततो विज्ञाप्य पूजनम्
सामान्यार्घ्यं तु संकल्प्य सकलीकृतविग्रहः १४
अष्टपुष्पार्चनान्ते तु प्रार्थयेत्परमेश्वरम्
भगवन् देवदेवेश सर्वदेववरप्रद १५
डोलोत्सवविधौ सम्यगनुज्ञां कुरु शंकर
प्रार्थयेत्परमेशानं ततो मृत्संग्रहाय वै १६
विघ्नेशं चास्त्रराजानं चण्डेशं चार्चयेद् गुरुः
वस्त्राभरणमाल्याद्यैर्भूषयित्वा विनायकम् १७
धूपं दीपं च नैवेद्यं ताम्बूलं च प्रदापयेत्
छत्रचामरसंयुक्तं ध्वजपिञ्छसमन्वितम् १८
नृत्तगीतसमायुक्तं गणिकासंघसंयुतम्
शङ्खकाहलसंनादभेरीघोषसमन्वितम् १९
उद्याने वा नदीतीरे पुष्करिण्यास्तटेऽपि वा
बिल्वमूले च मन्दारे तथा तुलसिमूलके २०

पिप्पले राजवृक्षे वा पलाशे यज्ञवृक्षके
तत्तद्वृक्षसमीपे तु पुण्याहप्रोक्षणं हरे २१
हस्तमात्रप्रविस्तारं निम्नोन्नतविवर्जितम्
स्थण्डिलं कल्पयेद्धीमानष्टपत्रं कुशेशयम् २२
ततोपरि परिस्तीर्य चतुर्दिशि जनार्दन
मध्ये ब्रह्माणमभ्यर्च्यानन्तं वै पूर्वदिग्गतम् २३
विजयं चाग्निदेशे तु भद्रं याम्यप्रदेशके
जयन्तं नैर्ऋते भागे भ्रमरं वारुणे तथा २४
वायव्ये प्रस्थितं चैव जृम्भकं सोमदेशके
ईशानं शूलिनं चैव ब्रह्माद्यादि प्रपूजयेत् २५
शुद्धौदनबलिं दद्यात्तत्तन्नामपुरःसरम्
ताम्बूलं दापयेत्पश्चाद्धूपदीपं जनार्दन २६
बलिं विसर्जयेद्धीमांस्तत्तद्दिशि समर्चयेत्
पुनः प्रोक्ष्य हृदा मन्त्री कुशगोमयवारिणा २७
आवाहयेत्ततो भूमिं गन्धाद्यैरर्चयेत्ततः
दिशां पतींस्ततश्चाष्टौ पूजयेत्पुरुषोत्तम २८
पूजितेन खनित्रेण हैमपात्रे त्रिराहरेत्
श्वभ्रे हृदाहरेन्मृद्भिः पूरयेत्तु विचक्षणः २९
पुनः प्रोक्ष्य हृदा मन्त्री पुष्पकूर्चं तु निक्षिपेत्
पूर्ववद्धूपदीपं च संछाद्य क्षौमवाससा ३०
मालां तदुपरि न्यस्य शिष्यहस्ते प्रदापयेत्
गजस्योपरि यानस्य धारयेच्छिष्य एव च ३१
गीतवाद्यैस्तथा दीपैश्छत्रचामरतूर्यकैः
वास्तुप्रदक्षिणं कृत्वा निशायामङ्कुरार्पणम् ३२

देवाग्रे स्थण्डिलं कृत्वा चाष्टपत्रं सकर्णिकम्
उक्षं च गोपतिं चैव शृङ्गिणं नन्दिनं तथा ३३
पशुपतिं गन्धवाहं शङ्कुकर्णं महोदरम्
वृषेन्द्रं नवकुम्भेषु पूर्वादिषु दले न्यसेत् ३४
सद्यो वृषाधिवासस्य गव्येन प्रोक्षणं कुरु
मण्टपं पूजयेत्पश्चात्पटस्याराधनं हरे ३५
नयनोन्मीलनं पश्चाज्जलाधिवासनं तथा
विदध्यात्पञ्चशयनं बेरशोधनकर्म च ३६
वृषस्य स्थापितस्यैवं शृङ्गे प्रतिसरं कुरु
ततो होमं च नैवेद्यं देवतावाहनं तथा ३७
भेरीं संपूज्य विधिवत्तत्ताडनं समाचरेत्
ध्वजमुद्धृत्य देवेशमस्त्रराजसमन्वितम् ३८
ग्रामप्रदक्षिणं कृत्वा संधिदेवान्समाह्वयेत्
दण्डमूलं ततो गत्वा पुण्याहप्रोक्षणं कुरु ३९
दण्डमूलेऽभिषिच्याथ सपर्यां च नरोत्तम
कूर्चाम्भसा घटस्थेन पटस्य प्रोक्षणं चरेत् ४०
देशिकः सुप्रसन्नात्मा नृपतेर्दक्षिणां ददेत्
ततो ध्वजं समुद्धृत्य रोपयेद्देशिकोत्तमः ४१
दण्डे सव्यक्रमेणैव मूले रज्जुं सुबन्धयेत्
दिशीशकलशानष्टौ दण्डमूलेऽभिषेचयेत् ४२
भवादिकाष्टमूर्तीनां दलाग्रेषु बलिं क्षिपेत्
धूपदीपं ददेत्पश्चाद्देशिको मन्त्रपुष्पकैः ४३
ततो नीराजनं कृत्वा देवदेवे शिवालये
ततो यागगृहं गत्वा मण्टपं समलंकुरु ४४

पूर्ववत्कल्पयेत्कुण्डं यथाविधि जनार्दन
पुण्याहं वाचयित्वा तु कृत्वा वै वास्तुपूजनम् ४५
उत्सवाङ्कुरार्पणं च तथा तीर्थाङ्कुरार्पणम्
पूर्ववच्छालिमानेन नलिनं वेदिकां लिखेत् ४६
तिलतण्डुलरेखाश्च लाजैः पुष्पैः परिस्तरेत्
मध्यमे शिवकुम्भं तु वर्धनीं वामपार्श्वके ४७
सकूर्चान्पल्लवोपेतान्सवस्त्रान्सापिधानकान्
मध्यमे हेमनिष्कं तु वर्धन्यां वा तदर्धकम् ४८
अष्टविद्येश्वरान्कुम्भान् प्राग्दलादिषु पूजयेत्
द्वारादिकलशान्स्थाप्य पूर्वादिषु यथाक्रमम् ४९
पञ्च चैकचतुस्त्रीणि भूतदृक् च चतुस्त्रयः
शान्तिनन्दिमहाकाला बलारातिश्च पूर्वके ५०
इन्द्राग्न्योरन्तरे भानुराग्नेय्यामग्निपूजनम्
विद्यां भृङ्गिगणेशौ च यमं याम्ये प्रपूजयेत् ५१
विदिक्षु निर्ऋतौ विष्णो वास्तुब्रह्म न्यसेत्क्रमात्
निवृत्तिं वृषभं स्कन्धं वारुणे च हरिप्रियाम् ५२
पवनं च गणेशं च पश्चिमोत्तरदिक्षु वै
प्रतिष्ठां गौरिचण्डेशौ धनदं सौम्यदेशके ५३
ऐशान्यामीशलोकेशगुरुपङ्क्तिं न्यसेत्क्रमात्
प्रागादीशानपर्यन्तमस्त्रराजं क्रमान्न्यसेत् ५४
नैवेद्यं दापयेत्पश्चाद्धटस्थाय निवेदयेत्
पञ्चाग्निर्वाथ कर्तव्य एकाग्निं वापि कारयेत् ५५
ततो होमं प्रकुर्वीत यथाविधिपुरःसरम्
उत्सवेशं च संपूज्य हेमनिष्कसकौतुकम् ५६

नैवेद्यं दापयेद्धीमानपूपादिसमन्वितम्
ताम्बूलं दापयेद्धीमान्धूपदीपपुरःसरम् ५७
यागवीक्षां प्रकुर्वीत यथाविधि जनार्दन
ग्रामप्रदक्षिणं कृत्वास्थानमण्डपसंस्थिते ५८
उत्सवेश्वरमारोप्य ततः सिंहासने कुरु
विनोददर्शनं चैव स्नापयेदुत्सवेश्वरम् ५९
वस्त्राभरणमाल्याद्यैरलंकृत्य जनार्दन
चित्रान्नापूपनैवेद्यं ताम्बूलं च प्रदापयेत् ६०
धूपदीपादिभिश्चैव पाद्याद्यैरुपचारकैः
सायाह्ने स्याद्धोमकर्माप्यस्त्रदेवं विचिन्तयेत् ६१
वाहनादि यथादेवं तत्तद्देवान् सुपूजयेत्
होमान्ते यागवीक्षायां डोलामण्टपसंनिधौ ६२
मण्टपं कारयेद्धीमानायताश्रं तु कल्पयेत्
द्वित्रिहस्तं समारभ्य षट्षड्ढस्तविवर्धनात् ६३
स्यात्पञ्चदशहस्तान्तमायादिशोधनं कुरु
षड्विस्तारं चतुर्भाग एकांशं तु धरातलम् ६४
तत्समं तु त्रिपादं वाप्यधस्तात् सोमपीठकम्
स्तम्भोच्चस्य विधिः सम्यगधिष्ठानत्रियंशकः ६५
अधिष्टानत्रिभागे तु पञ्चभागेन चैव हि
डोलास्तम्भस्य चोत्सेधं कल्पयेच्चैव केशव ६६
स्तम्भोच्चस्याष्टमे भाग एकभागेन विस्तृतम्
विस्ताराद्दशहीनं तु स्तम्भाग्रस्य विशालकम् ६७
एकांशमुत्तरोत्सेधं प्रपालंकृतं माधव
तत्स्तम्भपञ्चभागे तु त्रिभागं तोरणोदयम् ६८

व्यालहंसादिसंयुक्तं नासिकायां तु तोरणम्
स्वर्णं वा रजतं वापि ताम्रं वाप्यथ कल्पयेत् ६९
नानालंकारसंयुक्तं डोलानां मधुसूदन
तन्मण्टपमलंकृत्य वितानध्वजचामरैः ७०
नानापिञ्छसमायुक्तं नाना छत्रसमन्वितम्
पाटलैः कर्णिकारैश्च चम्पकैः केसरैस्तथा ७१
भूपदीशिवमाल्यैस्तु पुन्नागमल्लिकै स्तथा
मागधीकरवीरैश्च हेमधुत्तूरकैस्तथा ७२
कुशेशयप्रतीहासै रुद्रपुष्पकटीमुरैः
पूगीफलादिरम्भाम्रनारङ्गलिकुचैस्तथा ७३
तन्मण्टपमलंकृत्य चाष्टद्रोणैश्च शालिभिः
शाल्यर्धतण्डुलान्नचस्य तण्डुलार्धतिलान्नचसेत् ७४
तिलार्धलाजा एवोक्ता दर्भैः पुष्पैः परिस्तरेत्
तत्र विघ्नेशपूजां च संकल्पं चैव बुद्धिमान् ७५
पुण्याहप्रोक्षणं कृत्वा डोलामस्त्रेण देशिकः
तस्यामभ्यर्चयेच्चैवं यथाविधि जनार्दन ७६
धर्मं ज्ञानं च वैराग्यमैश्वर्यं चार्चयेद् गुरुः
पिनाकं विष्टरेऽभ्यर्च्य वलये कुण्डलीं तथा ७७
ज्ञानशक्तिं क्रियाशक्तिमिच्छाशक्तिं तथैव च
डोलायां वलये चैवाभ्यर्च्य कुण्डलिनीं तदा ७८
शृङ्खलायां वृषं चैव बिन्दुं तद्वलये न्यसेत्
शुद्धविद्यां मनोन्मन्या फलकायां न्यसेत्क्रमात् ७९
उत्सवेश्वरमारोप्य डोलोर्ध्वे तु दृढं तथा
वामे शक्तिं समारोप्य धूपदीपादिनार्चयेत् ८०

आरात्रिकं ततो दद्याद्वेदविज्ञापनं कुरु
स्तोत्रध्वनिसमायुक्तं शङ्खध्वनिसमन्वितम् ८१
गीतवाद्यैश्च नृत्तैश्च विज्ञाप्य तोषयेच्छिवम्
महाहविर्निवेद्याथ धूपदीपादिकं ददेत् ८२
ग्रामप्रदक्षिणं कृत्वा नीत्वा देवं शिवालयम्
देवं संस्नाप्य संपूज्य नैवेद्यादीन्निवेदयेत् ८३
मन्त्रपुष्पं ततो दद्यादुदकेन ददेद् बुधः
एवं प्रतिदिनं कुर्यात्सायं प्रातस्तु चोत्सवम् ८४
तीर्थाहात्पूर्वदिवसे नटेशस्नपनं कुरु
कौतुकं कृष्णगन्धैश्च तत्तत्स्थाने न्यसेत्क्रमात् ८५
नैवेद्यं धूपदीपं च ततो धामप्रदक्षिणम्
प्रदक्षिणाय सागे तु देवदेवे शिवालये ८६
तद्दोषशमनार्थाय कर्पूरालेपनं हरे
मध्यहारे निवेशश्च वेदगीतादिभिः सह ८७
धूपदीपं च नैवेद्यं देव्या सह निवेशनम्
प्रत्यूषे कौतुकं तीर्थमस्त्रराजस्य देशिकः ८८
अरुणोदयवेलायां नटेशभ्रमणं हरे
देवस्य दर्शनं वीथ्यां देव्याः क्रोधसमन्वितम् ८९
रम्भादण्डैश्च क्रोधेन भक्तानां प्रहरस्तथा
देव्याश्च क्रोधशान्तिः स्याद्देवयोश्च प्रदक्षिणम् ९०
आरात्रिकं विधानेन प्रविश्य भवनं कुरु
होमान्ते चैव कर्तव्यं पूर्वं वा बलिमारभेत् ९१
सोमास्कन्देश्वरं देवमस्त्रेण सह देशिकः
ततो भक्तजनैः सार्धं नद्यादौ स्नानमाचरेत् ९२

तीरे समतलं कृत्वा प्रपायामुत्सवेश्वरम्
स्नपनैः पञ्चगव्यैश्चाप्युत्सवेश्वरपूजनम् ९३
स्नानान्ते चैव कर्तव्यं कौतुकं मुच्य देशिकः
वस्त्राभरणमाल्याद्यैरलंकृत्य जनार्दन ९४
धूपदीपं निवेद्याथ ततो ग्रामप्रदक्षिणम्
प्रविश्य भवनं पश्चात्ततो यागगृहं गतः ९५
यागादिकुम्भानुत्सृज्य पूर्णाहुतिमथाचरेत्
पादप्रक्षालनं कृत्वा पश्चादाचार्यमर्चयेत् ९६
हारकेयूरकटकैर्हेमयज्ञोपवीतकैः
गन्धपुष्पैश्च धूपैश्च यजमानोऽर्चयेद् गुरुम् ९७
वेद्यूर्ध्वे स्थापितान्कुम्भान्परिचारकमूर्धनि
धामप्रदक्षिणं कृत्वा शुद्धवाद्यसमन्वितम् ९८
अर्धमण्टपे संस्थाप्य त्रिपाद्युपरि तान्घटान्
सामान्यार्घ्यं तु संकल्प्य पुण्याहप्रोक्षणं कुरु ९९
मूललिङ्गेऽभिषिच्याथ स्नपनाद्यैर्विशेषतः
महाहविर्निवेद्याथ पाद्याद्यैरुपचारकैः १००
धाम्नि चण्डेश्वरे प्रोक्तनैवेद्यादीनि दापयेत्
ध्वजदण्डान्तिकं गत्वा चण्डेशास्त्रसमन्वितम् १०१
ध्वजावरोहणं कृत्वा चास्त्रमन्त्रं समुच्चरन्
अवतार्य पटस्थं च योजयेद् वृषभं वृषे १०२
चण्डेशं चास्त्रराजानं ग्रामादिषु बलिं क्षिपेत्
बलिं विसर्जयेद्धीमाँल्लोकपालान्विसर्जयेत् १०३
प्रविश्य भवनं पश्चाद्बलिपीठे बलिं क्षिपेत्
पादप्रक्षालनं कृत्वा प्रविशेदालयं प्रति १०४

इति यः कारयेन्मर्त्यो डोलोत्सवमनुत्तमम्
सर्वयज्ञफलं प्राप्य शिवेन सह मोदते १०५
इत्यजिताख्ये महातन्त्रे क्रियापादे डोलोत्सवविधिर्नाम अष्टाविंशः पटलः

एकोनत्रिंशः पटलः
स्नपनविधिः

अतः परं प्रवक्ष्यामि शिवस्य स्नपनं हरे
अकालमृत्युशमनं सर्वरोगभयापहम् १
सर्वपापप्रशमनं शोकमोहविनाशनम्
सर्वाभीष्टप्रदं पुंसां सर्वारिष्टनिवारणम् २
आयुःश्रीकीर्तिजयदं तुष्टिपुष्टिप्रदं सदा
अवग्रहहरं लोके सर्वोपद्रवनाशनम् ३
विषुवायनकालेषु तथा विष्णुपदीषु च
षडशीतिमुखाद्येषु सूर्येन्दुग्रहणे तथा ४
अष्टम्यां च चतुर्दश्यां पञ्चदश्यां च पक्षयोः
आर्द्रायामर्कवारे च तीर्थर्क्षेषूत्सवेषु च ५
प्रतिष्ठान्ते पवित्रे च कृत्तिकादीपरोहणे
नवनैवेद्यकाले तु घृतस्नानोत्तरे तथा ६
घृतकम्बलके चैव वसन्तोत्सवकर्मणि
प्रायश्चित्तेषु सर्वेषु जीर्णोद्धारविधौ तथा ७
दिव्यान्तरिक्षभौमानामद्भुतानां च दर्शने
अवग्रहे च जन्तूनां ज्वरमार्यादिवर्तने ८
परचक्राद्भयोत्पत्तौ यज्ञारम्भे द्विजन्मनाम्

विद्यारम्भे विवाहे च राज्ञां चैवाभिषेचने ९
युद्धारम्भे पुरारम्भे कृषिवाणिज्ययोस्तथा
शताभिषेककाले च गवां रोगप्रदर्शने १०
यौवराज्याभिषेके च पुष्यस्नाने च भूभुजाम्
गजाश्वरोगसंभूताविदं स्नपनमारभेत् ११
कलशस्थापनार्थाय मण्टपं कारयेत्पुरा
त्रयोदशकरैः श्रेष्ठं मध्यं सप्तकरैरपि १२
अधमं पञ्चहस्तैश्च चतुष्षष्ट्यङ्घ्रिसंयुतम्
प्रथमं मध्यमन्त्यं च द्वादशस्तम्भसंयुतम् १३
रुद्रतालोच्छ्रयाः स्तम्भाः प्रथमस्य प्रकीर्तिताः
शेषयोर्नव तालोच्चा मण्टपानां तलोच्छ्रयम् १४
षोडशाङ्गुलमानं स्याद्दर्पणोदरसंनिभम्
कलशस्थापने योग्यः प्रासादाग्रे तु नो भवेत् १५
मण्टपो यदि तत्रासौ मण्टपानां विधिर्भवेत्
गोमयालेपिते रम्ये सविताने सदिग्ध्वजे १६
यज्ञवृक्षैश्चतुर्दिक्षु द्वारस्थापिततोरणे
मङ्गलाष्टकसंयुक्ते दर्भमालाभिवेष्टिते १७
मङ्गलाङ्कुरसंयुक्ते प्रोक्षयित्वा शिवाम्भसा
त्रिवृत्सूत्रेण तत्रैव पिष्टाक्तेन प्रमाणतः १८
पुण्याहं वाचयित्वादौ सूत्रपातं प्रकल्पयेत्
नवप्रकारं तत्प्रोक्तं कलशैः स्नपनं हरे १९
अष्टाधिकसहस्रैस्तु कलशैरुत्तमोत्तमम्
साष्टाधिकसहस्रार्धैरुत्तमे मध्यमं भवेत् २०
षोडशद्विशतैः प्रोक्तमुत्तमस्याधमं तु यत्

मध्यमोत्तममुद्दिष्टमष्टाधिकशतैरपि २१
अष्टोत्तरचत्वारिंशन्मध्यमध्यममुच्यते
चतुर्विंशतिभिश्चैव मध्यमस्याधमं भवेत् २२
षोडशैरधमे श्रेष्ठमष्टभिर्हीनमध्यमम्
चतुर्भिरधमं हीने कलशैः स्नपनं भवेत् २३
शिवयोः कलशावेतौ सर्वत्राप्यधिकौ मतौ
नवानामपि चैतेषां स्नपनानां जनार्दन २४
त्रैविध्यमिह निर्दिष्टं कलशस्थापनं क्रमात्
उत्तमानां त्रयाणां स्याद्व्यहेषु स्थापनं क्रमात् २५
पदेषु मध्यमानां च त्रयाणां परिकीर्तितम्
त्रयाणामपि चान्यानां भवेत्पद्मदलेषु च २६
सर्वेषां स्थापनं वक्ष्ये शृणु तत्त्वं जनार्दन
सौवर्णा राजता वाथ ताम्रजा मृण्मयास्तु वा २७
वेदाग्निनयनप्रस्थैः संपूर्णाः स्युर्यथाक्रमम्
श्रेष्ठमध्यकनिष्ठास्तु कलशाः स्नपनोचिताः २८
सर्वेषां कलशानां तु शिवकुम्भश्चतुर्गुणः
शक्तिकुम्भश्च कलशद्विगुणः स्यात्प्रमाणतः २९
शिवयोः कुम्भकौ यत्र सौवर्णौ राजताः स्मृताः
कलशा यदि तौ स्यातां राजतौ ताम्रजाः परे ३०
ताम्रजौ यदि तौ तत्र कलशा मृण्मयास्तदा
सर्वे वाथ शिवोमाभ्यां कुम्भाभ्यामेकवस्तुना ३१
मृण्मयास्तु विशेषेण कलङ्करहिताः शुभाः
पक्वबिम्बोपमाः सर्वे क्षालयेत्तान्विशेषतः ३२
अस्त्रजप्तेन तोयेन सूत्रेणाप्यथ वेष्टयेत्

निर्दोषेण सितेनैव समेन क्षालितेन च ३३
त्रिगुणद्विगुणैकेन शिवोमारुद्रकुम्भकान्
दर्भोपरि ततः सर्वान्विन्यस्याधोमुखान्सुधीः ३४
प्रोक्षयेद्धृदयेनाथ पूरयेद्गन्धवारिणा
नवमृद्भाण्डपूर्णेन शीतलेन सुगन्धिना ३५
नादेयेनाथ कौपेन शुचिना स्वच्छवारिणा
उशीरत्रुटिहीबेरचन्दनागरुकोष्ठजैः ३६
जाति तक्कोलजैश्चापि निर्दोषैर्जन्तुवर्जितैः
चूर्णैरालोलितं सर्वं गन्धोदमिति संज्ञितम् ३७
कलशस्थापनार्थं तु स्थण्डिलं शालिभिर्भवेत्
निर्दोषैः सुसितैश्चापि धान्यैः कृष्णविवर्जितैः ३८
प्रत्येकं कलशानां तु द्विप्रस्थेन कृतं परम्
स्थण्डिलं मध्यमुद्दिष्टं सार्धप्रस्थेन निर्मितम् ३९
प्रस्थेनैवाधमं प्रोक्तं शिवाख्यस्य जनार्दन
स्थण्डिलं द्विगुणं चापि त्रिगुणं च चतुर्गुणम् ४०
कन्यसं मध्यमं श्रेष्ठं तत्तदर्धमुमात्मके
तत्तत्तुर्यांशकैश्चापि तण्डुलैः षोदशांशकैः ४१
तिलैश्चापि समायुक्तं शुभ्रलाजसमन्वितम्
दर्भैर्विकीर्णं सर्वत्र तिथिसंख्यैः कुशैरथ ४२
कूर्चं स्याच्छिवकुम्भस्य पञ्चविंशाङ्गुलायतैः
दशभिर्मध्यमं तद्वत्सप्तभिश्चाधमं भवेत् ४३
नवभिः सप्तभिश्चैव पञ्चभिश्च यथाक्रमम्
गौरीकुम्भस्य कूर्चं स्याच्छ्रेष्ठमध्यकनीयसम् ४४
सप्तभिः पञ्चभिश्चैव त्रिभिश्चापि क्रमेण तु

पूर्ववत्कूर्चमुद्दिष्टं कलशानां जनार्दन ४५
विंशाङ्गुलं स्याच्छक्तेस्तु शेषं तिथ्यङ्गुलं भवेत्
चतुरङ्गुलप्रमाणेन पिधानं स्याच्छरावकम् ४६
सप्तषट्पञ्चहस्तं स्यात्कुम्भवेष्टनवस्त्रकम्
पञ्चभागैकविस्तीर्णं नीरोमं सुसितं भवेत् ४७
श्रेष्ठमध्यकनिष्ठं च क्रमेण परिकीर्तितम्
शिवकुम्भस्य रत्नाम्बुपञ्चकं श्रेष्ठमुच्यते ४८
चत्वारि त्रीणि रत्नानि मध्यमाधमयोरपि
माणिक्यं मुक्ता वैडूर्यमिन्द्रनीलं प्रवालकम् ४९
पञ्चरत्नमिति प्रोक्तं गौरीकुम्भे तु काञ्चनम्
अधमं माषमात्रं स्याद् द्विगुणं मध्यमं भवेत् ५०
त्रिगुणं श्रेष्ठमित्युक्तं शेषेषु द्रव्यमेव हि
सर्वसाधारणं चैव साधनं परिकीर्तितम् ५१
अथो नवप्रकाराणां वक्ष्यामि स्थापनं क्रमात्
पूर्वोक्तमण्टपे सम्यक् सूत्रपातं तु कारयेत् ५२
अष्टभिर्द्विगुणैः सूत्रैः प्राङ्मुखैर्व्यूहसप्तकम्
उदङ्मुखैस्तथा सूत्रैर्व्यूहसप्तकमेव हि ५३
व्यूहप्रमाणं प्रादेशैः पञ्चभिः सममुच्यते
सूत्रात्सूत्रान्तरं चापि द्विप्रादेशप्रमाणतः ५४
सूत्रद्वयान्तरं सर्वं लेपयेद्गोमयाम्बुना
सूत्राणि च सुलुप्तानि वीथयोऽत्र भवन्ति हि ५५
प्राङ्मुखा वीथयश्चापि चाष्ट चोदङ्मुखा अपि
वीथीनां संगमस्थाने मध्यस्तम्भस्थितिर्भवेत् ५६
व्यूहान्येकोनपञ्चाशद् वीथीमध्यगतानि वै

एवमास्फालिते सूत्रे ततो मन्त्री शिवाम्बुना ५७
प्रोक्षयित्वा पदव्यूहान् स्थण्डिलांस्तेषु कारयेत्
कलशं प्रति पूर्वोक्तैः शालिभिस्तण्डुलैस्तिलैः ५८
मध्यात्प्रतिपदव्यूहं स्थण्डिलं तु यथाक्रमम्
तेषु मध्ये ततः कुर्यात्पद्ममष्टदलान्वितम् ५९
तद्बाह्यावरणे दिक्षु चतसृष्वपि सैकतम्
होमार्थं स्थण्डिलं कुर्याद्विदिक्षु चतसृष्वपि ६०
कुर्यादध्ययनं विप्रैर्होमकाले विशेषतः
प्रोक्षयित्वा शिवास्त्रेण विलिखेदक्षराणि तु ६१
पद्ममध्ये लिखेत्कूटं मकाराक्षरसंयुतम्
प्रथमावरणे दिक्षु यकारादिचतुष्टयम् ६२
शकारादिहकारान्तान्विदिक्षु चतसृष्वपि
स्वरषोडशकं पश्चाद् द्वितीयावरणे न्यसेत् ६३
तृतीयावरणे चैव कवर्गं पूर्वपञ्चके
चवर्गं दक्षिणे चापि टवर्गं पश्चिमे भवेत् ६४
तवर्गमुत्तरे न्यस्य पकारं वह्निगोचरे
फकारं नैर्ऋते देशे बकारं मारुते तथा ६५
भकारं विन्यसेदैशे व्यूहे मन्त्री गतत्वरः
कलशस्थापनं कुर्यात्तेषु पश्चादतन्द्रितः ६६
वस्त्रेण शोधयेत्पूर्वं गन्धचूर्णयुतं जलम्
तेनैव पूरयित्वादौ शिवकुम्भं च वर्धनीम् ६७
सकूर्चौ रत्नहेमाढ्यौ गन्धचन्दनचर्चितौ
वस्त्रेणावेष्टितग्रीवौ सापिधानौ च साक्षतौ ६८
मालापल्लवसंयुक्तौ शिवयोः कुम्भकावुभौ

अस्त्रेण प्रोक्षयित्वाब्जं कर्णिकायां शिवेन तु ६९
गौरीमन्त्रेण जाप्यौ तु स्थापयेत्स्थापकोत्तमः
शिवकुम्भोत्तरे भागे वर्धन्याः स्थानमुच्यते ७०
उत्तराभिमुखां तस्या नासिकां परिकल्पयेत्
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् ७१
क्षीरं दधि घृतं चैव दलाग्रेषु च विन्यसेत्
चत्वारिंशत्सु चान्येषु व्यूहेषु पुरतः क्रमात् ७२
प्रतिव्यूहं शतार्धार्धान्कलशान्स्थापयेत्सुधीः
क्षौद्रमिक्षुरसं चैव यवं दर्भोदकं तथा ७३
तिलं कदलिकायास्तु फलं सर्षपमेव च
नालिकेरफलं रात्रिरजो वै मातुलुङ्गकम् ७४
लामज्जं दाडिमीं लाजचूर्णं पनसमेव च
भस्म चाम्रफलं चैव षोडशैतान्क्रमेण हि ७५
पूर्वादि विन्यसेद्विष्णो स्वरावरणमध्यमे
तेषामेतत्तथैवेह प्रथमावरणस्य च ७६
द्रव्याणि क्रमशो वक्ष्ये तानि संक्षेपतः शृणु
काश्मीरं रोचना कुष्ठं कर्पूरं च लवङ्गकम् ७७
एला जातीफलं चान्यत्पत्रमष्टममुच्यते
प्रथमावरणस्योक्तं द्वितीयस्याधुनोच्यते ७८
सहा दूर्वा तथा लक्ष्मीर्भद्रा विष्णुवधूयुता
इन्द्रवल्ली तथा काशं वाराही शृङ्गमेव च ७९
गोक्षुरं च शमीपत्रं तथैवाञ्जलिकारिका
अपामार्गद्वयं चैव गिरिकर्णीद्वयं तथा ८०
षोडशैतानि वस्तूनि द्वितीयेषूदके न्यसेत्

द्वितीयावरणेष्वेवं स्वराणां परिकीर्तितम्  ८१
बाह्यस्यापि तृतीयस्य मध्यस्थं वक्ष्यतेऽधुना
पद्मं नीलोत्पलं चैव रक्तमुत्पलमेव च  ८२
एतैस्त्रिभिः समायुक्तं ककारे पुष्पवारि तत्
तुलसीबिल्वधुत्तूरपत्रैः पत्रोदकं खके  ८३
पलाशाश्वत्थयोश्चापि कपित्थस्य च वल्कलैः
वल्कलोदकमुद्दिष्टं गकारपदमध्यमे  ८४
आम्राश्वत्थपलाशानां पल्लवैः पल्लवोदकम्
घकारे विन्यसेत्तद्वद्धीबेरोशीरमुस्तकैः  ८५
मूलोदकं ङकारस्थं तदुक्तं पूर्वपञ्चकम्
नारङ्गलिकुचाम्राणां फलैर्युक्तं फलोदकम्  ८६
चकारे विन्यसेच्छालिनीवाराभ्यां प्रियङ्गुना
बीजोदकं छकारस्थं विदार्युत्पलपद्मकैः  ८७
कन्दैः कन्दोदकं तच्च जकारे विन्यसेद्बुधः
चन्दनागरुकर्पूरैर्युक्तं गन्धोदकं तथा  ८८
झकारे विन्यसेद्धीमान्गन्धोदकमिति स्मृतम्
ञकारे तिलसिद्धार्थयवैः सिद्धोदकं तथा  ८९
एवं याम्यगतं प्रोक्तं व्यूहानां पञ्चकं पदम्
माणिक्यमुक्तावैडूर्यैष्टकारे रत्नवारि तत्  ९०
ताम्ररूप्यसुवर्णैस्तु युक्तं लोहोदकं भवेत्
ठकारे विन्यसेत्पश्चाड्डकारे कान्तवारि च  ९१
सूर्यकान्तमयस्कान्तं चन्द्रकान्तमिति त्रिभिः
माक्षिकत्रयसंयुक्तं माक्षिकाम्भो ढकारके  ९२
अभ्रकाम्भो णकारे तु युक्तं तत्त्रिभिरभ्रकैः

सौराष्ट्राञ्जनताद्यैस्तु तकारे ह्मारवारि तत् ९३
धातूदकं थकारे स्याद्धातुसिन्दूरगैरिकैः
रक्तचन्दनसंयुक्तं हरितालसमन्वितम् ९४
मनश्शिलायुतं चापि दकारे रक्तवारि तत्
सरित्पतिसरित्तीरक्षेत्रसंभवया मृदा ९५
युक्तं मृदम्भ इत्युक्तं धकारे तत्समादिशेत्
त्रिफलासंयुतं वारि कषायोदं नकारके ९६
पकारे विन्यसेत्क्षीरं फकारे दधि विन्यसेत्
बकारे विन्यसेत्सर्पिर्भकारे तैलमुच्यते ९७
बाह्यस्थेषु पदेष्वेवमुक्तद्रव्यं तु मध्यमे
तदनन्तरमष्टानां कथ्यतेऽत्र समासतः ९८
फेनं च देवदारुश्च मांसी तालीसपत्रकम्
कुष्ठं वक्त्रं तथा रास्ना नागकेसरमेव च ९९
प्रथमावरणस्यैतान्पूर्वादिक्रमशो न्यसेत्
चम्पकं जाति पुन्नागमल्लिकाकरवीरकम् १००
श्वेतार्कं वकुलं चैव चतुरङ्गुलसंयुतम्
माधवी कुरवं चैव केतकी पाटली तथा १०१
नन्द्यावर्तं च बन्धूकजपाहेमाख्यमेव च
प्रागादिक्रमशो द्रव्यं षोडशेष्वपि विन्यसेत् १०२
एवं द्रव्यं समाख्यातं शृणु देवानतः परम्
द्रव्यन्यासावसाने तु देवतान्यास उच्यते १०३
पुण्याहं वाचयित्वा तु प्रोक्षयेच्छिवमन्त्रतः
परितः शिवकुम्भस्य स्थण्डिले तु विधानतः १०४
समिदाज्यचरूँल्लाजांस्तिलांश्च ब्रह्मपञ्चकैः

प्रत्येकं शतमर्धं वा तदर्धं वाथ होमयेत् १०५
पूर्णाहुतिं तु मूलेन सर्वत्र जुहुयात्ततः
होतारश्चैव चत्वारः समकालं समुत्थिताः १०६
स्पृशेयुर्दक्षहस्तेन शिवकुम्भं मुखाणुभिः
ततः शैवपदाभ्याशे समासीनो गुरूत्तमः १०७
दक्षिणे मन्त्रविन्यासमुदग्वक्त्रः प्रयोजयेत्
श्वेतं त्रिलोचनं शम्भुं जटामकुटसंयुतम् १०८
चन्द्रावयवलक्ष्माणं सर्वाभरणभूषितम्
चतुर्भुजं प्रसन्नास्यं वरदाभयहस्तकम् १०९
कृष्णापरशुसंयुक्तं ध्यात्वा चावाहनादिभिः
पूजयेद्गन्धपुष्पाद्यैर्नैवेद्यान्तं स्वमन्त्रतः ११०
हेमवर्णां द्विनेत्रां च पूर्णचन्द्रनिभाननाम्
द्विभुजां सर्वहृद्याङ्गीं सर्वाभरणभूषिताम् १११
वर्धन्यां तु यजेद्गौरीं स्वनामपदमन्त्रतः
कलकर्णीं ततो मुद्रां शिवयोः कुम्भयोरपि ११२
लिङ्गमुद्रां शिवे चाथ वर्धन्यां च मनोरमाम्
उभयोः सुरभीमुद्रां दर्शयेद्देशिकोत्तमः ११३
पाद्यादिषु ततोऽष्टौ च विद्येशांश्च प्रपूजयेत्
स्वनामपदमन्त्रैस्तान् स्वरस्थांस्तु ततोऽर्चयेत् ११४
अकारव्यूहमध्ये तु शम्भुं गन्धादिभिर्यजेत्
देवदेवं महादीप्तं वरिष्ठं परमेष्ठिनम् ११५
सत्यरूपमनन्तं च परानन्दमनिन्दकम्
प्रथमावरणे तस्य कलशेष्वभितो यजेत् ११६
द्वितीये कामदं कालनाशनं कपिलाम्बरम्

कपर्दिनं पुरारातिं खगं खड्गधरं विभुम्  ११७
विबुधं विबुधाधीशं ज्ञानं विज्ञानलोचनम्
श्रीकराठमनघं वैद्यं वेदाद्यमिति षोडश  ११८
तद्बाह्ये षोडशस्वेतान्पूर्वादारभ्य पूजयेत्
रुद्रं चाथ महादेवं वामदेवं हरं शिवम्  ११९
ईशानं गिरिशं शर्वं सर्वज्ञममराधिपम्
कपर्दिनं करालाद्मं कालनाशनमव्ययम्  १२०
त्रिनेत्रं च यजेद्धीमानाकारादिषु मध्यमे
अकारावरणे प्रोक्ता ये रुद्रास्तांस्तथैव च  १२१
व्यूहेष्वेतेषु सर्वेषु त्वकारादिक्रमाद्यजेत्
तृतीयावरणे पश्चात्पूर्वादिक्रमतो यजेत्  १२२
मनोजवं यजेन्मध्ये ततोऽष्टसु यथाक्रमम्
अनन्तमतिरिक्तं च विरक्तं वेदलोचनम्  १२३
वेदान्तसारसन्दोहं विमलं विश्वभावनम्
विश्वेशं चैव पूर्वादिक्रमाद्रुद्रान्समर्चयेत्  १२४
द्वितीयावरणे पश्चात् षोडशस्वभितः क्रमात्
स्थाणुं सहस्रबाहुं च धूर्जटिं ज्वलनद्युतिम्  १२५
विद्युत्पिङ्गजटं भानुं परमेश्वरमुद्धतम्
गर्भं भीमं हिमाभं च सर्वगं च विभीषणम्  १२६
कृत्तिवासं समाराध्यं पूर्वगं च क्रमाद्यजेत्
ततः खकारव्यूहाच्च क्रमाद्रुद्रान्समर्चयेत्  १२७
तत्तन्मध्यगतानेतांस्तच्छृणु त्वं समाहितः
महाकायं गकारे तु शूलिनं तु घकारके  १२८
ङकारे पूजयेद्भीमं चकारेऽयुग्रमेव च

छकारे व्यग्रनामानं जकारे चेश्वरं तथा १२९
झकारे पुरनाशं च पुराणं तु ञकारके
लोकसाक्षी टकारे स्याट्ठकारे त्र्यम्बको भवेत् १३०
गङ्गाधरं डकारे तु ढकारे चेन्दुमर्दनम्
णकारे सर्वगः पूज्यः सर्वदस्तु तकारके १३१
थकारे सद्गमश्चैव दकारे शंकरो भवेत्
धकारे शान्त इत्युक्तः शर्मदस्तु नकारके १३२
शाश्वतः स्यात् पकारे तु फकारे शुचिरुच्यते
बकारे भसितप्रीतं भकारे वरदं तथा १३३
खकारे वृषवाहं च पूज्या रुद्राः प्रकीर्तिताः
तेषामनन्तराष्टासु षोडशस्वथ तद्बहिः १३४
पूर्वोक्तक्रमतो रुद्रान् पूर्वोक्तान्पूर्ववद्यजेत्
सर्वत्र व्यूहमध्यस्थकलशानपि देशिकः १३५
वस्त्रेण वेष्टयित्वा तु ततो यजनमारभेत्
एवं रुद्रान्समाराध्य कलशानां सहस्रके १३६
वेदघोषसमायुक्तं शङ्खदुन्दुभिनिस्वनैः
शिवकुम्भं समुद्धृत्य वर्धन्या सह देशिकः १३७
अभिषिच्य शिवं मन्त्री सर्वात्मानं समुच्चरन्
वर्धनीं पिण्डिकायां तु तद्गायत्र्याभिषेचयेत् १३८
शिवयोः कुम्भयोः पश्चाद्विद्येशाद्यान्यजेत्क्रमात्
ततः सहस्रमपि तत् क्रमादुद्धृत्य सेचयेत् १३९
न्यस्यैवं कलशे मन्त्रान् रुद्राणामपि केशव
अभिषेकं तैरेव कारयेत्क्रमशः पुरः १४०
संवत्सरात्मकं मन्त्रमुच्चरन्वाभिषेचयेत्

चत्वारिंशत्सु व्यूहेषु बाह्यस्थेषु यथाक्रमम्  १४१
स्थापिताः कलशा ये स्युः पञ्चविंशतिसंख्यया
तेषामुद्धरणं चैव पूर्वादिक्रमयोगतः  १४२
पञ्चविंशेषु मध्यस्थं कलशं पूर्वमुद्धरेत्
ततश्चाष्ट समुद्धृत्य ततः षोडश चोद्धरेत्  १४३
स्वरावरणमुद्धृत्य वर्गावरणमुद्धरेत्
उद्धारे कलशानां तु प्रमादात्पतनादिके  १४४
तत्रान्यं कलशं पूज्य समुद्धृत्याभिषेचयेत्
अभिषेकसमाप्तौ तु कृत्वा शुद्धोदसेचनम्  १४५
शालिपिष्टेन वा लिङ्गं माषचूर्णेन वा पुनः
आलिप्योद्वर्तनं कृत्वा बहुशश्च सपीठकम्  १४६
शुद्धिं प्रक्षालनात्कृत्वा गन्धोदैरभिषेचयेत्
अर्चनोक्तं समभ्यर्च्य यथाविभवविस्तरम्  १४७
प्रभूतं च हविर्दत्त्वा भारमानसमन्वितम्
मुखवाससमायुक्तं ताम्बूलमथ दापयेत्  १४८
ततः प्रदक्षिणं कृत्वा नमस्कृत्वा पुनः पुनः
क्षमस्वेति समुच्चार्य निर्गच्छेत्तदनन्तरम्  १४९
दापयेद्देशिकादीनां दक्षिणां श्रद्धया सह
इत्येवं स्नपनं प्रोक्तमष्टाधिकसहस्रकैः  १५०
अष्टाधिकसहस्रार्धस्नपनं प्रोच्यतेऽधुना
तदर्थं सूत्रपातं तु कुर्यान्मण्टपमध्यमे  १५१
षट्सूत्रैर्द्विगुणैश्चैव प्रागग्रैर्व्यूहपञ्चकम्
उदगग्रैस्तथा कुर्याद् व्यूहपञ्चकमेव च  १५२
वीथीव्यूहप्रमाणं तु पूर्ववत्परिकल्पयेत्

एवं कृते तु व्यूहानां भवेत्पञ्चकपञ्चकम्  १५३
तेषां मध्ये शिवव्यूहो विद्येशानां तथाष्टकम्
समन्तात्षोडश व्यूहाः स्वराणां परिकीर्तिताः  १५४
स्थण्डिलं तेषु कर्तव्यं पूर्ववच्च यथाक्रमम्
पञ्चविंशेषु व्यूहेषु बाह्ये दिक्षु व्यवस्थितम्  १५५
चतुष्टयं तु व्यूहानां होमार्थं परिकल्पयेत्
तेषु च स्थण्डिलं कुर्यात्सिकताभिर्विचक्षणः  १५६
शैवव्यूहे कृताब्जे तु प्रासादं मन्त्रमालिखेत्
बाह्येष्वष्टसु मन्त्रांस्तु विद्येशानां समालिखेत्  १५७
तद्बाह्ये षोडशव्यूहेष्वकारादीनि विन्यसेत्
बिन्दुनादयुतान्येव सर्वाण्यपि समालिखेत्  १५८
पूजयेच्च ततः सर्वं प्रणवादि नमोऽन्तकम्
ततः स्थापनमेतेषु व्यूहेषु क्रमशो भवेत्  १५९
शिवोमारुद्रकुम्भांस्तु सर्वानपि च केशव
पूर्ववत्संस्कृतान्सम्यग्गन्धतोयेन पूरयेत्  १६०
सर्वेषां मध्यमे कुम्भं शैवं तत्रैव विन्यसेत्
सकूर्चं सापिधानं च पञ्चरत्नसमायुतम्  १६१
वस्त्रयुग्मावृतं चैव तस्य कुम्भस्य चोत्तरे
गौरीबीजं तथाभूतं विन्यसेन्मन्त्रवित्तमः  १६२
परितश्च तयोः पश्चात्पूर्वादिक्रमयोगतः
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्  १६३
क्षीरं दधि घृतं चैव शिवव्यूहे तु विन्यसेत्
ततो विद्येश्वराणां तु व्यूहेष्वष्टस्वपि क्रमात्  १६४
मध्ये मधु पुनर्लाजं लाजचूर्णं ततः सुधीः

निशाचूर्णं तथा भस्म ततश्चेक्षुरसं भवेत् १६५
तिलं च सर्षपं चैव न्यस्य पश्चात्स्वरेष्वपि
आकारे चन्दनाम्भः स्यादिकारे लवजं तथा १६६
ईकारे कुष्ठतोयं स्वादूकारे रोचनोदकम्
ऋकारे नवनीताम्भ ॠकारे पत्रतोयकम् १६७
ॡकारे त्रिफलातोयमेकारे तु फलोदकम्
ऐकारे धातुतोयं स्यादौकारे चाभ्रतोयकम् १६८
अंकारे पुष्पतोयं स्याद् अःकारे कुशतोयकम्
एवं प्रधानकलशे सर्वत्रापि क्रमान्नयसेत् १६९
यवं सिद्धार्थकं चैव तिलं कृष्णं तथैव च
नीवारं बेणुबीजं च गोधूमं श्याममेव च १७०
प्रियङ्गुंक्रमेण पूर्वादि विद्येशावरणे न्यसेत्
षोडशेष्वथ तद्बाह्ये मल्लिकां चम्पकं तथा १७१
जातीवकुलपुन्नागमर्कं श्वेतं च धातकीम्
कुरवं कर्णिकारं च चतुरङ्गुलमेव च १७२
धुत्तूरं द्रोणपुष्पं च नन्द्यावर्तं च माधवीम्
मालतीं यूथिकां चापि सर्वत्र परितो न्यसेत् १७३
तद्बाह्ये च स्वराख्ये च रोचनं कुङ्कुमं तथा
द्राक्षां दार्वीं ततो दूर्वां ज्योतिष्मतीं च सल्लकीम् १७४
वक्त्रं चावरणेऽन्तस्थे कलशेष्वष्टसु न्यसेत्
षोडशेष्वपि तद्बाह्ये बिल्वमारीचमाचिकाः १७५
दूर्वां चलं च गोकर्णमिन्द्रवल्लीं च वैष्णवीम्
तुलसीं वटशुङ्गं च जम्ब्वपामार्गकौ तथा १७६
गिरिकर्णीद्वयं चाथ कपित्थोदुम्बरावपि

एवं द्रव्यं समाख्यातं व्यूहानां कलशेष्वपि १७७
शिवव्यूहेऽष्टकं प्रोक्तं कलशानां तु तद्बहिः
विद्येशावरणे व्यूहेष्वष्टास्वपि ततो बहिः १७८
स्वरावरणव्यूहे च द्वादशस्वभितो भवेत्
प्रतिव्यूहं तु सर्वत्र पञ्चविंशकमुच्यते १७९
तेषु मध्ये स्थितं चैकं वस्त्रेणोपरि वेष्टयेत्
एवं संस्थाप्य कलशान्सहस्राधांस्तथाष्टकान् १८०
ततो देवं च देवीं च शिवयोः कुम्भयोर्यजेत्
परितो भवादिकानष्टौ शिवव्यूहे तु देशिकः १८१
परितो मध्यमे पश्चाद् विद्येशानपि पूजयेत्
विद्येशावरणान्तस्थ कलशेष्वष्टसु क्रमात् १८२
सर्वत्र पूजयेन्मन्त्री लोकपालान्यथाक्रमम्
बाह्येषु कलशेष्वेतानर्चयेत्षोडशानपि १८३
प्रमथेशं महेशं च कपिलं कपिलाम्बकम्
कालमूर्तिं कलामूर्तिं खट्वाङ्गधरमुद्धतम् १८४
भृकुटीभीषणं भीमं महाभैरवरूपिणम्
महाभुजं महादंष्ट्रमनवद्यमनिन्दितम् १८५
असह्यं चेति रुद्रांश्च षोडशान्क्रमशो यजेत्
स्वरावरणमध्ये तु कलशेषु यथाक्रमम् १८६
आदित्यान्द्वादशाभ्यर्च्य तदनन्तरमष्टके
वसूनष्ट समभ्यर्च्य तद्बाह्ये षोडशेष्वपि १८७
विद्युज्जिह्वं विशालाक्षं विद्रुमप्रभमुन्मुखम्
वेत्तारं विबुधाध्यक्षं वीरं वीरेश्वरं परम् १८८
कुम्भोदरं निकुम्भं च भूतलं भूतिभूषणम्

व्यालयज्ञोपवीतं च टङ्कहस्तं जटाधरम् १८९
एवं देवान्समभ्यर्च्य ततः स्नपनमारभेत्
अष्टाधिकसहस्राद्यैरुक्तं स्नपनमुत्तमम् १९०
षोडशद्विशतैर्वक्ष्ये कलशैः स्नपनं परम्
प्रागग्रैर्द्विगुणैः सूत्रैश्चतुर्भिश्च तथापरैः १९१
उदङ्मुखैस्तथाभूतैर्व्यूहानां नवकं भवेत्
सूत्रद्वयान्तरालं तु व्यूहमानं च पूर्ववत् १९२
व्यूहेष्वेतेषु नवसु शैवं मध्यममुच्यते
प्रागाद्यास्त्वपरव्यूहा दिक्पालानां भवन्ति हि १९३
स्थण्डिलं तेषु कर्तव्यं पूर्ववल्लक्षणान्वितम्
मध्ये पद्मं समालिख्य विकारदलसंयुतम् १९४
अथ तत्कर्णिकामध्ये प्रणवं विन्यसेद्बुधः
इन्द्रादीशानपर्यन्तं तत्तद्बीजं समालिखेत् १९५
गन्धपुष्पादिभिस्तत्र पूजयेदक्षराणि च
शिवोमारुद्रकुम्भांस्तु पूर्ववत्संस्कृताञ्शुभान् १९६
स्थापयेत्क्रमशो विद्वान्सर्वलक्षणसंयुतान्
शिवयोः कुम्भकौ स्थाप्य दलाग्रेष्वभितः क्रमात् १९७
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरं दधि घृतं चैव दिग्दलाष्टसु विन्यसेत् १९८
मधुतैलेक्षुसाराणि खण्डं पनसमेव च
कदलीफलमाम्रं च मातुलुङ्गं यथाक्रमम् १९९
दलेष्वन्येषु विन्यस्य ततश्चेन्द्रादिषु क्रमात्
यवसर्षपलाजांश्च लाजचूर्णं ततस्तिलम् २००
निशागोधूमचूर्णौ च भस्म चैव क्रमान्न्यसेत्

अन्यान् गन्धोदकैः पूर्णान्कलशान्स्थापयेत्ततः  २०१
तेषु शातक्रतव्यादिमहादिक्षु यथाक्रमम्
प्रथमावरणस्थेषु कलशेष्वष्टसु क्रमात्  २०२
चन्दनं लघु कुष्ठं च त्रुटिकर्पूरमेव च
फलत्रयं च विन्यस्य तद्बाह्ये षोडशस्वथ  २०३
दार्वीं दूर्वां तथा द्राक्षां नागकेसरमेव च
ह्रीबेरं गुग्गुलं चैव मञ्जिष्ठां लोध्रमेव च  २०४
अञ्जनं रोचनां चैव तुरुष्कं कुङ्कुमं तथा
विडङ्गं गैरिकं चैव रास्नां चैव मनश्शिलाम्  २०५
विन्यस्य च विदिक्ष्वेषु चान्येषु च पदेषु च
प्रथमावरणे लक्ष्मीं विष्णुक्रान्तिं सहां तथा  २०६
बिल्वदूर्वाशमीपत्राण्यपामार्गद्वयं तथा
विन्यस्य परितः पश्चात्षोडशेष्वपि विन्यसेत्  २०७
श्वेतपद्मं च कुमुदं धुत्तूरं चैव मल्लिकाम्
करवीरं पाटलीपुष्पं पुन्नागं रक्तपङ्कजम्  २०८
आरग्वधं च श्वेतार्कं रक्तार्कं बृहतीं तथा
चम्पकं कुरवं चैव द्रोणपुष्पं च यूथिकाम्  २०९
एवमेतेषु सर्वेषु न्यस्य द्रव्याणि मन्त्रवित्
व्यूहानां परितो होमं चतुर्दिक्षु प्रकल्पयेत्  २१०
शिवकुम्भे शिवं पूज्य वर्धन्यां शक्तिमेव च
परितो दिक्षु विद्येशान्विदिक्षु च भवादिकान्  २११
बाह्यस्थेषु च दिक्पलान्मध्यस्थकलशेषु च
संपूज्य दिक्षु पूर्वादिचतसृष्वपि केशव  २१२
मातृवृतं च पिङ्गाक्षं भूतपालं बलिप्रियम्

सर्वविद्येश्वरं चैव धातारं दुःखनाशनम्  २१३
सुखदं चैव विन्यस्य रुद्रानष्टसु पूजयेत्
तद्बाह्ये षोडशस्वेतान् रुद्रांश्चैव क्रमान्नयसेत्  २१४
जटाधरं रत्नधरं निधीशं रूपिणं तथा
धन्यं सौम्यं प्रकाशं च प्रमर्दनमतः परम्  २१५
सुप्रसादं सुलक्ष्माणं कामरूपं तथा परम्
श्वेतं च जयभद्रं च दीर्घबाहुं बलान्तकम्  २१६
आग्नेयादिषु कोणेषु रुद्रानेतान्समर्चयेत्
वडवामुखं सुभीमं च नैर्ऋतं मारणं तथा  २१७
हन्तारं क्रूरदृष्टिं च भयानकमतः परम्
ऊर्ध्वकेशं च सर्वेषु प्रथमावरणे क्रमात्  २१८
द्वितीयावरणे पश्चाद्धूम्रं लोहितदंष्ट्रकम्
याम्यं मृत्युहरं चैव कर्तारं धर्मनायकम्  २१९
योक्तारं ज्वलनं भानुं बभ्रुं भस्मविभूषितम्
क्षयान्तकं कपालीशमजं बुद्धं च वज्रिणम्  २२०
क्रमाद्विन्यस्य संपूज्य ततः स्नपनमारभेत्
षोडशद्विशतैरेवं स्नपनं परिकीर्तितम्  २२१
एवं व्यूहक्रमात्प्रोक्तमुत्तमस्नपनत्रयम्
पदक्रमेण वक्ष्यामि स्नपनं मध्यमत्रयम्  २२२
अष्टोत्तरशतैर्वक्ष्ये कलशैः स्नपनं परम्
प्रागग्रं मनुसूत्रं स्यादुदगग्रं तथैव च  २२३
नवषष्टिशतं सम्यक् पदमेकत्र सुस्थितम्
पदप्रमाणं सर्वत्र तालमात्रमिति स्मृतम्  २२४
तत्र मध्ये नवपदं पद्मार्थं परिलोपयेत्

बाह्ये तु षोडशपदैः प्रथमावरणं भवेत् २२५
परितश्च ततो वीथी पदपङ्क्त्यैकया भवेत्
अष्ट द्वाराणि वीथ्यग्रे कोणपार्श्वेषु कल्पयेत् २२६
त्रिभिस्त्रिभिः पदैरेवं कृते तत्र भवन्ति हि
पदप्रान्तास्तु मध्यादि नवसख्या जनार्दन २२७
तेषु पूर्वादिसंस्थेषु प्रान्तेष्वथ चतुर्ष्वपि
तिथिसंख्यापदेष्वन्तर्वीथीपार्श्वेषु मध्यमम् २२८
पदमेकं परित्यज्य स्थण्डिलं तेषु कल्पयेत्
एवं कृते महादिक्षु चतुर्दशपदं भवेत् २२९
कोणेष्वपि नव प्रोक्तास्ततः स्थापनमारभेत्
प्रोक्षयित्वास्त्रजप्तेन वारिणा देशिकस्ततः २३०
तेषु सर्वेषु मध्येषु स्थण्डिलं पूर्ववद्भवेत्
ततः शिवाख्यकलशं पूर्ववत्कल्पितं सुधीः २३१
कर्णिकायां तु विन्यस्य वर्धनीं तस्य चोत्तरे
ततश्चावरणे त्वाद्ये पूर्वादिक्रमयोगतः २३२
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरं दधि घृतं चैव दिक्षु चान्येषु विन्यसेत् २३३
मधु भस्मेक्षुसारं च लाजचूर्णमतः परम्
लाजं च रजनीचूर्णं तिलं सर्षपमेव च २३४
विन्यस्याथ च सर्वेषु शेषेष्वावरणक्रमात्
गन्धोदपूरितान् पश्चात्कलशांस्तेषु विन्यसेत् २३५
द्वितीयावरणे त्वेतान्वक्ष्यमाणान्यथाक्रमम्
पनसं मातुलुङ्गं च दाडिमं चाम्रमेव च २३६
नालिकेरमतश्चापि नारङ्गद्वयमेव च

कदलीं चासितां चैव जम्बूफलमतः परम् २३७
द्राक्षां च नवनीतं च ह्रीबेरं मुस्तकं ततः
वक्रं रास्नां नतं चापि दान्तकं च मुरां तृणम् २३८
ज्योतिष्मतीं द्वितीयेषु विंशेषु कलशेषु च
शालिनीवारकौ चैव प्रियङ्गुयववेणुजम् २३९
रोचनां कुङ्कमं चैव गैरिकं च मनःशिलाम्
तालमञ्जनकं श्यामं रक्तचन्दनमेव च २४०
श्रीवेष्टकं गन्धरसं सल्लकीं च ततः क्रमात्
तुरुष्कं च विडङ्गं च ततश्चेन्द्रयवाह्वयम् २४१
चव्यं सिद्धार्थकं चैव जीरकद्वयमेव च
मञ्जिष्ठां च तथा मांसीं तालीसं चाप्यवेणुजे २४२
कर्पूरं फलिनीं लोघ्रां माक्षिकं च ततः परम्
तृतीयावरणे न्यस्य तद्बाह्ये तु जनार्दन २४३
पद्मं नीलोत्पलं चैव रक्तमुत्पलमेव च
चम्पकं जातिपुन्नागवकुलं चतुरङ्गुलम् २४४
करवीरं तथा द्रोणं नन्द्यावर्तं च मल्लिकाम्
धुत्तूरं चैव बन्धूकं जपाकुसुममेव च २४५
कर्णिकारं शमीं चैव सहां विष्णुवधूं तथा
दूर्वां च भृङ्गराजं च चक्रवल्लीं वराहिकाम् २४६
भद्रां लक्ष्मीं च पाषाणं गिरिकर्णीद्वयं तथा
अपामार्गद्वयं चैव गोक्षुरं तुलसीं तथा २४७
नागपुष्पं च तक्कोलमुशीरं पत्रमेव च
त्रुटिं चैलाफलं चैव त्वगरुं चन्दनं तथा २४८
एवं द्रव्याणि विन्यस्य चतुर्थावरणे क्रमात्

शिवं गौरीं तयोर्यष्ट्वा कुम्भयोस्तदनुक्रमात्  २४९
प्रथमावरणे दिक्षु लोकपालान्समर्चयेत्
अन्येष्वष्टसु विद्येशान्पदेषु क्रमशो यजेत्  २५०
वैकर्तनं विवस्वन्तं भवं शर्वमतः परम्
मार्ताण्डं भास्करं चैव रविं रुद्रं तथैव च  २५१
उद्बीजमुग्रनामानं लोकभासकमेव च
लोकसाक्षिणमप्यन्यं महान्तं भीममेव च  २५२
त्रिविक्रमं तथादित्यं सूर्यमंशुमता सह
दिवाकरं तथैशानं द्वितीयावरणे क्रमात्  २५३
तृतीयावरणे बाह्ये पूजयेदीशगोचरे
वरदं वीरभद्रं च विमलं विश्वगोचरम्  २५४
वेदनिष्ठं परानन्दं परमेशं महाद्युतिम्
महोरस्कं गुरुं रम्यमभेयमनघं शुचिम्  २५५
त्रिलोचनमनौपम्यं टङ्कपाणिं महागतिम्
शूलपाणिं महोत्साहं महाभैरवरूपिणम्  २५६
दंष्ट्रालं च दुराधर्षं हारभूतिं च वज्रिणम्
दण्डिनं शिपिविष्टं च व्याघ्रचर्मधरं हरम्  २५७
अनलास्यमलक्ष्यं च सर्वलक्षणलक्षितम्
दुःसहं च त्रयीरूपं देवारिमथनं तथा  २५८
गणेशं च सुरेशं च व्यालयज्ञोपवीतिनम्
दुर्गं च सुरसेनाद्यं पूजयेत्क्रमशः सुरान्  २५९
इत्यभ्यर्च्य ततो देवान्क्रमाँल्लिङ्गेऽभिषेचयेत्
एवमष्टशतैः प्रोक्तं कलशैः स्नपनं हरे  २६०
अथाष्टचत्वारिंशद्भिः कलशैर्वक्ष्यतेऽधुना

प्रागग्रैर्दशभिः सूत्रैरुदगग्रैस्तथैव च २६१
एकाशीतिपदं कृत्वा मध्ये नवपदं पुनः
एकीकृत्य तु पद्मार्थं तद्बाह्ये षोडशैः पदैः २६२
वीथीं कृत्वा तु वीथ्यग्रे द्वाराण्यष्टौ प्रकल्पयेत्
एवं कृते पदान्यत्र षट् षट् दिक्षु भवन्ति हि २६३
कोणेष्वपि च चत्वारि स्थण्डिलं पूर्ववद्भवेत्
मध्ये पद्मं समालिख्य साष्टपत्रं सकर्णिकम् २६४
शिवकुम्भं वर्धनीं च पूर्ववद्विन्यसेत्सुधीः
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् २६५
क्षीरं दधि घृतं चैव दलेष्वष्टसु विन्यसेत्
मधुलाजशकृच्चूर्णं लाजचूर्णं हरिद्रकम् २६६
भस्म चेक्षुरसं चैव कदलीफलमेव च
तिलं वै सर्षपं चैव पनसं नालिकेरकम् २६७
नारङ्गस्य द्वयं चैव मातुलुङ्गं च दाडिमम्
षोडशैतानि विन्यस्य द्वितीयावरणे तथा २६८
तृतीयावरणे पश्चाद्गन्धोदपरिपूरितान्
कलशानभितो न्यस्य तेषु द्रव्याणि निक्षिपेत् २६९
चन्दनं लघु कुष्ठं च कञ्चोलपुष्पपत्रकम्
कर्पूरं कुङ्कुमं चैव दिक्षु चान्येष्वपि क्रमात् २७०
चम्पकं तुलसीं चैव पुन्नागं बिल्वमेव च
मल्लिकामप्यपामार्गं जातिं चैव शमीं तथा २७१
वकुलं विष्णुक्रान्तिं च माधवीं च तपस्विनीम्
धुत्तूरं गिरिकर्णीं च शङ्खिनीं पद्ममेव च २७२
एवं द्रव्याणि विन्यस्य देवानभ्यर्चयेत्ततः

शिवयोः कुम्भयोश्चैव पूजयेत्तावुभावपि २७३
विद्येशान्प्रथमे यष्ट्वा द्वितीयावरणे ततः
लोकपालान्स्वदिक्संस्थांस्तत्पार्श्वस्थान्भवादिकान् २७४
तृतीयावरणे चापि वज्रादीन् दिक्पदाश्रितान्
वसूंश्च मरुतश्चाष्ट कलशेष्वपि पूजयेत् २७५
एवं संपूज्य विधिवत्पश्चात्स्नपनमाचरेत्
अष्टाधिकैश्चत्वारिंशैः स्नपनं कलशैर्युतम् २७६
चतुर्विंशैश्च कलशैः प्रवक्ष्याम्यधुना परम्
प्रागग्रैर्वसुभिः सूत्रैरुदगग्रैस्तथैव च २७७
पदान्येकोनपञ्चाशत्पिण्डितानि भवन्ति हि
तेषां मध्ये नवपदं पद्मार्थं परिलोपयेत् २७८
पदस्य द्वितयं तस्य दिक्षु स्थाप्य विदिक्षु च
स्थाप्य चत्वारि चत्वारि शेषान्षोडश लोपयेत् २७९
पूर्ववत्स्थण्डिलं कृत्वा मध्येऽष्टदलमालिखेत्
अम्बुजं कर्णिकायुक्तं तत्र शैवं तु विन्यसेत् २८०
पूर्वोक्तलक्षणोपेतं कुम्भं तस्याथ चोत्तरे
गौरीकुम्भं तु विन्यस्य परितश्च क्रमान्न्यसेत् २८१
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरं दधि घृतं चैव प्रथमावरणे न्यसेत् २८२
मधु चेक्षुरसं चैव गोशकृच्चूर्णमेव च
हरिद्राचूर्णं लाजं च तिलं सर्षपमेव च २८३
लाजचूर्णं ततश्चाथ दिक्ष्वष्टस्वपि विन्यसेत्
कदलीं मातुलुङ्गं च दाडिमीं पनसं तथा २८४
पद्मं नीलोत्पलं चैव तुलसीं बिल्वपत्रकम्

कोणपार्श्वेषु सर्वेषु वह्न्यादिषु च विन्यसेत् २८५
एवं द्रव्याणि विन्यस्य देवानभ्यर्चयेत्ततः
महेश्वरं महादेवीं कुम्भयोस्तु तयोर्यजेत् २८६
प्रथमावरणे चैव विद्येशान्परितो यजेत्
लोकपालान्द्वितीये तु यथास्थानं समर्चयेत् २८७
भवादिकांस्तु परितः कोणपार्श्वे तु पूजयेत्
एवं पदक्रमात्प्रोक्तं स्नपनं मध्यमत्रयम् २८८
दलक्रमेण वक्ष्यामि स्नपनं कन्यसत्रयम्
तत्र षोडशभिः श्रेष्ठं कलशैः स्नपनं भवेत् २८९
पूर्वोक्तमण्टपे कुर्यात्स्थण्डिलं परिमण्डलम्
मध्ये पद्मं समालिख्य विकारदलसंयुतम् २९०
कर्णिकाकेसरैर्युक्तं तिलतण्डुलसंयुतम्
कर्णिकायां ततो मध्ये लिखेत्कूटाक्षरं बुधः २९१
स्वराणि च दलाग्रेषु पूर्वादि पतो न्यसेत्
शिवयोः कलशौ तत्र कर्णिकायां तु पूर्ववत् २९२
संस्थाप्याथ दलाग्रेषु पूर्वादि परितः क्रमात्
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् २९३
क्षीरं दधि घृतं चैव विन्यसेत्तदनुक्रमात्
गन्धोदपूरितानष्ट शेषेषु कलशान्न्यसेत् २९४
एवं संस्थाप्य देवांश्च यजेत्पश्चात्क्रमेण तु
देवं देवीं समारभ्य तत्तत्कुम्भे च पूजयेत् २९५
लोकपालान्भवादींश्च यजेत्पूर्वादितः क्रमात्
लोकपालान्स्वदिक्स्थांश्च भवादीनितरस्थितान् २९६
एवं संपूज्य विधिवत्ततः स्नपनमाचरेत्

अष्टाभिः कलशैर्वद्ये स्नपनं तत्र मण्टपे २९७
चतुस्तालमितं कृत्वा स्थण्डिलं तु सुवृत्तकम्
कर्णिकाष्टदलोपेतं तत्र पद्मं समालिखेत् २९८
कूटाक्षरं लिखेन्मध्ये दलेष्वष्टसु च क्रमात्
यकारादि वकारान्तं शकाराद्धान्तमेव च २९९
दिग्विदिक्ष्वक्षराण्यष्ट लिखेत्पूर्वादितः सुधीः
शिवयोः कलशौ मध्ये पूर्ववत्स्थाप्य तद्बहिः ३००
दलाग्रेषु क्रमात्स्थाप्य पाद्यादीनां तदष्टकम्
अथवा गन्धतोयेन पूर्णांश्च कलशान्न्यसेत् ३०१
एवं विन्यस्य कलशान्देवं च पूर्ववत्
संपूज्य परितः पश्चादष्ट विद्येश्वरान्न्यसेत् ३०२
ततः क्रमेण कुर्वीत स्नपनं देशिकोत्तमः
एवमष्टभिरुद्दिष्टं चतुर्भिरथ कथ्यते ३०३
पूर्ववत्स्थण्डिलं कृत्वा तत्र पद्मं चतुर्दलम्
आलिख्य कर्णिकामध्ये व्योमाक्षरमथालिखेत् ३०४
पृथिव्यादीनि वर्णानि पूर्वादिक्रमशो भवेत्
पूर्ववच्छिवकुम्भं तु वर्धन्या सह देशिकः ३०५
विन्यस्याथ घृतक्षीरदधिक्षौद्राणि च क्रमात्
पूर्वादिषु दलेष्वेतान्विन्यसेदथवाम्बुना ३०६
पूरितान्वा न्यसेन्मन्त्री ततो यजनमारभेत्
शिवयोः कुम्भयोस्तौ च पूर्ववत्सम्यगर्चयेत् ३०७
धर्मादींश्च चतुर्ष्वन्येष्वर्चयेच्च विधानतः
एवमभ्यर्च्य तान्पश्चात्तैः कुर्यात्स्नपनं परम् ३०८
एवं नवविधं प्रोक्तं स्नपनं भोगमोक्षदम्

एषामेकतमं कुर्याद्विभवस्यानुरूपतः ३०९
सकलेष्वपि सर्वेषु स्नपनं कारयेद्बुधः
उत्तमत्रयवर्ज्यं तु यस्य स्यात्स्नपनं हरे ३१०
क्रियते तत्र तद्देवं मध्यकुम्भे समर्चयेत्
सकलं शक्तियुक्तं चेद्वर्धन्या सह विन्यसेत् ३११
अन्यत्सर्वं यथापूर्वं विधिना कारयेत्सुधीः
नित्ये प्रवर्तमाने तु काले प्राप्तं यदा भवेत् ३१२
स्नपनं चैव तत्काले तस्मिन्नारभ्य तत्सुधीः
नित्यातिक्रमणं तत्र यथा न भवति ध्रुवम् ३१३
तथा तत्स्नपनं कार्यमन्यथा नैव कारयेत्
नित्यावसाने प्राप्तं चेद्द्वारपूजादि पूर्ववत् ३१४
स्नपनं कारयेद्विद्वान् यथाशास्त्रविनिश्चितम्
इति यः कारयेन्मर्त्यः स्नपनं विधिपूर्वकम् ३१५
सर्वयज्ञफलं प्राप्य शिवेन सह मोदते ३१६

इत्यजिताख्ये महातन्त्रे क्रियापादे स्नपनविधिर्नाम एकोनत्रिंशः पटलः

## त्रिंशः पटलः

## विशेषार्चनविधिः

विशेषादर्चनं वक्ष्ये तच्छृणु त्वं जनार्दन
अकालमृत्युशमनं सर्वव्याधिविनाशनम् १
शोकमोहहरं पुंसामशेषाधिविनाशनम्
अपस्मारग्रहादीनां शमनं सर्वशान्तिदम् २
विषशत्रुप्रशमनं सर्वविघ्ननिवारणम्

परसेनास्तम्भनं च स्वसेनारक्षणं तथा ३
जयदं पुष्टिदं लोके दुर्भिक्षभयनाशनम्
अवग्रहहरं चैव सर्वसस्यविवर्धनम् ४
सूर्यादिग्रहदोषाणां शमनं कालवञ्चनम्
सर्वपापहरं पुंसां धनधान्यविवर्धनम् ५
अष्टम्यां च चतुर्दश्यां पक्षयोः पर्वणोरपि
संक्रान्तौ ग्रहणे चापि राज्ञां जन्मदिनेऽपि च ६
राजजन्मदिने वापि विपदि प्रत्यरे तथा
कर्मान्ते च तथार्द्रायामर्कवारे च कारयेत् ७
शिवलिङ्गेऽथवार्चायां कर्तव्यं तद्विधानतः
अर्चायां यजने तस्माल्लिङ्गार्चायां फलं तु यत् ८
भवेच्छतगुणं तत्तु लिङ्गेष्वपि यथाक्रमम्
मानुषं चार्षकं दिव्यं गाणपं च चतुर्विधम् ९
स्वयंभूतं तथान्यच्च लिङ्गं पञ्चममुच्यते
तेषु चाद्यात्फलं चापि भवेद्दशगुणोत्तरम् १०
सर्वयज्ञतपोदानतीर्थादिषु च यत्फलम्
तत्फलं लभते मर्त्यः सकृल्लिङ्गार्चनेन तु ११
मानुषस्य तु लिङ्गस्य फलमेतदुदाहृतम्
तस्मात्सर्वप्रयत्नेन शिवलिङ्गं समर्चयेत् १२
लिङ्गार्चनसमं नास्ति पुण्यं लोकत्रये हरे
यथा व्योम्नः परस्यास्य क्वचिदन्तं न दृश्यते १३
तथा लिङ्गार्चनोद्भूतपुण्यस्यान्तं न विद्यते
भोगमोक्षप्रदं पुंसामिदमेव हि कथ्यते १४
शिवस्य परिपूर्णस्य लिङ्गार्चनविधेर्बलात्

देवदेवत्वमापन्ना ब्रह्मविष्णुपुरोगमाः १५
मुक्तानां पुरुषाणां तु न हि संख्या प्रदृश्यते
स श्लाघ्यस्तु भवेन्मर्त्यः स कुलीनः स बुद्धिमान् १६
स शूरः स च विक्रान्तो यो लिङ्गं सकृदर्चयेत्
लिङ्गे देवो महादेवः साक्षादेव प्रतिष्ठितः १७
अनुग्रहाय लोकानां तस्माल्लिङ्गं समर्चयेत्
लिङ्गं यत्र भवेद्राष्ट्रे पूजाहीनं चिराय वै १८
तत्र व्याधिश्च दुर्भिक्षमनावृष्टिश्च जायते
प्रवासी पथि दृष्ट्वा तु पुष्पहीनं तु मस्तकम् १९
शिवलिङ्गस्य गच्छेच्चेत्सर्वपापनिधिर्भवेत्
तस्मात्पूजाविहीनं तु लिङ्गं दृष्ट्वा पथि स्थितम् २०
स्नाप्य पुष्पं च पत्रं वा शिवस्याधार्य यो व्रजेत्
अश्वमेधसहस्रस्य वाजपेयशतस्य च २१
स पुण्यं लभते मर्त्यो नात्र कार्या विचारणा
दूरं गत्वा तु यो लिङ्गमनाथं पूजयेत्सकृत् २२
सर्वयज्ञफलं तस्य दद्याल्लिङ्गेऽर्चिते शिवः
अभिप्रेतार्थसिद्ध्यर्थं विशेषादर्चनं भवेत् २३
पूर्वाह्ने शान्तिकं तत्स्यान्मध्याह्ने पुष्टिदं भवेत्
सयाह्ने तु जयार्थं स्यादर्धयामे तु सर्वदम् २४
साधकः शान्तचित्तस्तु कृतनित्यः शुचिस्तदा
सोष्णीषः सोत्तरीयश्च नववस्त्रेण वेष्टितः २५
पञ्चशुद्धिं पुरा कृत्वा पूर्ववत्पूजयेच्छिवम्
स्नानोदकं तु नादेयं नवकुम्भेषु पूरितम् २६
एकरात्रोषितं शुद्धं वस्त्रपूतं सुशीतलम्

उशीरेण समायुक्तं त्रुटिचन्दनकोष्ठजैः २७
चूर्णैः कर्पूरसंयुक्तैर्लोलितं पुष्पगन्धितम्
स्नानार्थमाहरेत्तत्र पञ्चगव्यकमेव च २८
संवत्सरात्मना पूर्वमुदकेनाभिषेचयेत्
पञ्चगव्याभिषेकं तु पञ्चब्रह्म समुच्चरन् २९
पञ्चामृतं सगन्धोदं षडङ्गैरभिषेचयेत्
कदलीपनसाम्राणां फलसारसमन्वितम् ३०
नालिकेरफलोदेनाप्यभिषेकं हृदा भवेत्
ततस्तैलेन शुद्धेन कर्पूरागरुगन्धिना ३१
लिङ्गमालिप्य सर्वत्र सपीठं तु शिवास्त्रतः
माषेण यवचूर्णेन समुद्वर्तनमेव च ३२
शालिपिष्टेन वा कुर्यादस्त्रमन्त्रं समुच्चरन्
पञ्चब्रह्मोच्चरन्पश्चात्क्षालयेच्छुद्धवारिणा ३३
ततो गन्धोदकेनापि वत्सरेणाभिषेचयेत्
स्नपनं चात्र कुर्वीत सहस्रादिषु संभवैः ३४
नित्योक्तमर्चनं कुर्यात्पाद्यमाचमनार्घ्यकम्
चन्दनागरुकाश्मीरैः श्लक्ष्णपिष्टैः परार्घकैः ३५
कर्पूरक्षोदमिश्रैस्तु शिवलिङ्गं सपीठकम्
क्रमात्पर्याप्तमालिप्य सर्वात्मानं समुच्चरन् ३६
सिद्धार्थकांस्तिलान्कृष्णान्बिल्वपत्रसमायुतान्
प्रासादेन तु मन्त्रेण निक्षिपेल्लिङ्गमूर्धनि ३७
चम्पकोत्पलजात्यादिसत्पुष्पैश्च समर्चयेत्
तैरेव माल्यैराच्छाद्य लिङ्गं मूलात्ततः शनैः ३८
मस्तकान्तं पवित्रैस्तु प्रादक्षिण्यक्रमेण तु

वेष्टयित्वा तु तन्मूर्ध्नि स्वर्णपुष्पं तु विन्यसेत्   ३९
धूपं कृष्णागरुभवं कर्पूरेण च दापयेत्
दीपमालां ततः पूर्णां कर्पूरागरुवर्तिना  ४०
गोघृतेन शिवाभ्याशे दापयेत्तौ हृदार्पयेत्
शुद्धान्नं पायसं गौलं मुद्गान्नं कृसरं तथा  ४१
सर्वोपदंशसंयुक्तं गुलखण्डाज्यसंयुतम्
निवेदयेत्तु देवाय फलैः स्वादुभिरन्वितम्  ४२
ईशानादिषु वक्त्रेषु पञ्चस्वपि यथा पुरा
गुलखण्डयुतापूपं दापयेत्तु तथा पुनः  ४३
ताम्बूलं दापयेत्पश्चात्पञ्चसौगन्धिकान्वितम्
मातुलुङ्गफलैश्चापि नालिकेरफलैरपि  ४४
दापयेत्पञ्चवक्त्रेषु तत्तन्मन्त्रेण मन्त्रवित्
नीराजनं ततः कुर्याच्छास्त्रदृष्टेन कर्मणा  ४५
नानासुगन्धकुसुमैः कृत्वा मालाः सुशोभनाः
नानावर्णसमायुक्तास्ताभिरूर्ध्वे मनोरमम्  ४६
लिङ्गस्य मण्टपं कुर्यान्मालालम्बनशोभितम्
वीणावेणुमृदङ्गाद्यैः श्राव्यैर्वाद्यविशेषकैः  ४७
गीतनृत्तस्तुतिस्तोत्रैर्जयशब्दादिमङ्गलैः
प्रणामैर्दण्डवद्भूमौ देवदेवं समर्चयेत्  ४८
ततश्चागरुधूपेन प्रासादाभ्यन्तरं सुधीः
धूपयित्वाथ संताड्य घण्टामस्त्रेण मन्त्रवित्  ४९
प्रच्छादनपटं कृत्वा कवाटावथ बन्धयेत्
प्रदक्षिणत्रयं कृत्वा नत्वा चैव पुनः पुनः  ५०
प्रसीद देवदेवेति प्रार्थयित्वा समापयेत्

पूजा वैशेषिकी चैषा पवित्राद्यन्तयोरपि ५१
वसन्ते चापि नैवेद्ये नवे चापि विशेषतः
कृत्तिकादीपकाले च घृतकम्बलके तथा ५२
संप्रयोज्या विधिज्ञैस्तु केवलोत्सवसंयुता
ध्वजभेर्यङ्कुरैर्हीनो बलिदानादिवर्जितः ५३
एकाहश्च दिवारात्रं बेरेणेष्टेन वा न वा
केवलोत्सव इत्युक्तो भक्त्या भक्तैः प्रकल्पितः ५४
एवं यः कुरुते मर्त्यः सकृद्वा लिङ्गपूजनम्
त्रिसप्तकुलसंयुक्तः शिवलोके महीयते ५५
मोदते चाक्षयं कालमिति शास्त्रस्य निश्चयः ५६

इत्यजिताख्ये महातन्त्रे क्रियापादे विशेषार्चनविधिर्नाम त्रिंशः पतलः

## एकत्रिंशः पटलः

## क्षीराभिषेकविधिः

क्षीराभिषेकं वक्ष्यामि वाञ्छितार्थप्रदं शुभम्
अकालमृत्युमथनमायुरारोग्यवर्धनम् १
श्रीकरं जयदं चैव सर्वसस्यविवृद्धिदम्
अवग्रहहरं लिङ्गे विधिना तत्समाचरेत् २
सौवर्णान्राजतान्वापि ताम्रजान्मृण्मयांस्तु वा
कलशान्पञ्च निष्पाद्य शिवार्धपरिपूरितान् ३
निर्दोषान् परिशुद्धांश्च सितसूत्रविचित्रितान्
सर्वात्मनैव मन्त्रेण संक्षाल्य प्रोक्ष्य तान्सुधीः ४
तेषु गव्यं पयः सम्यगापूर्य प्रणवेन तु

सितपुष्पाणि कूर्चं च कुशोदं तत्र निक्षिपेत् ५
पिधाय च पिधानेन शिवमन्त्रेण देशिकः
शिवाग्रे गोमयालिप्ते स्थण्डिलं व्रीहिभिस्ततम् ६
विधानात्कल्पयित्वाथ पद्मं तत्र प्रकल्पयेत्
चतुर्दलसमायुक्तं कर्णिकाशोभितं च तत् ७
तद्रेखां पूरयित्वाथ तण्डुलैस्तु तिलैस्ततः
पृथिव्यादीनि तत्त्वानि प्रदीपेन समर्चयेत् ८
मध्यादीनि स्वनाम्नैव कर्णिकायां ततो न्यसेत्
कलशांस्तारमुच्चार्य तदाद्यांश्चापि देशिकः ९
पूर्वादि विन्यसेत्तेन चतुरः कलशानपि
मध्यस्थं शुद्धवस्त्रेण वेष्टयित्वा समाहितः १०
तेषु हृन्मन्त्रमुच्चार्य गन्धपुष्पादिनार्चयेत्
प्रधानकलशं तेषु पञ्चमेनाभिमन्त्रयेत् ११
पुरुषेणेन्द्रदिक्संस्थमघोरेण तु याम्यगम्
वामेनोत्तरदिक्संस्थं पश्चिमं सद्यमन्त्रतः १२
एवं तानभिमन्त्र्याथ धेनुं तेषु प्रदर्शयेत्
तत्प्राच्यां दिशि देवाग्रे शान्तिहोमं समारभेत् १३
कुण्डे वा चतुरश्रे तु स्थण्डिले सैकतेऽपि वा
समिदाज्यचरूणां तु प्रत्येकं तु शताहुतीः १४
जुहुयात्तिलसंमिश्रतण्डुलं च तथा भवेत्
आज्याहुतिशतं पश्चाज्जुहुयाद्देशिकोत्तमः १५
समिधो हृदयेनाथ चाज्यं तु शिखया हुनेत्
अघोरेण चरुं चैव तिलमस्त्रेण होमयेत् १६
सर्वात्मना पुनः सर्पिरेवं कृत्वा समाहितः

अभिषेकं तु तत्काले तैस्तैर्मन्त्रैः समर्पयेत् १७
प्रत्येकं धूपमुत्क्षिप्य तोयस्नानान्तरान्तरम्
शङ्खभेर्यादिनिर्घोषैः स्तोत्राध्ययनमङ्गलैः १८
नृत्तगीतसमायुक्तमभिषेकं समाचरेत्
चन्दनागरुकर्पूरैर्लिङ्गमालिप्य सर्वतः १९
नैवेद्यं तु ततो दद्यात्ताम्बूलं च निवेदयेत्
नवाहमुत्तमं प्रोक्तं सप्ताहं मध्यमं भवेत् २०
पञ्चाहमधमं चैव प्रोक्तं क्षीराभिषेकतः
देशिकं साधकं चापि स्तोत्राध्ययनपाठकान् २१
तोषयेद्धेमवस्त्राद्यैर्यथाविभवविस्तरम्
अथवान्यप्रकारेण वक्ष्ये क्षीराभिषेचनम् २२
गाः शिवाग्रे समानीय प्रोक्षयित्वा शिवाम्भसा
मार्त्तिके नवपात्रे वा काञ्चनादिविनिर्मिते २३
क्षालिते प्रोक्षितेऽस्त्रेण दोहयित्वाथ सत्वरम्
धारोष्णेन ततस्तेन वत्सरेणाभिषेचयेत् २४
पूर्वोक्तेन प्रकारेण पञ्चभिः कलशैस्तु वा
दध्याज्यमपि संस्थाप्य पूर्ववद्धोमसंयुतम् २५
तद्वदेवाभिषिच्यैवं सर्वयज्ञफलं लभेत्
गोभ्यः पवित्रं लोकेऽस्मिन्न किंचिदपि विद्यते २६
गवामूधसि गङ्गाद्या वेदयज्ञाः समन्त्रकाः
संस्थिताः सर्वदेवाश्च तासामङ्गानि संश्रिताः २७
तस्माद्गोदेहजैः षड्भिर्मूत्राद्यै रोचनान्तकैः
शिवप्रियैर्विशेषेण शिवपूजां समाचरेत् २८
पञ्चगव्यविधानेन पञ्चभिर्वा पृथक्पृथक्

पूर्वाह्ने चैव मध्याह्ने लिङ्गे कृत्वाभिषेचनम् २९
गोरोचनामथाभ्यर्च्य चन्दनक्षोदमिश्रिताम्
शिवलिङ्गे तु यो भक्त्या सकृद्वापि समर्चयेत् ३०
सोऽनन्तफलमाप्नोति शैवं धाम गमिष्यति ३१
जलं पयो दध्यपि सर्पिरन्यल्लिङ्गे सकृद्वा विधिना प्रयुक्तम्
एनांसि पुंसः क्रमशः शतार्धैः शतोत्तरं संहरतीति विद्धि ३२
यः पञ्चगव्येन सकृत्करोति लिङ्गेऽभिषेकं शुचिरप्रमत्तः
स सप्तजन्मप्रभवैश्च पापैर्विमुच्यते नात्र हि संशयोऽस्ति ३३
तस्माच्च गोदेहभवैश्च षड्भिर्भक्त्या च यत्नेन शिवं सकृद्वा
समर्चयेद्यो विधिवन्मनुष्यस्तस्यापि च स्यात्सफलं तु जन्म ३४
इदं सर्वेषु कर्तव्यं सकृद्वा विधिवन्नरैः
अष्टम्यां च चतुर्दश्यां कृष्णे पर्वणि चादरात् ३५

इत्यजिताख्ये महातन्त्रे क्रियापादे क्षीराभिषेकविधिर्नाम एकत्रिंशः पटलः

## द्वात्रिंशः पटलः

## लिङ्गपूरणविधिः

लिङ्गपूरविधिं वक्ष्ये सर्वकामार्थसाधनम्
यत्र राष्ट्रे तु विधिना क्रियते लिङ्गपूरणम् १
तत्र मृष्टान्नपानादींल्लभन्ते सततं प्रजाः
शालिनीवारगोधूमयवाद्यन्नं सुसंस्कृतम् २
नवमृत्पात्रसंसिद्धं दध्याज्याभ्यां परिप्लुतम्
संपाद्य तेन कुर्वीत तथा वै तण्डुलैर्नवैः ३
तिलैः कृष्णैश्च सिद्धार्थैः क्षालितैः शोधितैस्ततः

गव्येन नवनीतेन सर्वगन्धमयेन वा ४
क्षोदेन पञ्चगन्धैश्च पुष्पैर्नानाविधैरपि
फलैः स्वादुतरैश्चापि पत्रैर्बिल्वादिभिस्ततः ५
नित्यावसाने चाप्यह्नि सहस्रादिषु संभवैः
कलशैरभिषिच्येशं कृत्वा पूजां विशेषतः ६
मूर्तिहोमं दिशाहोमं शान्तिहोममथापि वा
कारयित्वा हविर्दत्त्वा परमान्नं घृतप्लुतम् ७
प्रभूतं चाथ ताम्बूलं मुखवाससमन्वितम्
दत्त्वा देवस्य पार्श्वे तु तद्द्रव्यैः पूरणं भवेत् ८
तानि पात्रेषु संगृह्य प्रोक्षयित्वा शिवाम्भसा
पुण्याहं वाचयित्वाथ चालभ्यास्त्रेण मन्त्रवित् ९
स्थलशुद्धिं ततः कृत्वाभ्युक्ष्य गन्धोदकेन च
चम्पकोत्पलजात्यादिनाना पुष्पाभिरामया १०
मालया वेष्टयेल्लिङ्गमभितः सर्वतः समम्
वेष्टयित्वा तथा पीठं पश्चाद्दत्त्वार्घ्यमुत्तमम् ११
दत्त्वा चाचमनं तत्र ततः पूरणमाचरेत्
पूरयेद्गर्भगेहं तु यथा लिङ्गं न दृश्यते १२
सवेदिकं ततश्चापि मालाभिः परिवेष्टयेत्
संवत्सरात्मकं मन्त्रं ततः सर्वात्मसंज्ञकम् १३
पठेन्मन्त्रं तदा मन्त्री नमस्कृत्वा मुहुर्मुहुः
स्तोत्रमङ्गलवाद्यैस्तु गीतनृत्तसमाकुलैः १४
शङ्खभेर्यादिनिर्घोषैस्तत्कालेऽध्ययनं भवेत्
कवाटयोगं कृत्वाथ कृत्वा चैव प्रदक्षिणम् १५
पतित्वा दण्डवद्भूमौ निर्गच्छेद्देशिकोत्तमः

अष्टम्यां च चतुर्दश्यां पञ्चदश्यां सितेतरे १६
आर्द्रायामर्कवारे चाप्येवं कुर्वन्सकृन्नरः
सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम् १७
तत्फलं सकलं लब्ध्वा शिवेन सह मोदते
फलपूरप्रदाने तु फलं दशगुणोत्तरम् १८
भक्त्या वित्तानुसारेण चललिङ्गेऽथवाचले
तुल्यमेव हि तत्प्रोक्तं फलमाढ्यदरिद्रयोः १९

इत्यजिताख्ये महातन्त्रे क्रियापादे लिङ्गपूरणविधिर्नाम द्वात्रिंशः पटलः

## त्रयस्त्रिंशः पटलः

### घृतस्नानविधिः

घृतस्नानमथो वक्ष्ये सर्वशान्तिकरं परम्
इषोर्जयोस्तु पूर्णायां सहस्साहस्ययोस्तथा १
आर्द्रायामर्कवारे च कर्तुर्जन्मदिनेऽपि च
नूतनं तु घृतं गव्यं सर्वदोषविवर्जितम् २
मार्गशीर्षकमासे तु ह्यार्द्रायां च विशेषतः
सहस्रप्रस्थमर्धं वा शतप्रस्थमथापि वा ३
संगृह्य स्नापयेत् कृष्णे चतुर्दश्यां तु देशिकः
उत्तमं मध्यमं चान्यत्त्रिविधं तत्प्रकीर्तितम् ४
सौवर्णादिषु संस्थाप्य कलशेषु विधानतः
स्नपनं तु ततः कुर्यात्स्थापनं चाधुनोच्यते ५
पूर्वोक्तमण्टपे सम्यग्गोमयेनानुलेपिते
प्राङ्मुखैर्मनुसूत्रैस्तु तथैवोदङ्मुखैरपि ६

पदानि शालिपिष्टाक्तसूत्रेण परिकल्पयेत्
तालमात्रप्रमाणानि पिण्डितानि च तेष्वपि ७
पञ्चविंशत्पदं मध्ये कुर्यादेकपदं ततः
तद्बाह्ये परितो वीथीं महादिक्षु च मध्यमे ८
द्वारार्थमपि तत्रैव पदेनैकेन कल्पयेत्
कोणपार्श्वेऽथ वीथ्यग्रे द्वाराणि परिकल्पयेत् ९
स्थण्डिलं पूर्ववत्कृत्वा शालिभिर्विमलैस्ततः
सर्वेषां मध्यमे रन्ध्रपदे पद्मार्थमत्र तु १०
संलुप्य स्थण्डिलं कृत्वा कर्णिकाकैसरैर्युतम्
चतुर्दलसमायुक्तमब्जमालिख्य शोभनम् ११
प्रोक्षयित्वा शिवास्त्रेण ततः स्थापनमारभेत्
शिवयोः कलशौ द्वौ तु द्रोणद्रोणार्धपूरितौ १२
तथान्ये कलशाः सर्वे दशप्रस्थेन पूरिताः
निर्दोषाः सुसमा ग्राह्याः क्षालयेत्ताञ्शिवाम्भसा १३
सितसूत्रेण तान्सर्वान्समावेष्ट्य समन्ततः
प्रोक्षयित्वाथ तान्सर्वाञ्शिवयोः कलशौ ततः १४
पञ्चगव्येन युक्तेन यथाविधि जनार्दन
आपूर्य च ततो रत्नं काञ्चनं चापि निक्षिपेत् १५
कूर्चावपि पिधायैतौ वस्त्रयुग्मेन वेष्टयेत्
ततश्च रुद्रकलशान्दशप्रस्थाज्यपूरितान् १६
सर्वानपि समानीय प्रोक्षयित्वा शिवाम्भसा
स्थापयेत्कर्णिकामध्ये शिवकुम्भं च वर्धनीम् १७
तयोर्बाह्ये च चतुरः कलशांस्तु दलेषु च
स्थापयेच्च ततः सर्वान्पूर्वाद्यावरणक्रमात् १८

पुरायाहं वाचयित्वाथ प्रोन्दय घोरास्त्रमन्त्रतः
शिवाख्ये पूर्ववद्यष्ट्वा शिवं देवीं तथोत्तरे १९
तयोर्बाह्ये यजेदेतान् रुद्रान्मन्त्री शतेष्वपि
शम्भुं विभुं गणाध्यन्नं त्रियन्नं च चतुर्ष्वपि २०
पूर्वादिदलसंस्थेषु रुद्रान्कुम्भेषु पूजयेत्
द्वितीयावरणे चाथ प्रागादिषु समर्चयेत् २१
देववन्द्यं च संवाहं विवाहं च नभोलिहम्
विचन्नणमनन्तं च पावकं धीरमेव च २२
पातालाधिपतिं चापि वृषं वृषभमेव च
उग्रनासं च शुभ्रं च लोहितं सर्वतोमुखम् २३
विद्याधिपं ज्ञानभुजं सर्वज्ञं वेदपारगम्
मातृवृतं पिङ्गलान्नं भूतपालं बलिप्रियम् २४
सर्वविद्याधिपं चापि पूजयेत्क्रमशस्तथा
तृतीये चापि धातारं सर्वदुःखहरं तथा २५
शीघ्रं लघुं वायुवेगं सून्दमं तीन्दणं न्नयान्तकम्
पञ्चाननं पञ्चशिखं कपर्दिमेघवाहनौ २६
बलं चातिबलं चैव पाशहस्तं महाबलम्
श्वेतं च श्वेतरूपं च श्वेतवासं जलान्तकम् २७
वडवामुखं च भीमं च भूतिदं भूतिभूषणम्
हन्तारं क्रूरदृष्टिं च भवमन्तकमेव च २८
ऊर्ध्वकेशं विरूपान्नं धूम्रं लोहितमेव च
पूर्ववत्पूजयेदेतान् प्रागादिषु यथाक्रमम् २९
चतुर्थावरणे चापि यमं मृत्युहरं तथा
धातारं च विधातारं कर्तारं कालमेव च ३०

धर्ममीशं तथा ख्यातं संयोक्तारं यमप्रियम्
अग्निं रुद्रं हुताशं च पिङ्गलं खादकं गुरुम्  ३१
ज्वलनं दहनं बभ्रुं भस्मान्तं च भयान्तकम्
कपालीशमजं बुद्धं वज्रदेहं पुरार्दनम्  ३२
जटामकुटयुक्तं च नानारत्नधरं तथा
निधीशं रूपवन्तं च धन्यं सौम्यं प्रमर्दनम्  ३३
सुप्रसादं प्रसादं च लक्ष्मीशं बान्धवं तथा
कामरूपं सुदंष्ट्रं च पूजयेत्क्रमशः पुनः  ३४
एवं संपूज्य गन्धाद्यैः स्वनामपदमन्त्रकैः
स्नापयेद्देवदेवेशं कलशैस्तैर्यथाक्रमम्  ३५
आज्यं सर्वं तदादाय बहिरग्नौ विनिक्षिपेत्
तदर्धैः स्नपनं कुर्यात्प्रस्थैः पञ्चशतैरपि  ३६
मध्यमं तु समुद्दिष्टं तस्य च स्थापनक्रमः
पूर्ववद्देवपूजा च विशेषोऽयं प्रदृश्यते  ३७
तत्संख्याः कलशाः सर्वे तदर्धपरिमाणकाः
शेषं सर्वं समं विद्धि कन्यसं यत्प्रकीर्तितम्  ३८
शतप्रस्थैर्घृतैस्तस्य स्थापनं चाधुनोच्यते
प्रागग्रैः कौशिकैः सूत्रैरुदगग्रैस्तथैव च  ३९
पञ्चविंशत्पदं कृत्वा परितः षोडशं विना
मध्ये नवपदैरेकपदं कृत्वा ततः सुधीः  ४०
स्थण्डिलं पूर्ववत्कृत्वा यथाविधिपुरःसरम्
शिवयोः कुम्भयोर्युग्मं पञ्चगव्येन पूर्णयोः  ४१
रत्नहेमाढ्ययोश्चापि कूर्चयोः सापिधानयोः
वस्त्रवेष्टितयोश्चापि पूर्ववद्विन्यसेत्सुधीः  ४२

ततो बाह्ये दलाग्रेषु प्रागादिषु चतुर्ष्वपि
पूर्वप्रमाणान्कलशांश्चतुरो विन्यसेत्सुधीः ४३
षोडशेष्वथ तद्बाह्ये पदेषु च तथाविधान्
कलशान्षोडशन्यस्य ततः पूजां समारभेत् ४४
शिवौ पूर्ववदभ्यर्च्य कुम्भयोस्तु चतुर्ष्वथ
धर्मादीन्पूर्वतोऽभ्यर्च्य ततो विद्येश्वरानपि ४५
दिक्षु संपूजयेत्पश्चाद्विदिक्षु च भवादिकान्
एवमभ्यर्च्य देवांस्तु ततः स्नपनमाचरेत् ४६
त्रयाणामपि चैतेषां शान्तिहोमं तु कारयेत्
एवमेव विधिः प्रोक्तो मधुनश्चापि केशव ४७
स्नापयेच्च ततो धीमान्घृतस्नानादनन्तरम्
कलशैरपि पूर्वोक्तैः सहस्रादिषु संभवैः ४८
ततो माषादिचूर्णेन सुगन्धामलकेन च
उद्वर्त्य बहुशो लिङ्गं शुद्धं कृत्वा सपीठकम् ४९
सुगन्धेनेषदुष्णेन वारिणा चाभिषिच्य च
ततो हरिद्रया वापि समालिप्यार्द्रया शिवम् ५०
गन्धोदेनाभिषिञ्चेच्च शीतलेन समाहितः
उशीरबिल्वपत्राद्यैर्विघृष्य बहुशः सुधीः ५१
उष्णाम्बुना समन्ताच्च पीठं च क्षालयेत्स्थलम्
एवं कर्मणि निर्वृत्ते नित्यवत्पूजयेच्छिवम् ५२
चन्दनागरुकर्पूरकुङ्कुमै रोचनायुतैः
लिङ्गं पर्याप्तमालिप्य धूपदीपे गुरुस्ततः ५३
पायसं च हविर्दत्त्वा क्षमस्वेति समापयेत्
अधमं वा घृतस्नानं यः सकृद्वापि कारयेत् ५४

कल्पकोटिसहस्रं तु शिवलोके महीयते
घृतकम्बलकं चापि यः शिवाय निवेदयेत् ५५
घृतस्नानफलं तस्य जायते तद्विधिं शृणु
सहस्सहस्यमासे तु कृष्णपक्षे विशेषतः ५६
चतुर्दश्याममावास्यां घृतकम्बलमाचरेत्
नवनीतं विशुद्धं तु गव्यं संगृह्य देशिकः ५७
सम्यगुत्तेजयित्वाथ गन्धयुक्ते सुशीतले
ज्वलदग्निसमोष्णं तत्प्रक्षिपेच्च विचक्षणः ५८
तस्मादन्ये ततश्चापि पात्रे तोये सुशीतले
पुनः प्रक्षिप्य तस्माच्च पुनस्तद्वत्तथापरे ५९
प्रक्षिप्य बहुशस्तत्र निक्षिप्य च घृतं तथा
कृत्वा कम्बलवत्तेन लिङ्गमाच्छाद्य सर्वतः ६०
नित्यवत्पूजयित्वेशं परमान्नं हविस्तदा
दत्त्वा च मुखवासेन ताम्बूलमथ दापयेत् ६१
एवं कृत्वा ततो देवं नत्वा पूजां समापयेत्
ततः संध्यन्तरे प्राप्ते विसृज्य घृतकम्बलम् ६२
प्रक्षिपेदग्निमध्ये तु बहिर्गर्तप्रदीपिते
ततः स्नाप्य च देवेशं सहस्रादिषु संभवैः ६३
कलशैस्तु हविर्दत्त्वा प्रभूतमुखवासयुक्
ताम्बूलं च ततो दत्त्वा क्षमस्वेति समापयेत् ६३

इत्यजिताख्ये महातन्त्रे घृतस्नानविधिर्नाम त्रयस्त्रिंशः पटलः

## चतुस्त्रिंशः पटलः

## शीतकुम्भविधिः

शीतकुम्भविधिं वद्ये शृणु देवारिसूदन
दिव्यान्तद्विभौमानामद्भुतानां विशानम् १
ज्वरमारीप्रशमनमनावृष्टिहरं परम्
याज्ञिकं वृद्धमादाय त्रिपादीं कारयेत्सुधीः २
लिङ्गस्योपरि तस्याः स्यादुच्छ्रयं हस्तमात्रकम्
दद्विणेतरपृष्ठेषु पादास्तस्यास्त्रयः स्मृताः ३
द्वादशाङ्गुलकं नाहं पादेषु परिकीर्तितम्
त्रिकोणफलका तत्र गायत्र्यङ्गुलसंमिता ४
सुषिरं तालमात्रं स्याद्धनमद्त्यङ्गुलं भवेत्
एवं संपाद्य तां सम्यक् द्वालयित्वा शिवाम्भसा ५
त्रिपादीं गर्भगेहं तु विन्यसेदस्त्रमुच्चरन्
लिङ्गोर्ध्वे फलकारन्ध्रं यथा मध्यस्थितं तथा ६
तत्पादफलकाश्चापि नववस्त्रेण वेष्टयेत्
द्वात्रिंशत्प्रस्थसंपूर्नौ कुम्भौ बिम्बफलप्रभौ ७
वेष्टयित्वाथ सूत्रेण तयोरेकस्य पृष्ठतः
कृत्वा छिद्रं सुमध्यस्थं तत्र नालं प्ररोपयेत् ८
तच्च सौवर्णमेव स्याद् धुत्तूरकुसुमोपमम्
तस्य द्व्यङ्गुलकं दैर्घ्यं तस्य वक्त्रे च विस्तरम् ९
तत्प्रमाणं च तन्मूले गोवालाग्रमितं भवेत्
सनालं तु ततः कुम्भं प्रद्वाल्यास्त्रं समुच्चरन् १०
सर्वात्मजपपूर्वं तु त्रिपाद्यूर्ध्वे तु विन्यसेत्
कुम्भमन्यमथैशान्ये स्थण्डिले शालिनिर्मिते ११
आलिख्याष्टदलं पद्मं कर्णिकाकेसरान्वितम्
तण्डुलैः सतिलैर्लाजैरवकीर्य समन्ततः १२

कुशैश्च संपरिस्तीर्य वामाद्यास्तु दले यजेत्
मनोन्मनीं यजेन्मध्ये तत्र तं चापि विन्यसेत् १३
गन्धतोयेन तं मन्त्री पूरयेद्ब्रह्मपञ्चकैः
एलालवङ्गकर्पूरचन्दनागरुकुङ्कुमैः १४
पेषितैर्लोहितं तोयं गन्धपुष्पाधिवासितम्
पुनश्च वस्त्रपूतं तद्गन्धतोयमिति स्मृतम् १५
कुम्भाम्भसि क्षिपेद्धैमं पद्ममप्यक्षरान्वितम्
कूर्चं प्रक्षिप्य तत्रैव पिधानेन पिधाय च १६
वस्त्रेण वेष्ट्य तं मन्त्री गन्धपुष्पादिनार्चयेत्
हृन्मन्त्रेण ततो हस्तं दक्षिणं तन्मुखे सुधीः १७
न्यस्य मन्त्रं जपेत् सम्यक् संवत्सरमयं समम्
ततोऽपि पञ्चब्रह्माणि चेशानादि पठेत्सकृत् १८
ततस्तत्कुम्भपूर्वादिचतुर्दिक्षु ऋगादिभिः
सार्धमध्ययनैर्धीमान् दिशाहोमं तु कारयेत् १९
शान्तिहोमं तु वा कुर्यादैशेऽस्त्रनवसंयुतम्
तत्काले स्नपनं चापि सहस्रादिषु संभवैः २०
विधिवत्कलशैः कुर्याद्देशिकः शास्त्रचिन्तकः
प्रतिकुम्भे ततो वारि समादाय सुशीतलम् २१
कुम्भे देवोपरि न्यस्ते पूरयेद्वत्सरेण तु
सर्वात्ममन्त्रपूर्वं तु पिधानेन पिधाय च २२
वस्त्रेण वेष्टयेत्पश्चात्पुष्पं तस्योर्ध्वतो न्यसेत्
पुण्याहपूर्वकं सर्वकर्म कुर्याद्विचक्षणः २३
कर्म कृत्वा तु पूर्वाह्णे मध्याह्ने तज्जलं क्षिपेत्
एवं प्रतिदिनं कुर्याद्यावत्सप्तदिनान्तकम् २४

हवनं स्नपनं चैव जलस्यावर्तनं तथा
हविर्निवेदयेन्नित्यं प्रभूतं सर्वशान्तये २५
समाप्तौ स्नपनं पूजां विशेषेण प्रकल्पयेत्
देवस्य पूजकादीनां दक्षिणां दापयेत्तदा २६
माहेश्वरांस्तु विप्रेन्द्रान्भोजयेत्सर्वशान्तये २७

इत्यजिताख्ये महातन्त्रे क्रियापादे शीतकुम्भविधिर्नाम चतुस्त्रिंशः पटलः

## पञ्चत्रिंशः पटलः

## अङ्कुरार्पणविधिः

अथाङ्कुरविधिं वक्ष्ये शृणु देवारिसूदन
शिवयज्ञेषु सर्वेषु कर्षणादिषु देशिकैः १
मङ्गलार्थं प्रयोक्तव्यं विधिना मङ्गलाङ्कुरम्
उत्तमं मध्यमं चान्यदिति त्रैविध्यसंयुतम् २
पालिका घटिकाश्चैव शरावास्त्रिविधाः स्मृताः
सौवर्णा राजता वापि ताम्रजा मृण्मयास्तु वा ३
भवेयुरङ्कुराधाराः सर्वलक्षणलक्षिताः
शिवमुद्दिश्य यत्कर्म यत्र वै क्रियते जनैः ४
तस्मात्पूर्वे प्रयुञ्जीत नवमे सप्तमेऽपि वा
पञ्चमे वा त्र्यहे वापि कुर्यात्तद्बीजवापनम् ५
उक्तानां दिवसानां तु निशि पूर्वे प्रयोजयेत्
प्रत्येकमष्टभिस्त्वेतैः पालिकाद्यैर्वरं भवेत् ६
पालिकाभिरथाष्टाभिश्चतुर्भिर्घटिकाह्वयैः
शरावैश्चापि तत्संख्यैर्मध्यमं परिकीर्तितम् ७

चतस्त्रः पालिकाश्चैव चतस्त्रो घटिकास्तथा
शरावाश्च तथैव स्युः कन्यसे चाङ्कुरार्पणे ८
सर्वेषां स्थापनं तेषां भवेद्यागगृहेऽथवा
देवाग्रे पार्श्वयोश्चापि गोमयेनानुलेपिते ९
कुट्टिमे स्थण्डिलं कुर्यात्सप्ततालसुविस्तृतम्
षट्तालं मध्यमं प्रोक्तं पञ्चतालं तु कन्यसम् १०
शालिभिर्विमलैस्त्वत्र द्वात्रिंशत्प्रस्थसंमितैः
प्रस्थैर्वाथ चतुर्विंशैः षोडशैर्वापि तत्र च ११
पद्ममष्टदलं कुर्यात्कर्णिकाकेसरान्वितम्
कर्णिकायां यजेत्पूर्वमादिशक्तिं मनोन्मनीम् १२
प्रागादिषु दलेष्वथ वामाद्यः परितो यजेत्
कर्णिकायां न्यसेत्कुम्भं काञ्चनाद्यैस्तु निर्मितम् १३
क्षालितं शोधितं चैव द्रोणपूर्णं मनोरमम्
सितसूत्रविचित्रं च गन्धोदपरिपूरितम् १४
सकूर्चं सापिधानं च सहेमं वस्त्रवेष्टितम्
ततस्तद्दलमूलेषु न्यसेदष्ट शरावकान् १५
दलमध्ये न्यसेत्तद्वत्क्रमेण घटिकाष्टकम्
दलाग्रेषु ततश्चाष्ट पालिकाः परितो न्यसेत् १६
शुद्धमृत्तिकया पूर्णा गोशकृच्चूर्णयुक्तया
एवं श्रेष्ठप्रकारं स्यान्मध्यमं त्वधुनोच्यते १७
पूर्ववत्पालिकाः स्थाप्य दलमध्ये ततः क्रमात्
विन्यसेद्घटिका दिक्षु शरावांश्च विदिक्षु वै १८
एवं मध्ये क्रमः प्रोक्तः कन्यसं त्वधुनोच्यते
पालिका दिग्दलाग्रेषु चतुर्ष्वपि च विन्यसेत् १९

विदिक्षु घटिकास्तद्वद्दलमूले शरावकान्
चतुर्दिक्षु न्यसेन्मन्त्री परिस्तीर्य कुशांस्ततः २०
पुण्याहं वाचयित्वाथ प्रोक्षयेद्धृदयेन तु
सोमराजं ततः कुम्भे गन्धाद्यैरर्चयेत्क्रमात् २१
स्वनामपदमन्त्रेण हविर्दद्यात्ततो बुधः
मुद्गमाषकुलत्थं च तिलसर्षपकौ तथा २२
निष्पावशाल्यपामार्गं शिम्बो व्रीहिस्तथैव च
आढकी च तथा श्यामा गोधूमयववैणवम् २३
सर्वैरुत्तममेतैस्तु दशभिर्मध्यमं भवेत्
पञ्चभिः कन्यसं प्रोक्तं बीजैर्मुद्गादिभिः क्रमात् २४
प्रक्षाल्य पयसा बीजान् प्रोक्षयेद्धृदयेन तु
शङ्खदुन्दुभिनिर्घोषैर्गीतनृत्तसमाकुलम् २५
पञ्चब्रह्म समुच्चार्य वापयेत्पालिकादिषु
सोमकुम्भजलेनैव पालिकादिषु सेचयेत् २६
दलाग्रस्थेषु सर्वेषु लोकपालान्समर्चयेत्
मरुतो दलमध्ये तु दलमूले वसूनपि २७
पूजयेदुत्तमे प्रोक्तान्मध्यमे तु वसूनपि
न्यस्य समर्चयेच्छेषानधमे चापि तैः सह २८
मरुतश्चापि वर्ज्याः स्युर्दलमूलस्थितेष्वपि
चतुर्ष्वपि च धर्मादीन्प्रागादिक्रमतो यजेत् २९
एवं तदा समभ्यर्च्य स्वस्तिमङ्गलवाचकैः
पिधाय च पिधानैश्च सुष्ठु गुप्ते निधापयेत् ३०
अलाभे चोक्तदेशस्य शुचौ रक्षासमन्विते
देशेऽङ्कुरार्पणं कुर्याद्गोमयेनानुलेपिते ३१

एवमर्चनमुद्दिष्टं यावदुद्धारणान्तकम्
प्रत्यहं सेचनं चैव कुम्भे चाम्भःप्रवेशनम्  ३२
मध्याह्ने कारयेद्धीमानङ्कुराणि च लक्षयेत्
अवक्राणि च शुभ्राणि सर्वसंपत्कराणि च  ३३
धूम्राणि चाथ कुब्जानि श्रेयोविघ्नकराणि च
एवं ज्ञात्वाशुभं तत्र शान्तिहोमं तु कारयेत्  ३४
इत्यजिताख्ये महातन्त्रे क्रियापादे अङ्कुरार्पणविधिर्नाम पञ्चत्रिंशः पटलः

## षट्त्रिंशः पटलः

## प्रतिमालक्षणविधिः

प्रतिमालक्षणं वक्ष्ये शृणु त्वं हि जनार्दन
यत्र या स्थाप्यते धाम्नि प्रतिमा तत्र गर्भतः  १
द्वारतः पादतो वापि मानात्तां परिकल्पयेत्
त्रिभागे गर्भविस्तारे द्विभागेनोत्तमा भवेत्  २
शरभागयुते गर्भे गुणभागेन मध्यमा
नेत्रभागयुते गर्भे व्योमभागेन चाधमा  ३
नन्दभागयुते गर्भे व्योमांशेनाधमाधमा
नवभिश्चोत्तमश्रेष्ठा प्रतिमेति निगद्यते  ४
तयोर्मध्यप्रमाणानां सप्तमं संप्रयोजयेत्
गर्भमानमिति प्रोक्तं द्वारमानमतः शृणु  ५
शुद्धद्वारगतं मानं कृत्वा तु वसुभागिकम्
एकभागं परित्यज्य शेषैरंशैस्तु सप्तभिः  ६
या भवेत् कल्पितोच्छ्राया कन्यसा प्रतिमा भवेत्

द्वारोत्सेधेऽथ नन्दांशे व्योमांशं तेष्वपोह्य च ७
शेषैस्तुल्या तु मध्या स्यादुत्तमा तत्समा भवेत्
द्वारमानमिति प्रोक्तं स्तम्भमानमतः शृणु ८
स्तम्भोत्सेधसमोत्तुङ्गप्रतिमा चोत्तमा भवेत्
नवांशहीना मध्या स्यादधमाष्टांशहीनका ९
पादमानमिति प्रोक्तं हस्तमानमतः शृणु
उत्तमा तिथिहस्ता स्यात्पङ्क्तिहस्ताथ मध्यमा १०
शरहस्ताधमा प्रोक्ता स्वतन्त्रे स्यादयं विधिः
शिवलिङ्गं समुद्दिश्य प्रतिमा यत्र कल्प्यते ११
पादादिलक्षणं तस्यास्तच्छृणु त्वं जनार्दन
लिङ्गस्योत्तुङ्गमाने तु विकारांशविभाजिते १२
तैरंशैरग्निभिर्बाणैर्मुनिभिर्नन्दकैः क्रमात्
रुद्रैश्चापि भवेद्वृद्ध्या प्रमाणानां तु पञ्चकम् १३
बेराणां तु समुद्दिष्टमेतैरेव पुनः क्रमात्
लिङ्गमानात्क्षयेणापि भवेत्पञ्चप्रमाणकम् १४
वृद्ध्या पञ्च प्रमाणानि क्षयात्पञ्च तथैव च
लिङ्गोत्तुङ्गसमं चैवमेवमेकादशोच्छ्रयम् १५
प्रमाणानि च लिङ्गस्य कथितानि वशात्पुनः
विस्तारे कल्पयेद्धीमान्नाहे चापि प्रकल्पयेत् १६
तस्माल्लिङ्गवशान्मानं त्रयस्त्रिंशदुदाहृतम्
बेरोत्सेधे गुणांशे तु व्योमांशमितमासनम् १७
आसीनस्य समुद्दिष्टं संस्थितस्य युगांशकम्
भूतांशाद्वा सपद्मं तदासनं परिकल्पयेत् १८
एवं मानं समुद्दिष्टं प्रतिमापीठयोरिदम्

लब्धं बेरेषु यन्मानं तालगरयं तु तद्भवेत् १९
अङ्गुलं देहलब्धं तु तत्तालं द्वादशाङ्गुलम्
कल्पितं स्यात्सुरश्रेष्ठ तैर्बेरेष्वङ्गकल्पना २०
अङ्गुलैकादिपादान्तं मानोन्मानादिभिर्भवेत्
दशतालं नवतालमष्टतालमतः परम् २१
सप्ततालं च षट्तालं पञ्चतालमतः परम्
चतुस्तालं त्रितालं च तालमष्टविधं भवेत् २२
रव्यङ्गुलमिदं तालमिति शास्त्रस्य निश्चयः
त्रैविध्यं दशतालस्य नवतालस्य चैव हि २३
उत्तमं मध्यमान्तं च तेषां भेदो विधीयते
उत्तमं दशतालं तु चतुर्विंशच्छताङ्गुलम् २४
चतुरङ्गुलहीनं तद्दशतालं तु मध्यमम्
तस्माच्चाधममित्युक्तं हीनं यच्चतुरङ्गुलैः २५
नवतालोत्तमं ज्ञेयं शतं सद्वादशाङ्गुलम्
हीनं तस्माच्च मध्यं स्यादङ्गुलानां चतुष्टयात् २६
ततश्च पूर्ववद्धीनं नवतालाधमं भवेत्
दशतालोत्तमाज्ज्ञेया ब्रह्मविष्णुमहेश्वराः २७
उमा कात्यायनी लक्ष्मीश्चामुराडा च सरस्वती
माहेशी वैष्णवी ब्राह्मी दशतालस्य मध्यमात् २८
स्कन्दमिन्द्रं तथादित्यं वीरभद्रं तथैव च
क्षेत्रपालं शचीं देवीमुषां भूमिं तथैव च २९
वाराहीं च तथेन्द्राणीं कौमारीं च तथाश्विनौ
दशतालाधमे कुर्याद् वह्निं किन्नरमेव च ३०
निर्ऋतिं यादसां नाथं वायुं वैश्रवणं तथा

ईशानं च ऋृषीन्सर्वाञ्शास्तारं मदनं तथा ३१
एतेषामपि पत्नीश्च तथैवाप्सरसां गणम्
महामोटीं च विद्येशांस्तार्क्ष्यगन्धर्वयक्षकान् ३२
सिद्धचारणनागेन्द्रान्विद्याधरगणानपि
रुद्रानेकादशादित्यान्द्वादशाष्ट वसूनपि ३३
नवतालोत्तमेनैव कारयेद्देशिकोत्तमः
राक्षसानसुरांश्चैव किन्नरानपि कारयेत् ३४
नवतालेन मध्येन नवतालाधमेन च
शेषान्देवगणान् देवीरष्टतालेन मानवाः ३५
पिशाचाः सप्ततालाः स्युः षट्तालाः कुब्जकास्तथा
पञ्चतालो गजास्यः स्याच्चतुस्तालाच्च वामनः ३६
भूताः सर्वे त्रितालाः स्युर्वृषेन्द्रस्य तथैव हि
एवं तालक्रमः प्रोक्तो बेराणां परिकल्पने ३७
तालजस्याङ्गुलस्यास्य यवोऽष्टांश उदाहृतः
अङ्गुलं मात्रमंशश्च शब्दाः पर्यायवाचकाः ३८
द्व्यङ्गुलं कोलकं ज्ञेयं त्र्यङ्गुलं तु कला भवेत्
भागं स्याच्चतुरङ्गुल्यं यावकं तद्द्वयं भवेत् ३९
भागं यावकसंयुक्तं मुखमेतत्प्रकीर्तितम्
मुखं तालमिति प्रोक्तं द्वादशाङ्गुलसंयुतम् ४०
मानं प्रमाणमुन्मानं लम्बमानोपमानके
एवं पञ्चप्रमाणेन व्यक्तलिङ्गं तु कारयेत् ४१
मानं स्यात्प्रतिमोत्सेधं तद्विस्तारं तु यद्भवेत्
तत्प्रमाणमिति ज्ञेयमुन्मानं तस्य नाहकम् ४२
लम्बमानं तु सूत्रेण मितं यत्तदुदीरितम्

तद्द्व्यन्तरप्रमाणं यदुपमानं तदुच्यते ४३
मानैः पञ्चभिरेतैस्तु न्यूनाधिकविवर्जितैः
निर्मिता प्रतिमा या स्यात्सा सर्वाभीष्टसिद्धिदा ४४
लब्धे तु प्रतिमोत्सेधे चतुर्विंशच्छताङ्गुले
केशान्तात्पादपर्यन्तमङ्गमानमतः शृणु ४५
उष्णीषमङ्गुलं ज्ञेयं केशान्तं स्यात्कलाङ्गुलम्
त्रयोदशाङ्गुलं सार्धं मुखमानमिति स्मृतम् ४६
तेषु वेदाङ्गुलं सार्धं केशान्तादक्षिसूत्रकम्
नासापुटान्तं तत्सूत्रात्तत्प्रमाणमिति स्मृतम् ४७
पुटान्ताद्धनुपर्यन्तं पूर्ववत्परिकीर्तितम्
तस्याधोऽर्धाङ्गुलेनैव गलवृद्धिं प्रकल्पयेत् ४८
कण्ठमानमिति ज्ञेयं तच्च हिक्कान्तमुच्यते
तस्माच्च हृदयान्तं तु सार्धत्रयोदशाङ्गुलम् ४९
तस्माच्च नाभिपर्यन्तं मानं तद्वदुदाहृतम्
नाभेश्च मेढ्रपर्यन्तं त्रयोदशाङ्गुलमुच्यते ५०
जान्वन्तं च ततो मेढ्रात्सप्तविंशाङ्गुलं भवेत्
कोलकद्वितयं जानु जङ्घा गुल्फान्तमूरुवत् ५१
भागं पादतलोत्सेधं कायमानमिति स्मृतम्
द्वादशाङ्गुलतारेण मितं कुर्यात्तदाननम् ५२
उष्णीषात्पूर्वकेशान्तं नन्दाङ्गुलमिति स्मृतम्
उष्णीषात्पृष्ठकेशान्तं रव्यङ्गुलमिति स्मृतम् ५३
उष्णीषात्पार्श्वकेशान्तं प्रत्येकं तु दशाङ्गुलम्
कर्णयोरन्तरं वक्त्रे विंशमात्रमिति स्मृतम् ५४
नासाग्रात्कर्णपर्यन्तं प्रत्येकं द्वादशाङ्गुलम्

कर्णयोरन्तरं पृष्ठे सार्धं स्याद् द्वादशाङ्गुलम् ५५
कोलकं कर्णतारं स्यात्कर्णदैर्घ्यं च कोलकम्
कर्णयोरपरे तारमङ्गुलं सार्धमुच्यते ५६
द्वियवं कर्णपाली स्यात्तत्समं कर्णपट्टिका
मात्रार्धं कर्णपट्टं स्यादङ्गुलं कर्णनालकम् ५७
भागान्नालायतं चैव ह्यध्यर्धाङ्गुलविस्तृतम्
अपाङ्गात्कर्णमूलान्तं सप्तमात्रमिति स्मृतम् ५८
भ्रूसूत्रेन समं तीर्य कर्णोर्ध्वं तु प्रकल्पयेत्
द्विमात्रं द्वियवाधिक्यं नेत्रायामं विधीयते ५९
षडयवं नेत्रविस्तारमायामं तु त्रिधा भवेत्
कृष्णमण्डलमेकं स्यान्मध्ये पार्श्वद्वयं सितम् ६०
कृष्णमण्डलमध्ये तु दृष्टिर्यूकप्रमाणतः
करवीरं यवं रक्तं नयनं स्यात्तु मूलके ६१
नवतिः पद्मरोमाणि नेत्रयोश्च पृथक्पृथक्
भ्रूरेखा पद्मरेखा च कोलकं पादसंयुतम् ६२
भ्रूरेखा चोर्ध्वकेशान्ता तत्समा तु प्रकीर्तिता
ऊर्ध्ववर्मविशालं यत्पञ्चभिश्च यवैर्मितम् ६३
अधोवर्म यवं विद्याद्भ्रूदीर्घं स्याद्रसाङ्गुलम्
तद्विस्तारं यवं विद्याच्चापाकारं प्रकल्पयेत् ६४
नेत्रयोरन्तरं चापि द्विमात्रं परिकीर्तितम्
मूलनासार्धमात्रा स्यादग्रा सयवमात्रका ६५
अर्धमात्रप्रमाणेन पुटयोरन्तरं भवेत्
तयोः पञ्चयवं तुङ्गं सुषिरं त्रियवं भवेत् ६६
तद्बाह्ये परितो विद्याद्यवार्धं घनमेव हि

पुटान्तरं च त्रियवं गोजिमानं चतुर्यवम् ६७
गोज्याश्च नासिकातुङ्गं कोलकं द्वियवाधिकम्
वंशस्येव तु विस्तारमङ्गुलं चेति कीर्तितम् ६८
पुष्करं यवमात्रं स्यात्पुरस्तात् षडद्यवं ततः
तिलपुष्पसमाकारं नासाग्रपुटयोर्द्वयोः ६९
पुटान्तादधरोष्ठान्तं कोलकं द्वियवाधिकम्
द्वियवं दन्तविस्तारमुत्सेधं तत्समं भवेत् ७०
दंष्ट्रायामं यवाधिक्यं सदृशं मुकुलाकृतेः
ऊर्ध्वे द्विरष्टदन्तास्तु तावदेवाप्यधः स्थिताः ७१
जिह्वायामं तु षरामात्रं विस्तारं स्यात्तदर्धतः
अधरोष्ठस्य विस्तारमङ्गुलं स्याद्यवाधिकम् ७२
अधरोष्ठं रक्तवर्णं तारात्सप्तयवं भवेत्
तदायामं द्विमात्रं स्यादास्यतारं द्विकोलकम् ७३
उत्तरोष्ठस्य तारं च त्रियवं परिकीर्तितम्
हनुः स्याद्द्व्यङ्गुलायाममूर्ध्वनिम्नं यवं भवेत् ७४
सप्तयवोच्चमधरात्त्रिमात्रं हनुवर्धनम्
त्रियवं चोन्नतं विद्धि कलार्धं चिबुनिर्गतिः ७५
पूर्णचन्द्राकृतिं वक्त्रमुक्तलक्षणसंयुतम्
कारयेत्सुप्रसन्नं तु स्मेररम्यमनिन्दितम् ७६
कृकटीपृष्ठग्रीवं च भागायाममिति स्मृतम्
भागायाममधस्तस्य शूर्पाकारं प्रकल्पयेत् ७७
ककुदः कटिसंध्यन्तं त्रिंशदङ्गुलमुच्यते
तत्समं कक्षयोर्मध्यं कटिसंध्यं च पृष्ठतः ७८
कलाभिः सप्तभिः प्रोक्तं वसुमात्रार्धसंमितम्

ग्रीवाग्रविस्तरं प्रोक्तं भागद्वितयसंयुतम् ७९
तत्तारान्मूलतारं यत्तद्धवेदङ्गुलाधिकम्
ग्रीवा सुवृत्ता निर्दिष्टा रेखाद्वितयवेष्टिता ८०
हिक्कासूत्रादधो बाहू सप्तविंशाङ्गुलायतौ
प्रकोष्ठौ च पृथक् स्यातामेकविंशाङ्गुलायतौ ८१
सप्ताङ्गुलौ पाणितलौ मध्यमेऽर्धांशहीनके
तर्जन्यनामिके स्यातां यवद्वयविहीनके ८२
अङ्गुष्ठं च चतुर्मात्रं कनिष्ठा च तथा भवेत्
हिक्कासूत्रात्तु कक्षान्तं नवमात्रार्धमुच्यते ८३
हिक्कासूत्रोपरि स्कन्धौ गलपार्श्वे द्विकोलकम्
कोलकार्धं तदर्धं च मध्यपर्यन्तयोर्भवेत् ८४
बाहुमूलस्य विस्तारं नवमात्रं तु सार्धकम्
बाहुमध्यगतं तारमष्टमात्रं यवाधिकम् ८५
कूर्परस्य तु विस्तारं मुनिमात्रमिति स्मृतम्
प्रकोष्ठमूलगं तारं षरामात्रं यवहीनकम् ८६
कोष्ठमध्यमविस्तारं पञ्चाङ्गुलं यवाधिकम्
मणिबन्धस्य विस्तारं त्रिमात्रं षड्यवाधिकम् ८७
तलस्य तिर्यङ्मानं तु पारायोरायामवद्भवेत्
एकादशयवं तारमङ्गुष्ठस्य प्रकीर्तितम् ८८
तर्जन्या विस्तरं तत्र यवाष्टकमुदाहृतम्
यवाधिकं ततश्चापि मध्यमां परिकल्पयेत् ८९
तर्जनीवदनामा च पञ्चभिस्तैः कनिष्ठिका
सप्तार्धं चतुर्यवार्धं च पञ्चार्धं चतुरर्धकम् ९०
त्रियवार्धं च विस्तारमङ्गुष्ठादिनखस्य तु

स्वविस्ताराद्यवाधिक्यं नखानां दीर्घमुच्यते ९१
अङ्गुष्ठं तु द्विपर्वं स्याच्छेषाः पर्वत्रयान्विताः
सर्वासां मूलविस्तारादग्रमष्टांशहीनकम् ९२
रेखात्रययुतं कुर्यात्तलं पाणयोर्जनार्दन
कक्षयोरन्तरं चाथ त्रयोविंशाङ्गुलं भवेत् ९३
हिक्कास्तनान्तरे तारमर्धाधिकत्रयोदशम्
स्तनयोरन्तरं तद्वत् स्तनयोर्मण्डलेऽपि च ९४
द्विद्व्यङ्गुलं भवेत्तारं तन्मध्ये चापि चूचुकम्
यवद्वितयविस्तारं यवोत्सेधयुतं भवेत् ९५
वक्षसश्चापि विस्तारं सार्धमष्टादशाङ्गुलम्
उदरस्य तु विस्तारं तिथ्यङ्गुलं तु सार्धकम् ९६
नाभिः प्रदक्षिणावर्तस्तद्विस्तारं तु षड्यवम्
निम्नं यवद्वयं विद्यात्तारं श्रोणीगतं तु यत् ९७
तच्चाप्यर्धाधिकैरेव भवेत्सप्तदशाङ्गुलैः
कटिप्रदेशविस्तारं नवभिश्च दशाङ्गुलम् ९८
भूताङ्गुलं यवाधिक्यं मेढ्रायाममिहोच्यते
मुष्कश्च चतुरङ्गुल्यो विस्तारायामतः समः ९९
कोलकं तु यवाधिक्यं तन्मेढ्रस्य तु विस्तरम्
ऊरुमूलस्य विस्तारं त्रयोदशाङ्गुलं भवेत् १००
अधस्तादूरुविस्तारं द्वादशाङ्गुलकं भवेत्
जनुमध्यस्य विस्तारं नवमात्रमुदाहृतम् १०१
जङ्घामूलस्य विस्तारं जानुवत्परिकीर्तितम्
जङ्घामध्यमविस्तारं सप्ताङ्गुलं यवाधिकम् १०२
नलकस्य तु विस्तारं वेदाङ्गुलं च सार्धकम्

पञ्चाङ्गुलयवाधिक्यं तारं पादतलस्य तु १०३
पादाङ्गुष्ठायतं चैव द्विकोलकमिति स्मृतम्
तस्माद्यवाधिका प्रोक्ता देशिनी मध्यमाथ च १०४
द्व्यर्धमात्रयुता प्रोक्ता दैर्घ्यमेवमुदीरितम्
त्रयोदशयवं विद्यादङ्गुष्ठस्य तु विस्तरम् १०५
अनन्तरा नन्दयवा मध्या वसुयवा स्मृता
तस्मादर्धविहीनान्या तस्मादन्यार्धहीनका १०६
एवमङ्गुलिविस्तारं क्रमेण परिकीर्तितम्
अङ्गुष्ठाद्यङ्गुलीनां तु नखविस्तारमुच्यते १०७
सार्धपञ्चयवं पश्चात् सार्धं चापि चतुर्यवम्
चतुर्यवं ततः सार्धं त्रियवं द्वियवं क्रमात् १०८
विस्तारेण समं दैर्घ्यं नखानां परिकीर्तितम्
विस्तारत्रिगुणं नाहं सर्वेषु परिकल्पयेत् १०९
दशतालोत्तमेनैवं प्रतिमां परिकल्पयेत्
मध्यमदशतालेन कर्तव्या यास्तु देवताः ११०
तासां मानादि वक्ष्येऽहमङ्गुलैस्तत्तदुद्भवैः
देवमानवशान्मानं देवीनां परिकल्पयेत् १११
कर्णान्तं कर्णनालान्तं हन्वनतं वापि कारयेत्
बाह्वन्तं वापि देवीनां देवमानात्प्रकल्पयेत् ११२
लब्धोत्सेधेन यन्मानं कुर्याद्विंशच्छताङ्गुलम्
उष्णीषात्केशपर्यन्तं वेदाङ्गुलमिति स्मृतम् ११३
तस्मान्नेत्रान्तमुद्दिष्टं पञ्चांशं पादहीनकम्
ततो नासापुटान्तं स्यादर्धहीनशराङ्गुलम् ११४
नासापुटाच्च हन्वन्तं श्रुत्यंशं पादहीनकम्

हनोः कराठाच्च भागं स्यात्कराठाच्च हृदयान्ततः ११५
त्रयोदशाङ्गुलं ज्ञेयं तस्मान्नाभ्यन्तकं तथा
तस्माच्च योनिपर्यन्तं तथैव परिकल्पयेत् ११६
तस्माच्च जानुपर्यन्तं षड्विंशाङ्गुलमुच्यते
चतुरंशं भवेज्ञानु जङ्घा चोरुवदुच्यते ११७
भागं पादतलोत्सेधं तस्यायाममथोच्यते
विकारांशं तदायामं भागमङ्गुष्ठदैर्घ्यकम् ११८
तर्जनी तत्समा ज्ञेया हीनार्धार्धाङ्गुलाः पराः
रविनन्दयवैरष्टसप्तभिः षड्भिरेव च ११९
अङ्गुष्ठादिकनिष्ठान्तमङ्गुलीनां तु विस्तृतम्
तत्तत्तारार्धमानेन नखविस्तारमुच्यते १२०
पादाग्रमध्यपार्ष्णीनां षट्पञ्चचतुरङ्गुलम्
विस्तारं गुल्फविस्तारं भूताङ्गुलमिति स्मृतम् १२१
नलकाविस्तारं चापि वेदाङ्गुलमिति स्मृतम्
जङ्घामध्यमविस्तारं षरामात्रमिति कीर्तितम् १२२
जानु सप्तांशविस्तारं मुखमूरुविशालकम्
चतुर्विंशतिमात्रं तु कटिविस्तारमुच्यते १२३
श्रोणीललाटं तेष्वेव षरामात्रमिति कीर्तितम्
अश्वत्थपत्रवद्योनिर्विस्तारं चतुरङ्गुलम् १२४
श्रोणीविस्तारमानं तु विंशदङ्गुलमुच्यते
नाभिः प्रदक्षिणावर्ता गम्भीरं षडयवं भवेत् १२५
विस्तारं च तथैव स्यान्नाभिदेशस्य विस्तरम्
एकादशाङ्गुलं ज्ञेयं तदूर्ध्वे चोदरस्य तु १२६
त्रयोदशाङ्गुलं तारं स्तनाधस्तात्प्रकल्पयेत्

स्तनतारं नवाङ्गुल्यं चूचुकं त्र्यङ्गुलं भवेत् १२७
विस्तारार्धं स्तनोत्सेधं तस्य पञ्चाङ्गुलार्धकम्
तदुन्नतं यवं विद्यात्कक्षयोरन्तरं ततः १२८
भवेत्सप्तदशाङ्गुल्यं बाहुभ्यां च तदूर्ध्वतः
एकविंशाङ्गुलं तारं हिक्कासूत्रं ततो भवेत् १२९
बाहुदीर्घं च षड्विंशमङ्गुलं कूर्परं ततः
नेत्राङ्गुलं भवेत्पश्चादष्टाधिकदशाङ्गुलम् १३०
प्रकोष्ठं तु तलं चापि सप्ताङ्गुलमितीरितम्
षडंशं मध्यमादैर्घ्यं पञ्चांशा तर्जनी भवेत् १३१
तथैवानामिकादैर्घ्यं कनिष्ठा चतुरङ्गुला
तथैवाङ्गुष्ठदैर्घ्यं स्याद्विस्तारं तद्गतं पुनः १३२
नवसप्ताष्टसप्तर्तुयवैरङ्गुष्ठपूर्वकम्
मूलादग्रे क्षयं चापि तत्तदष्टांशमुच्यते १३३
मुनिवेदशरैर्वेदरन्ध्रैरपि यवैः क्रमात्
अङ्गुष्ठादिनखानां तु तारमग्नियवं ततः १३४
कनिष्ठायां तु कुर्वीत तत्तद्दैर्घ्यं यवाधिकम्
कनिष्ठानामिकामध्यादेशिन्यश्च त्रिपर्वकाः १३५
अङ्गुष्ठं तु द्विपर्वं स्यात्तले तारं षडङ्गुलम्
मणिवन्धस्य विस्तारं वह्न्यङ्गुलमुदीरितम् १३६
कूर्परं तु शराङ्गुल्यं बाहुमध्यं षडङ्गुलम्
सप्ताङ्गुलं भवेद्बाहुमूलं चैव क्रमेण वै १३७
सप्ताङ्गुलं भवेत्कण्ठे विस्तारं तु ततो मुखे
रुद्राङ्गुलं तु विस्तारमेवं तारं प्रकीर्तितम् १३८
दशतालेन मध्येन स्त्रीमानमिति कीर्तितम्

अधमे दशताले तु भाजिते षोडशाधिकैः १३९
अङ्गुलानां शतैस्तैस्तैरङ्गकल्पनमुच्यते
उष्णीषकण्ठजानूनां तलस्यापि समुच्छ्रयम् १४०
चतुरङ्गुलमुद्दिष्टं प्रत्येकं तु विशेषतः
सार्धं त्र्यङ्गुलं वक्त्रं तद्वद्वक्षस्तथोदरम् १४१
तद्वन्मेढ्रं समुद्दिष्टं पञ्चविंशाङ्गुलं ततः
ऊरुमानं तथा जङ्घा शेषं पूर्ववदाचरेत् १४२
कन्यसे दशताले तु देवानेवं प्रकल्पयेत्
नवतालोत्तमं चापि तालगण्यमथोच्यते १४३
मूर्ध्नि केशान्तमानं तु चतुरङ्गुलमुच्यते
केशान्तादक्षिसूत्रान्तं तस्माच्चैव पुटान्तकम् १४४
पुटान्ताद्धनुपर्यन्तं प्रत्येकं चतुरङ्गुलम्
अर्धाङ्गुलं गले वृद्धिः कण्ठं सार्धगुणाङ्गुलम् १४५
कण्ठाद्धृद्देशपर्यन्तं तस्मान्नाभ्यन्तमेव च
नाभेर्मेढ्रान्तकं चापि प्रत्येकं द्वादशाङ्गुलम् १४६
ऊरू द्वितालमानेन जानू वेदाङ्गुलौ स्मृतौ
जङ्घा द्वितालमानेन तलौ च चतुरङ्गुलौ १४७
नवतालोत्तमं प्रोक्तं गण्यमानवशाद्धरे
वेदाङ्गुलविहीनं स्यान्नवतालस्य मध्यमम् १४८
नवतालोत्तमात्तस्माद्ध्रासस्थानमथोच्यते
जङ्घायामङ्गुलं प्रोक्तमूरावङ्गुलमेव हि १४९
मेढ्रदेशेऽङ्गुलं चैव वक्त्रे चाप्यङ्गुलं भवेत्
एवं मध्यमतालं स्याद् अधमे नवतालके १५०
हिक्कानाभ्यन्तरे हीनं नेत्राङ्गुलमुदीरितम्

ऊरावेकाङ्गुलं तद्वज्जङ्घायामं प्रकीर्तितम् १५१
नवतालाधमं प्रोक्तमष्टतालमथोच्यते
द्विमात्रं तु शिरो ज्ञेयं मुखमेकादशाङ्गुलम् १५२
कण्ठायामं त्रिमात्रं स्यात् कण्ठाद्धृदयमेव च
हृद्देशान्नाभिपर्यन्तं मुखायामवदिष्यते १५३
नाभेस्तु मेढ्रपर्यन्तं पञ्चङ्गुलमुदीरितम्
एकविंशाङ्गुलं चैवमूर्वोश्चापि प्रकल्पयेत् १५४
जानु त्रिमात्रमुद्दिष्टं जङ्घा चोरुवदुच्यते
त्रिमात्रं स्यात्तलोत्सेधमुक्तं स्याद्वसुतालकम् १५५
मुनितालमथो वक्ष्ये तालगण्याङ्गुलेन तु
उष्णीषमङ्गुलं ज्ञेयं वक्त्रं रुद्राङ्गुलं भवेत् १५६
कण्ठं त्रियङ्गुलं ज्ञेयं कण्ठान्नाभ्यन्तकं ततः
अष्टादशाङ्गुलं सार्धं नाभेर्मेढ्रमतः परम् १५७
सार्धं वस्वङ्गुलं ज्ञेयमूरुश्चैकोनविंशकः
जानू त्रियङ्गुलौ ज्ञेयौ जङ्घा चोरुवदिष्यते १५८
ततः पादतलोत्सेधं जानुवत्परिकल्पयेत्
सप्ततालमिति प्रोक्तं षट्तालमधुनोच्यते १५९
उष्णीषमङ्गुलं ज्ञेयं वक्त्रं रुद्राङ्गुलं भवेत्
कण्ठं च त्र्यङ्गुलं तत्र कण्ठान्मेढ्रान्तमेव च १६०
एकोनविंशदङ्गुल्यमूरुमध्याङ्गुलं भवेत्
सार्धं जानु त्रिमात्रं स्याज्जङ्घा चोरुवदिष्यते १६१
जानुवत्स्यात्तलोत्सेधं षट्तालमिति कीर्तितम्
पञ्चतालमथो वक्ष्ये तालगण्येन भाजिते १६२
उष्णीषमङ्गुलं ज्ञेयं मुखं नन्दाङ्गुलं भवेत्

ग्रीवा तु द्व्यङ्गुलोच्छ्रेया तस्मान्मेढ्रान्तमेव हि  १६३
एकविंशाङ्गुलं ज्ञेयमूरुः स्याद्द्वादशाङ्गुलः
द्व्यङ्गुलं तु भवेज्जानु जङ्घा रुद्राङ्गुलं भवेत्  १६४
द्व्यङ्गुलं तु तलोत्सेधमुक्तं स्यात्पञ्चतालकम्
चतुस्तालमथो वक्ष्ये तत्र लब्धाङ्गुलैः क्रमात्  १६५
अङ्गुलं स्यात्तदुष्णीषं वक्त्रमर्काङ्गुलं भवेत्
कण्ठं द्व्यङ्गुलमानं स्यात् कण्ठात्सप्ताङ्गुलं ततः  १६६
हृदयान्तं समुद्दिष्टं हृदयान्नाभिस्तथैव च
तस्माच्च मेढ्रपर्यन्तं षडङ्गुलमुदीरितम्  १६७
ऊरुः पञ्चाङ्गुलोत्सेधो जानु स्यादङ्गुलद्वयम्
जङ्घा वेदाङ्गुला ज्ञेया तलोत्सेधं तु जानुवत्  १६८
चतुस्तालमिति प्रोक्तं गुणतालमतः शृणु
उष्णीषमङ्गुलं प्रोक्तं वक्त्रमष्टाङ्गुलं भवेत्  १६९
कण्ठं नेत्राङ्गुलं ज्ञेयं कण्ठान्मेढ्रान्तमेव च
मन्वङ्गुलं तु विज्ञेयमूरुर्वेदाङ्गुलो भवेत्  १७०
जानु च द्व्यङ्गुलं ज्ञेयं जङ्घा च त्र्यङ्गुला स्मृता
तलं जानुवदुद्दिष्टमेवमुक्तं त्रितालकम्  १७१
एवं मानं समुद्दिष्टं समासात्तालनिश्चितम्
प्रमाणादन्यमानानि यथायुक्त्या प्रकल्पयेत्  १७२
सर्वेष्वेतेषु तालेषु तैस्तालैरुक्तलक्षणैः
याः क्रियन्ते सुराणां तु प्रतिमा देवसत्तम  १७३
तासां सामान्यतः प्रोक्तं सर्वासां लक्षणं मया
विशेषलक्षणं वक्ष्ये तच्छृणु त्वं जनार्दन  १७४
पूर्वं लिङ्गोद्भवं रूपं सुखासीनं द्वितीयकम्

तृतीयं गौरिसहितमुन्मत्तं स्याच्चतुर्थकम्  १७५
पञ्चमं तु भवेद्रूपं कङ्कालधरमेव च
नृत्तरूपं तु षष्ठं स्यात्त्रिमूर्ति सप्तमं भवेत्  १७६
चक्रप्रसादरूपं स्यादष्टमं नवमः ततः
चन्द्रशेखरमुद्दिष्टं देव्यर्धं दशमं भवेत्  १७७
एवं माहेश्वरं प्रोक्तं रूपाणां दशकं मया
अथ रौद्रं प्रवक्ष्यामि रूपं नानाविधं भवेत्  १७८
प्रथमं दक्षिणामूर्ति द्वितीयं कामनाशनम्
तृतीयं कालनाशं स्याद्वैवाह्यं स्यात्ततः परम्
स्कन्दोमासहितं पश्चात्पञ्चमं परिकीर्तितम्
जलंधरवधं षष्ठं हर्यर्धं सप्तमं भवेत्  १७९
अष्टमं तु वृषारूढं नवमं त्रिपुरान्तकम्
विषसंहरणं पश्चाद्दशमं परिकीर्तितम्  १८०
यद्यद्रूपं भवेत्तत्तत् सर्वं रौद्रांशमेव हि
त्रिविधं तत्समुद्दिष्टं सर्वरूपं जनार्दन  १८१
अचलं च चलं चापि त्रितयं स्याच्चलाचलम्
अचलं मृण्मयं प्रोक्तं शूलस्थापनपूर्वकम्  १८२
चलं लोहमयं प्रोक्तं सिक्थकर्मपुरःसरम्
शिलादारुमयं सर्वं चलाचलमिति स्मृतम्  १८३
मृण्मये लोहजे वापि संस्कारो दारुसिक्थयोः
पूर्वेद्युरेव कर्तव्यस्तद्विधानं तथोच्यते  १८४
असनखदिरचन्दनाः समाराः सुरतरुसप्तदलौ च राजवृक्षः
वकुलपनसवेणुवृक्षा दश कथिताः प्रतिमासु शूलयोग्याः  १८५
जङ्घोरुदण्डौ कटिदण्डयुक्तौ ब्रह्माख्यमन्यं प्रतिमानुरूपम्

वक्षोभवं बाहुभवं प्रकोष्ठं कृत्वोक्तवृक्षैरधिवासयेत्तान् १८६
यत्र यत्प्रतिमारूपं प्रासादे स्थाप्यते हरे
तस्याग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः १८७
पद्ममष्टदलं तत्र कर्णिकाकेसरैर्युतम्
आलिख्य तत्र विन्यस्य शूलं सिक्थमथापि वा १८८
क्षालितं शोषितं चैव सर्वात्महृदयेन तु
पुण्याहं वाचयित्वाथ तस्याग्रे होममाचरेत् १८९
तदर्थं स्थण्डिलं कृत्वा सैकतं विधिवत्ततः
अग्निमाधाय विधिवत्तत्रैव जुहुयात्सुधीः १९०
समिदाज्यचरूणां तु प्रत्येकं तु दशाहुतिः
तत्तद्गायत्रिमन्त्रेण समिद्धोमं समाचरेत् १९१
मूलेनाज्यं ततो हुत्वा हृदा वै होमयेच्चरुम्
द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं स्पृशेद्गुरुः १९२
तत्तन्मूलेन मन्त्रेण पूर्णां हुत्वा समापयेत्
एवं कृत्वाधिवासं तु शूलमुद्धृत्य देशिकः १९३
सुमुहूर्ते सुलग्ने तु स्थापनं शिल्पिना भवेत्
स्थापनात्परमेवान्तः प्रविश्य भवनोदरम् १९४
गर्भे कृत्वा नवपदं चत्वारिंशत्पदोत्तरम्
तेषां ब्रह्मपदं मध्ये भवेदेकं तु बाह्यके १९५
दैविकादिपदान्यष्टौ तद्बाह्ये चापि मानुषम्
पदषोडशकं बाह्ये पैशाचं परितः स्थितम् १९६
तत्रैव मानुषपदे शूलस्य स्थापनं हृदा
रत्नादीनि च विन्यस्य रेणूस्तत्र च लोपयेत् १९७
नालिकेरभवैः कोशकुलैः कृत्वा दृढं यथा

रज्जुं तेनैव तच्छूलमापादतलमस्तकम्  १९८
वेष्टयित्वा मृदा ह्यङ्गं कुर्यात्संस्कृतया ततः
तत्संस्कारः पुरैवोक्तस्ततश्चार्चां शनैः शनैः  १९९
कल्पयेत् कल्पवर्यैस्तु सर्वकर्मसु कोविदैः
तस्य मृत्प्रतिमायाश्चाप्याभासं प्रतिदापयेत्  २००
लक्षणेन समोपेता सर्वा करतलाङ्गुलिः
बेरे शिलामये तत्र वर्णशोभा विधीयते  २०१
तत्रैकं कलशं स्थाप्यं शेषं मृण्मयवद्भवेत्
प्रतिमा लोहजा या स्यात् स्थाप्यामरपदे हि सा  २०२
शैला योग्या तु साम्राज्ये स्थाप्या दिव्यपदेऽपि वा
रत्नलोहशिलाद्यैस्तु व्यक्तलिङ्गप्रकल्पने  २०३
स्त्रीपुंविभागस्तत्रैव नेष्टस्तत्रैव संकरः
अव्यक्तोभययोरिष्टौ लिङ्गयोर्वस्तुसंकरौ  २०४
लोहे तु प्रतिमारूपे कुर्यात्सिक्थमयं पुरा
यदुक्तः प्रतिमाभेदस्तद्विधानमथोच्यते  २०५
लिङ्गमध्यस्थितं देवं त्रिनेत्रं तु चतुर्भुजम्
रक्तवर्णं प्रसन्नास्यं सर्वाभरणभूषितम्  २०६
तटामकुटसंयुक्तं दक्षिणोत्तरयोः क्रमात्
चन्द्रगङ्गासमायुक्तं व्यालधुत्तूरसंयुतम्  २०७
वामदक्षिणयोश्चापि लिङ्गमध्ये प्रकल्पयेत्
अधोनपाद्यथा दृश्यं मौलिरूर्ध्वं तथैव च  २०८
तत्त्रियंशं च दृश्यं स्यादग्रे मूले च कारयेत्
ब्रह्माणं हंसरूपं तु विष्णुं पोत्रिमुखं तथा  २०९
ब्रह्मविष्णू च कर्तव्यौ कृताञ्जलिपुटौ स्थितौ

दक्षिणेतरयोश्चापि लिङ्गस्य विमलं ततः  २१०
सुखासीनं च कर्तव्यमासनं पङ्कजासनम्
कुञ्चितं दक्षिणं पादं वामपादं प्रलम्बितम्  २११
चतुर्भुजं त्रिनेत्रं च सर्वाभरणभूषितम्
शेषं पूर्ववदुद्दिष्टं तस्य पार्श्वेऽथ वामके  २१२
करण्डमकुटोपेतां गौरीं कुर्यादिद्वबाहुकाम्
श्यामवर्णां त्रिनेत्रां च किंचित्प्रस्मितसंयुताम्  २१३
कुञ्चितालम्बितौ तस्याः पादौ दक्षिणवामकौ
वामहस्ततलं पीठे न्यस्य कुन्दं तु दक्षिणे  २१४
कटकामुखमाबध्य करमेकासनस्थिताम्
आसीनं प्रथमं प्रोक्तं द्वितीयमधुनोच्यते  २१५
पूर्ववत्कल्पितस्याङ्के वामे गौरीं प्रकल्पयेत्
देवस्य वामहस्तं तु देव्याश्च मकुटे स्थितम्  २१६
कृत्वा देवस्य चाप्यङ्के देव्याश्च दक्षिणं करम्
देव्यावृत्तं कारयेदुक्तमासीनं च द्वितीयकम्  २१७
संस्थितं च द्विधा कार्यमासीनोक्तप्रकारतः
अङ्कारोपणमध्यस्येदेकासनगतं भवेत्  २१८
शेषं पूर्ववदुद्दिष्टम् उन्मनस्त्वधुनोच्यते
रसश्वेतं प्रसन्नास्यं कुञ्चिताकीर्णमूर्धजम्  २१९
पादुकोपरि विन्यस्तपादयुग्मसरोरुहम्
तयोर्वामेतरं कुर्यात्क्षिप्यमाणसुपादुकम्  २२०
सुस्थितं वामपादेन समभङ्गसमन्वितम्
दक्षिणं हरिणालीढमन्यड्डमरुकं दधत्  २२१
भिक्षापात्रं च पिञ्छं च वामभागे वहत्करे

नागमेखलसंयुक्तं गणनाथेन चैव हि २२२
गायता वहता भिक्षापात्रं वामे तु धाविना
एवं भिक्षाटनं प्रोक्तं कङ्कालमधुनोच्यते २२३
श्वेतवर्णं प्रसन्नास्यं जटामकुटसंयुतम्
नागकङ्कणसंयुक्तं नागमेखलसंयुतम् २२४
दिव्याम्बरधरं देवं पूर्ववत्पादुकाङ्घ्रिकम्
दक्षिणं हरिणालीढं वामे कङ्कालकं तथा २२५
कराभ्यामितराभ्यां च ढक्कावादनतत्परम्
वहता शिरसा भिक्षापात्रमन्येन गायता २२६
छत्रं च वहतान्येन वृषमानयतापि च
गणेनानुगतं देवमनेकेन महौजसा २२७
स्त्रीगणैरनुयातं च बहुभिः काममोहितैः
कङ्कालरूपमुद्दिष्टं नृत्तरूपमथोच्यते २२८
श्वेतवर्णं प्रसन्नास्यं द्विपचर्मकृताम्बरम्
किङ्किणीकृतनागेन्द्रं बकपिच्छधरं तथा २२९
विप्रकीर्णजटाभारमपस्मारोपरि स्थितम्
दक्षिणेन तु पादेन कुञ्चितेनेतरेण तु २३०
बान्वन्तमुद्धृतेनापि पाणयन्तं लम्बितेन च
विराजन्तं चतुर्हस्तमभयं दक्षिणे दधत् २३१
दुन्दुभिं चान्यभागे तु वह्निमेकेन चापरम्
प्रसारितकरं तिर्यग्गीतनृत्तं जनार्दन २३२
भुजङ्गत्रासमित्युक्तं वामे गौरीसमन्वितम्
एकासनस्थया वापि संध्यानृत्तमथोच्यते २३३
दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम्

दक्षिणेऽभयटङ्कौ च पाशनागौ च वामके २३४
दधच्चतुर्भिर्हस्तैश्च जटामकुटसंयुतम्
इदमन्यन्नृत्तरूपं तृतीयमधुनोच्यते २३५
वामं तु कुञ्चितं किञ्चिदपस्मारोपरि स्थितम्
अन्यपादं शिरोदेशे चोर्ध्वे दण्डवदुद्धृतम् २३६
विंशद्धस्तसमोपेतं शूलाद्यायुधसंयुतम्
वीणादिवाद्यसंयुक्तं दण्डपादमिति स्मृतम् २३७
नृत्तरूपं त्रिधा भिन्नं भवेदेवं जनार्दन
मूर्तिरूपमिदं वक्ष्ये रक्तवर्णं त्रिनेत्रकम् २३८
वरदाभयहस्तं च कृष्णापरशुसंयुतम्
जटामकुटसंयुक्तमेकपादं सुसंस्थितम् २३९
दक्षिणेतरयोश्चापि पार्श्वयोरुभयोरपि
कटिप्रदेशे चोर्ध्वे तु ब्रह्मविष्णवर्धकाययुक् २४०
स्त्रीमानवत्तयोर्मानं ब्रह्मविष्णवोस्तु कल्पयेत्
कृताञ्जलिपुटावेतौ सर्वलक्षणलक्षितौ २४१
अथवा तौ पृथक्संस्थौ सर्वावयवसंयुतौ
देवस्य पार्श्वयोः कुर्यादेतद्विष्टरमास्थितौ २४२
मूर्तिरूपमिदं प्रोक्तं चक्रदानमथोच्यते
गौरीसमन्वितं देवं कृत्वा तस्यैव दक्षिणे २४३
विष्णुरूपं च कृत्वाथ कृताञ्जलिपुटं स्थितम्
तस्य हस्ते ददच्चक्रं रूपं तच्चक्रदं भवेत् २४४
चक्रप्रसादमुद्दिष्टं चन्द्रशेखरमुच्यते
त्रिनेत्रं चतुर्भुजं चैव जटामकुटसंयुतम् २४५
चन्द्रावयवलक्ष्माणं गौरीयुक्तमृजु स्थितम्

कृष्णापरशुसंयुक्तं वरदाभयहस्तकम् २४६
चन्द्रशेखरमुद्दिष्टं देव्यर्धमधुनोच्यते
दक्षिणेतरयो रूपं शिवयोः परिकल्पयेत् २४७
दक्षिणे तु द्विहस्तं स्याद्वामे चैककरेण तु
अभयं परशुं दक्षे वामे स्यात्कटकामुखम् २४८
किंचिद्भङ्गसमायुक्तं ललाटे चार्धनेत्रयुक्
करण्डमकुटोपेतं देवीदेवेशयोर्भवेत् २४९
दक्षिणे रक्तवर्णं तु वामे श्यामनिभं भवेत्
भूषणै रुचिरैर्युक्तमुभयोरपि पार्श्वयोः २५०
उरोदेशे च देव्यंशे घनस्तनसुसंयुतम्
पृष्ठे वृषेन्द्रसंयुक्तं वृषहीनमथापि वा २५१
एवं देव्यर्धमुद्दिष्टं दक्षिणामूर्तिरुच्यते
त्रिनेत्रं चतुर्भुजं चैव किञ्चित्कुञ्चितमूर्धजम् २५२
वामोरूपरिविन्यस्तदक्षिणाङ्घ्रिं सितद्युतिम्
लम्बितं वामपादं स्याद्दक्षिणेतरयोरपि २५३
संदंशमक्षमालां च वरदं चानलं तथा
दधत्कराग्रैर्मुनिभिर्नानागोत्रैः सुसंयुतम् २५४
दक्षिणामूर्तिरूपं तु प्रोच्यतेऽन्यज्जनार्दन
लम्बितं दक्षिणं पादं वामपादं प्रकुञ्चितम् २५५
तस्य जानूपरिन्यस्तवामहस्तप्रकोष्ठकम्
शेषं पूर्ववदुद्दिष्टं कामारेरिदमेव हि २५६
रूपमग्रे स्थितं कामं दहन्नेत्रोत्थवह्निना
कामारिरूपमुद्दिष्टं कालनाशनमुच्यते २५७
त्रिनेत्रं चतुर्भुजं चैव जटामकुटसंयुतम्

दक्षिणे शूलटङ्कौ च सूच्यास्यं पाशमेव च  २५८
वामे वहत्पुरः कालं पातयञ्च पदेन तु
देव्या च सहितं रौद्रं सर्वलक्षणलक्षयया  २५९
कालनाशनरूपं स्याद् वैवाह्यमधुनोच्यते
त्रिनेत्रं चतुर्भुजं रक्तं जटामकुटमण्डितम्  २६०
कृष्णापरशुसंयुक्तं वरदं वामपार्श्वके
दक्षिणेनाद्यहस्तेन दक्षिणस्थामुमां वधूम्  २६१
श्यामवर्णां द्विनेत्रां च करण्डमकुटान्विताम्
कटकामुखहस्तां तु वामतो दक्षिणे करे  २६२
गृहीत्वा क्रममाणं च कृत्वा तस्यैव वामतः
शङ्खचक्रधरं रूपं कुर्याद्विष्णोश्चतुर्भुजम्  २६३
लाजपात्रकरं वापि भृङ्गारकरमेव वा
ब्रह्माणमग्रतो देवं चतुर्वक्त्रं चतुर्भुजम्  २६४
अक्षमालां स्रुवं पार्श्वे दक्षिणे तु तथोत्तरे
कमण्डलुं जलं चैव वहन्तं देववामके  २६५
आसीनं हेमवर्णाभं प्रसन्नं कारयेत्ततः
लक्ष्मीमुमानुगां कुर्यात्तां पृष्ठे श्लिष्य संस्थिताम्  २६६
अग्रे हविर्भुजं चापि ज्वालारूपं प्रकल्पयेत्
एकासनगतान्सर्वानेवमेवं प्रकल्पयेत्  २६७
एवं वैवाह्यरूपं स्यात् स्कन्दोमासहितं शृणु
उमारुद्रात्मके रूपे सुखासीने प्रकल्पयेत्  २६८
कृष्णापरशुहस्तं च वरदाभयदं तथा
कुञ्चितालम्बिते पादे वामदक्षिणयोः क्रमात्  २६९
देव्या रूपं च कर्तव्यं दक्षिणे कटकामुखम्

वामं पीठोपरि न्यस्तं हस्तयोः परिकल्पयेत् २७०
पादयोर्लम्बितं वामं दक्षिणं स्यात्प्रकुञ्चितम्
तयोर्मध्ये गुहं कुर्याद्देवोत्सेधाष्टभागिके २७१
एकभागं तदुत्सेधं सार्धैनैकेन वा भवेत्
द्विनेत्रं चतुर्भुजं रक्तं बालरूपमनिन्दितम् २७२
स्कन्दोमासहितं प्रोक्तं जलंधरवधं शृणु
विकीर्णमूर्ध्वजं शान्तं दक्षिणेतरयोः क्रमात् २७३
अनलमक्षसूत्रं च वहन्तमपरेण तु
दक्षिणेन तु तर्जन्या दर्शयन्तं जलंधरम् २७४
वामजानुनि वामं च बाहुं न्यस्योत्कुटासनम्
पर्यङ्कबन्धसंयुक्तं सोमं सोमविभूषणम् २७५
अग्रे जलंधरं क्रुद्धं चक्रेण विनिपातितम्
कुर्याद्देवमिदं रूपं हर्यर्धमधुनोच्यते २७६
दक्षिणेतरयोश्चापि रुद्रनारायणात्मकम्
रक्तं कृष्णं तथा रूपमेकशङ्खवहं तथा २७७
अभयं वरदं चैव ललाटे चोर्ध्वलोचनम्
दक्षिणे मूर्ध्नि चन्द्रं च वामोरसि च कौस्तुभम् २७८
हर्यर्धमिति निर्दिष्टं वृषारूढमिहोच्यते
चतुर्भुजं त्रिनेत्रं च जटामकुटसंयुतम् २७९
कृष्णापरशुसंयुक्तं वरदाभयपाणिनम्
सोमं वृषाश्रितं चापि कुर्याद्वै वृषवाहनम् २८०
अथवा द्विभुजं कुर्याज्जटामकुटसंयुतम्
कूर्परं दक्षिणं चैव वृषमूर्ध्नि निवेशितम् २८१
अन्यं कट्याश्रितं हस्तं पादयोर्दक्षिणाङ्घ्रिकम्

वामाङ्घ्रेरुपरि न्यस्तं किंचिद्भङ्गसमन्वितम् २८२
वृषवाहं द्विधा प्रोक्तं त्रिपुरान्तकमुच्यते
जटामकुटसंयुक्तं कृष्णापरशुसंयुतम् २८३
धनुर्बाणसमायुक्तं किंचिद्भङ्गसमन्वितम्
पार्वत्या च समोपेतं द्विभुजं वा प्रकल्पयेत् २८४
वामदक्षिणयोश्चापि शरं चापधरं दधत्
रथस्य नाभ्यां कुर्वीत सगुहं सविनायकम् २८५
त्रिपुरघ्नं समुद्दिष्टं विषसंहरणं शृणु
पार्वत्या सहितं चैव सुखासीनं वरासने २८६
कृष्णापरशुसंयुक्तमभयं च दधत्करैः
दक्षिणे गरलं चान्ये सर्वदेवनमस्कृतम् २८७
कुर्याद्रूपमिदं सौम्यं विषसंहरणात्मकम्
माहेश्वरं तथा रौद्रं रूपाणां विंशकं क्रमात् २८८
प्रोक्तमेवमयो वक्ष्ये रूपं वै वैष्णवादिकम्
किरीटमकुतोपेतं श्यामवर्णं द्विनेत्रकम् २८९
शङ्खचक्रधरं चैव श्रीवत्साङ्कितवक्षसम्
दण्डाभयधरं देवं पीताम्बरसमन्वितम् २९०
श्रीभूमिसहितं चैव सुखासीनं स्थितं तु वा
शयानं वापि तद्रूपं कल्पयेत्कल्पवित्तमः २९१
नृसिंहरूपं वा कुर्याच्छङ्खचक्रधरं तथा
कुक्कुटासनमासीनमात्तपर्यङ्कबन्धनम् २९२
जानुद्वयोपरिन्यस्तकूर्परद्वयमुज्ज्वलम्
सुसितं सगणं चैव कारयेत्पीठलोचनम् २९३
ब्राह्मं चतुर्भुजं रूपं जटामकुटसंयुतम्

चतुर्वक्त्रं प्रसन्नास्यं सर्वाभरणभूषितम् २९४
बद्धगण्डातकं चैव प्रोद्भिन्ननवयौवनम्
पीनोन्नतकुचं चारु विशालजघनस्थलम् २९५
शूलं पाशं पताकं च कटकामुखमेव च
दक्षिणेतरयोश्चैव हस्तयोः परिकल्पयेत् २९६
आसीनं संस्थितं चापि पङ्कजासनमध्यमे
अथवान्यप्रकारेण तदीयं रूपमुच्यते २९७
एकवक्त्रं प्रसन्नास्यं करण्डमकुटान्वितम्
द्विनेत्रं द्विभुजं चैव श्यामपीतनिभं तथा २९८
तदीयं दक्षिणं हस्तं कटकामुखमुच्यते
वामपाणितलं चापि कारयेद्विष्टराश्रितम् २९९
कुञ्चितं वामपादं तु दक्षिणं स्याद्विलम्बितम्
अथ वामोरुविन्यस्तमस्य वामकरं स्थितम् ३००
पूर्ववद्दक्षिणं हस्तं सर्वाभरणभूषितम्
एवं शक्तिद्विरूपं स्याद् वैनायकमतः शृणु ३०१
त्रिनेत्रं गजवक्त्रं च करण्डमकुटान्वितम्
टङ्कपाशधरं चापि दन्तलड्डुकधारि च ३०२
एकदन्तं प्रलम्बोष्ठं नागयज्ञोपवीतधृक्
रक्ताम्बरं रक्तनिभमासीनं संस्थितं तु वा ३०३
नृत्तं वापि प्रकर्तव्यं स्कन्दरूपमतः शृणु
षण्मुखं द्वादशकरं द्वादशाक्षं तथैव च ३०४
मयूरवाहनं चैव दक्षिणे त्वभयं तथा
शरं खड्गं च शक्तिं च वज्रं दण्डं वहत्करैः ३०५
इतरैः वरचापौ च चर्म पाशं तथाङ्कुशम्

त्रिशूलं च वहद्धस्तैरथवापि चतुर्भुजम्  ३०६
वरदाभयहस्तं च वज्रशक्तिधरं तथा
एकवक्त्रं प्रसन्नास्यं रक्तवर्णं त्रिनेत्रकम्  ३०७
आसीनं संस्थितं वापि करण्डमकुटान्वितम्
द्विभुजं वापि कर्तव्यं मुण्डं दण्डधरं तथा  ३०८
वामहस्तं तु तस्यैव वामकट्याश्रितं भवेत्
स्कन्दरूपं त्रिधा प्रोक्तं सौररूपं सनातनम्  ३०९
प्रभामण्डलसंयुक्तं द्विनेत्रं च द्विबाहुकम्
रक्तरूपधरं रक्तवाससा च समन्वितम्  ३१०
पद्मोषरि स्थितं पद्महस्तमार्जवसंस्थितम्
दौर्गं रूपं त्रिनेत्रं च करण्डमकुटान्वितम्  ३११
अष्टहस्तं तथा श्यामं पीनोन्नतपयोधरम्
दक्षिणेऽभयवज्रं च खड्गचक्रं वहत्करैः  ३१२
शारिकाशङ्खचर्माणि धनुश्चापि तथेतरैः
माहिषे शिरसि न्यस्तचरणारुणपङ्कजम्  ३१३
बद्धचण्डातकं चैव किंचिद्भङ्गसमन्वितम्
एवं दौर्गं समुद्दिष्टं क्षेत्रेशस्य त्रिलोचनम्  ३१४
नग्नमष्टभुजं चैव किङ्किणीमालया युतम्
उन्मुखं पातकं चैव दधन्मूर्ध्नि भयंकरम्  ३१५
दंष्ट्राकरालवदनमूर्ध्वकेशं घनद्युति
दक्षिणे शूलखड्गं च पाशं डमरुकं वहत्  ३१६
वामे कपालमस्त्रं तु घण्टां चापं च कार्मुकम्
ऋज्वायतं स्थितं रूपं नू पुरेण समन्वितम्  ३१७
चतुर्भुजं वा कुर्वीत शूलं डमरुकं वहत्

दक्षिणेऽन्ये कपालं च पाशं चापि सुरार्चितम्  ३१८
चण्डेशस्याथ रूपं तु चतुर्हस्तं त्रिनेत्रकम्
विकीर्णमूर्धजं शूलं पाशं चापि वहत्करैः  ३१९
कृताञ्जलिपुटं कुर्यादासीनं संस्थितं तु वा
अथवा द्विभुजं कुर्याद्द्विनेत्रं च कृताञ्जलिम्  ३२०
कूर्परे कृतटङ्कं वा स्थितमासीनमेव वा
अथवा दक्षिणे हस्ते गृहीत्वा टङ्कमुद्यतम्  ३२१
वामजानूपरिन्यस्तवामहस्तं वरासने
आसीनं चण्डरूपं तु कुर्याद्वापि यथेच्छया  ३२२
चण्डरूपमिति प्रोक्तं मोटया रूपं द्विलोचनम्
बिम्बांशुकं प्रसन्नास्यं लम्बिताङ्घ्रिद्वयं भवेत्  ३२३
दक्षिणे कटकाहस्तं वाममप्यासनाश्रितम्
ज्येष्ठारूपं तथा कार्यं दक्षिणेतरपार्श्वयोः  ३२४
पुंस्त्रीरूपकमन्यत्स्यात्पुंरूपं वृषवक्त्रधृक्
काकध्वजसमोपेतमथ शास्तुः सुयौवनम्  ३२५
श्यामवर्णं द्विनेत्रं च द्विबाहुं कीर्णमूर्धजम्
दक्षिणे दण्डभृद्धस्ते वामहस्तं प्रलम्बितम्  ३२६
आसीनं संस्थितं वापि कारयेदथ दिक्पतीन्
इन्द्रं श्यामं यमं कृष्णं वरुणं स्फटिकप्रभम्  ३२७
हेमवर्णं कुबेरं च रक्तं धूम्रं च कृष्णकम्
श्वेतं च क्रमशो वह्निं निर्ऋतिं वायुमीशकम्  ३२८
द्विनेत्रा द्विभुजाः सर्वे निजायुधसमन्विताः
इन्द्रः किरीटसंयुक्तो वह्निरूर्ध्वज्वलच्छिखः  ३२९
जटामकुटसंयुक्त ईशानः स्यात्त्रिलोचनः

करण्डमकुटोपेता अन्ये सर्वे प्रकीर्तिताः ३३०
एवं दिक्पालरूपं स्याद् मातृरूपमतः शृणु
ब्राह्मी ब्रह्मवदुद्दिष्टा माहेशी च महेशवत् ३३१
कौमारी गुहवज्ज्ञेया वैष्णवी विष्णुरूपिणी
वाराही पोत्रिवक्त्रा स्यादिन्द्राणी चेन्द्रवद्भवेत् ३३२
सर्वाः प्रसन्नवदनाः पीनोन्नतपयोधराः
चामुण्डा तु प्रकर्तव्या त्रिनेत्रा च चतुर्भुजा ३३३
बद्धचण्डातका चैव भ्रुकुटीकुटिलानना
स्तनद्वयोपरिक्रान्तफणीन्द्रफणभीषणा ३३४
घण्टानू पुरसंयुक्ता विकीर्णोर्ध्वशिरोरुहा
पुंमुण्डं फणिराजं च ललाटोर्ध्वे तु बिभ्रती ३३५
त्रिशूलं पदपार्श्वे तु दक्षिणे च तथोत्तरे
कपालपाशसंयुक्तं दधती भीमविक्रमा ३३६
अष्टहस्तापि वा सा स्याच्छूलखड्गौ च दुन्दुभिम्
क्षुरिकां दधती सव्यैः करैरन्यैः कपालयुक् ३३७
घण्टां च सर्पपाशं च सर्वलोकभयंकरी
वीरभद्रो गणेशश्च कीर्णकुञ्चितमूर्धजः ३३८
चतुर्भुजस्त्रिनेत्रश्च कृष्णापरशुसंयुतः
सुखासीनस्तु कर्तव्यो वीरासनयुतस्तु वा ३३९
मातरस्तु सुखासीनाः सर्वास्ताः परिकीर्तिताः
तासां तु कुञ्चितं पादं वामं सव्यं तु लम्बितम् ३४०
सगणानां तु मातृणां रूपमेवमुदाहृतम्
त्रिनेत्राश्चतुर्भुजाः सर्वे रुद्राः परशुना मृगम् ३४१
सारवन्तश्च कर्तव्या जटामकुटसंयुताः

आदित्याश्च प्रकर्तव्याः सर्वे मार्ताण्डरूपिणः ३४२
द्विभुजा वसवः सर्वे खड्गचर्मधरास्तथा
करण्डमकुटोपेता नेत्रद्वयसमन्विताः ३४३
त्रिनेत्राश्चतुर्भुजाश्चैव वरदाभयपाणयः
शूलाक्षमालाहस्ताश्च विद्येशाश्च प्रकीर्तिताः ३४४
भवादिदेवताश्चाष्टौ त्रिनेत्राश्च चतुर्भुजाः
शूलपाशधराः सर्वे वरदाभयपाणयः ३४५
द्वारे नन्दिमहाकालौ द्विभुजौ च चतुष्करौ
कर्तव्यौ दण्डहस्तौ च प्रत्यालीढेन संस्थितौ ३४६
दंष्ट्राकरालवदनौ भ्रुकुटीकुटिलाननौ
तर्जयन्तौ द्विषः क्रुद्धौ त्रिनेत्रौ लोकभीतिदौ ३४७
शैलादिस्तु प्रकर्तव्यस्त्रिनेत्रश्च चतुर्भुजः
जटामकुटसंयुक्तः शूलाभयकरान्वितः ३४८
वामे दण्डाक्षमालाभ्यामलंकृतकरस्तथा
दंष्ट्राकरालवदनो हरिवक्त्रोऽथवा भवेत् ३४९
श्रीरूपं तु प्रकर्तव्यं पङ्कजासनसंस्थितम्
करण्डमकुटोपेतं पद्मोद्भासिकरद्वयम् ३५०
पीतवर्णं विशालाक्षं पीनोन्नतपयोधरम्
सारस्वतमतो रूपं चतुर्हस्तं त्रिलोचनम् ३५१
व्याख्यानमक्षमालां च पुस्तकं च कमण्डलुम्
दक्षिणेतरयोश्चापि दधच्छ्वेताब्जमध्यगम् ३५२
सुस्थितं द्विभुजं चापि द्विनेत्रं तत्प्रकल्पयेत्
यज्ञोपवीतसंयुक्तं कुम्भयोनिं च कारयेत् ३५३
जटामकुटसंयुक्तं लम्बश्मश्रुद्विबाहुकम्

संदंशकुण्डिकाहस्तं बृहत्कुक्षिं च वामनम् ३५४
वीणाहस्तं च कुर्वीत नारदं मुनिसत्तमम्
अष्टादशगणांश्चैव द्विभुजांश्च द्विनेत्रकान् ३५५
सर्वेषां मकुटं कुर्याद् द्वादशाङ्गुलमायतम्
भृङ्गीशं तु त्रिहस्तं च त्रिपादं च त्रिलोचनम् ३५६
त्वगस्थिशेषदेहं च नृत्यन्तं संप्रकल्पयेत्
अन्यान्गणेश्वरांश्चापि वामनाञ्जटिलान्बहून् ३५७
भीषणान्सुप्रसन्नांश्च ह्रस्वग्रीवान्महोदरान्
महाकायान्महानासान्महाकर्णांस्तथापरान् ३५८
सिंहास्यान्द्विपवक्त्रांश्च नानावर्णाकृतींस्तथा
कारयेत्प्रतिमारूपं सर्वं स्यादुपवीतधृत् ३५९
शिवाख्ये परशुं कुर्यादङ्गव्यक्तिं तु सर्वतः
पुरोभागगतामेव परभागे तु वर्जिताम् ३६०
ये सारूप्यं नराः प्राप्तास्ते प्रोक्ता रुद्रकिंकराः
तेषां तु रूपं कर्तव्यं मदीयं चिह्नमाश्रितम् ३६१
ये भक्तास्तु नरा लोके विशिष्टगुणसंयुताः
तेषां रूपं प्रकर्तव्यं नृत्यद्वायच्च वा पुनः ३६२
प्रणमद्वा यथाकामं लोकेऽस्मिन्सुरपुङ्गव
वृषस्य लक्षणं चापि समासाच्छृणु सांप्रतम् ३६३
द्वारमानेन वा कुर्याद्द्वारोत्सेधनवांशके
एकांशेनाधमाद्यन्तं सर्वैश्चाप्युत्तमोत्तमम् ३६४
मध्ये सप्त प्रमाणानि कल्पयेत्कल्पवित्तमः
द्वारात्पादाधिकं मानमर्धाधिकमथापि वा ३६५
पादोनद्विगुणं वाथ द्विगुणं वा प्रकल्पयेत्

लाङ्गूलमूलात्तन्मानं मस्तकान्तं प्रकल्पयेत् ३६६
तिरश्चां तिर्यङ्मानं स्यादश्वादीनां च कल्पयेत्
खुरादि मूर्धपर्यन्तमुच्छ्रायं च तथा भवेत् ३६७
द्व्यङ्गुलं लोचनं प्रोक्तं विस्तारं तु तदर्धकम्
तदर्धादुदयं कार्यं मुखं स्यात्षोडशाङ्गुलम् ३६८
पादहीना तु नासा स्याच्छृङ्गयोश्चतुरङ्गुलम्
मूलं स्याच्च तयोर्मध्यमष्टाङ्गुलमुदीरितम् ३६९
शृङ्गोच्छ्रयो द्विनेत्रं स्यादक्षिकर्णान्तरं तथा
त्र्यङ्गुलं तु खुरं तस्य जङ्घास्य तु शरास्तथा ३७०
कपालचक्रमानं स्यादधोरुः षट्कला भवेत्
तस्याथ पुरजाङ्घोरुमभि मानं तथैव च ३७१
वालं स्यादङ्घ्रिमूलान्तं तद्विस्तारं युगाङ्गुलम्
एकाङ्गुलप्रविस्तारं तस्याग्रे तु प्रकल्पयेत् ३७२
तन्मूलं नेत्रविस्तारं शेषं युक्त्या प्रकल्पयेत्
लोहे स्थितं शयानं वा वृषेन्द्रं परिकल्पयेत् ३७३
शैलं च मार्तिकं रूपं शयानं परिकल्पयेत्
गले घण्टासमायुक्तं सकुशं वा प्रकल्पयेत् ३७४
वृषस्य लक्षणं प्रोक्तमायादिविधिरुच्यते
आयो व्ययस्तथा योनिर्नक्षत्रं वारमंशकः ३७५
षडेते कल्पनीयास्तु सर्ववस्तुषु देशिकैः
आयो द्रव्यायतिः प्रोक्तो व्ययो द्रव्यव्ययो भवेत् ३७६
योनिर्ध्वजश्च धूमश्च सिंहकुक्कुरकास्तथा
वृषभः खरनागौ च काकश्चाथ प्रकीर्तितः ३७७
अश्विन्यादि च नक्षत्रं वारः सूर्यादिरुच्यते

अंशकोऽयं भवेच्चोरो भुक्तिशक्तिधनं नृपः ३७८
क्लीबोऽभयं विपच्चान्ते ऋद्धिरित्यभिधीयते
त्रिविधं यत्तु लिङ्गं तु मेयं मानाङ्गुलेन तु ३७९
शिबिकारथखट्वादि सर्वं तालेन मीयते
प्रासादमण्टपादीनि हस्तमानेन चैव हि ३८०
गृहीतवस्तुनो माने त्वङ्गुल्यादिविभाजिते
वर्धिते वसुभिस्तस्मिन् गृहीतमिष्टमायतम् ३८१
नवभिर्वर्धिते तस्मिन् हृते दिग्भिर्व्ययं भवेत्
गुणेन वर्धिते भूयो वसुभिर्विहृते सति ३८२
योनिः शिष्ट इति प्रोक्तो वसुभिर्वर्धिते पुनः
भगणेन हृते तस्मिञ्शिष्टमश्वादिभं भवेत् ३८३
नवभिर्गुणिते चाथ मुनिभिर्विहृते सति
शिष्टं वारमिति प्रोक्तं भूयो वेदैश्च वर्धिते ३८४
नवभिर्विहृते शिष्टमंशकं तस्करादिकम्
आयाधिकं भवेद्ग्राह्यमग्राह्यं स्याद्व्ययाधिकम् ३८५
योनिषु ध्वजसिंहेभवृषाः प्रोक्ताः शुभावहाः
नक्षत्रेष्वथ चैतांस्तु विपत्प्रत्यरनैधनान् ३८६
तथा चन्द्राष्टमर्क्षं च वैनाशिकमतः परम्
नृपग्रामादि नक्षत्राद्वर्जयेत्तान्प्रयत्नतः ३८७
वारेषु गुरुशुक्रज्ञचन्द्राः शुभकराः स्मृताः
अंशकेष्वथ भुक्तिश्च नृपशक्तिधनं तथा ३८८
अभयं च तथा ऋद्धिः षडेते शोभनाः स्मृताः
अर्धोत्तरं शुभं ग्राह्यमग्राह्यमशुभोत्तरम् ३८९
एवं परीक्ष्य लिङ्गादीन्कल्पयेत्कल्पवित्तमः ३९०

इत्याजिताख्ये महातन्त्रे क्रियापादे प्रतिमालक्षणविधिः षट्त्रिंशः पटलः

## सप्तत्रिंशः पटलः

लक्षणं मण्टपानां तु वक्ष्ये तच्छृणु सांप्रतम्
हस्तत्रितयमारभ्य करैरोजोयुतैः क्रमात् १
भवन्ति मण्टपास्त्वेकत्रिंशद्धस्तमितास्तु ते
एकोनत्रिंशत्संख्यातास्तेषां लक्षणमुच्यते २
चतुरश्राः समाः सर्वे मण्टपाः परिकीर्तिताः
स्तम्भोत्सेधमथो वक्ष्ये हस्तेन प्रमितं क्रमात् ३
सार्धद्विहस्तमारभ्य त्रित्र्यङ्गुलविवर्धनात्
नवहस्तान्तकं यावत्तावत्स्तम्भाः प्रमाणतः ४
त्रयःपञ्चाशदित्युक्ता मण्टपानां विशेषतः
स्तम्भोत्सेधे तु वस्वंशे नन्दांशे वा दशांशके ५
व्योमांशं तस्य विष्कम्भं मण्टपेषु प्रकल्पयेत्
भित्तिपादगतं तारं तदर्धं वा त्रिपादतः ६
स्तम्भानामाकृतिः प्रोक्ता पूर्वं प्रासादलक्षणे
स्तम्भायाममिति प्रोक्तं पङ्क्तिमानमथ शृणु
सपादहस्तमारभ्य षट्षडङ्गुलवर्धनात्
शरहस्तान्तमुक्तानि पङ्क्तिमानानि षोडश ८
अथवा स्तम्भमानेन कर्तव्यं पङ्क्तिविस्तृतम्
पङ्क्तिपादसमायोगं यथायुक्त्या प्रकल्पयेत्
एकपङ्क्त्या चतुष्पादः श्रीकराख्यश्च मण्टपः
पङ्क्तित्रयाद्विकाराङ्घ्रिः श्रीभद्र इति कीर्तितः १०

आयामं तु भवेद्धीन स्वस्वस्तम्भचतुष्टयात्
श्रीविशाल इति प्रोक्तः पञ्चपङ्क्तियुतस्ततः ११
षट्त्रिंशत्पादसंयुक्तः पूर्ववल्लब्धपादकः
तद्बहिश्चार्कपादैस्तु संयुक्तस्तद्बहिः पुनः १२
विंशत्पादपरीतश्च श्रीभोग इति कीर्तितः
सप्तपङ्क्तिसमायुक्तश्चतुष्षष्ट्यङ्घ्रिसंयुतः १३
पूर्ववद्धीनपादश्च श्रीकूट इति कीर्तितः
नवपङ्क्तिसमायुक्तः शतपादसमन्वितः १४
पूर्ववत्क्लृप्तपादश्च तद्बाह्येऽर्कपदान्वितः
चत्वारिंशत्पदैर्बाह्ये साष्टभिश्च विसर्जितः १५
तद्बाह्येऽथ च षट्त्रिंशद्गात्रैर्युक्तः समन्ततः
अथवा मध्यमे त्यक्त्वा वेदपादांस्तु तद्बहिः १६
रविपादयुतो बाह्ये हीनविंशत्पदोऽपि यः
सर्वतोमुख इत्युक्तो मण्टपोऽयं जनार्दन १७
मुखायाममथो वक्ष्ये मण्टपानां क्रमोदितम्
विस्तारद्विगुणायामो यावद्भवति मण्टपः १८
पङ्क्त्यावृतिस्तु तावत्स्याद्वृद्धिरेकैकधा क्रमात्
मुखायामे पदानां तु लोपं युपत्या प्रकल्पयेत् १९
स्तम्भविष्कम्भमानस्य त्रिगुणं भित्तिविस्तरम्
सार्धं च द्विगुणं वापि सार्धत्रिगुणमेव वा २०
भित्तिस्तम्भस्य निष्क्रान्तिश्चतुरश्रस्य तत्ततः
चतुर्भागैकभागं स्याद्वृत्ततारेऽर्धतो भवेत् २१
मण्टपस्याभितो वारं पङ्क्त्या वा संप्रकल्पयेत्
वारपादोच्छ्रयं मूलपादार्धं संप्रकल्पयेत् २२

त्रिपादतो वा कुर्वीत स्तम्भाकारं तु मूलवत्
मराटपस्य चतुर्दिन्नु निर्गमं संप्रकल्पयेत् २३
अथवा त्रिषु देशेषु द्वयोर्वैकत्र वा भवेत्
एकपङ्क्तिविनिष्क्रान्तमायामेन त्रिपङ्क्तिम् २४
अथवा तद्भवेत्तत्र विस्तारायामतः समम्
हस्तिहस्तद्वयोपेतं सोपानं तत्र कल्पयेत् २५
पार्श्वयोरग्रतो वापि तेजःसंख्यासमायुतम्
सोपानं निर्गमाद्वाह्ये कर्तव्यं वा सलन्नणम् २६
मराटपानां तु सर्वेषामधिष्ठानमथोच्यते
पादोत्सेधार्धमानं तत्पञ्चांशं द्व्यंशकं तु वा २७
तत्तत्र्यंशैकभागं वाप्यधिष्ठानोच्छ्रयं भवेत्
सोपपीठं तु वा कुर्यात्केवलं वोपपीठकम् २८
सपादबोधिकां कुर्यात्तस्या लन्नणमुच्यते
पादमूलसमं तस्या विस्तारं परिकीर्तितम् २९
पञ्चदराडं चतुर्दराडं त्रिदराडं वापि दैर्घ्यकम्
विस्तारार्धं समांशं वा भवेत्तस्याः समुच्छ्रयम् ३०
बोधिकालन्नणं प्रोक्तमथ प्रस्तरमुच्यते
पादार्धं तत्त्रिभागं वा प्रस्तरस्योच्छ्रयं भवेत् ३१
प्रस्तरस्यांशक्लृप्तिं च पूर्ववत्परिकल्पयेत्
एवं प्रस्तरमानं स्यादन्तर्मानं ततः शृणु ३२
उत्तरोत्सेधमुद्दिष्टं दराडं वा पादहीनकम्
दराडार्धं वाथ कर्तव्यं तत्तुर्यांशं तु वाजनम् ३३
वाजनाद्द्विगुणं वाथ त्रिगुणं वा चतुर्गुणम्
तुलाविस्तारमुद्दिष्टं तुल्यं तद्धनमुच्यते ३४

पादहीनं घनं प्रोक्तमर्धहीनमथापि वा
तस्मादर्धत्रिपादं वा जयन्त्यास्तारमुच्यते ३५
तदर्धमनुमार्गं स्यात्तदूर्ध्वे चेष्टकादिभिः
छादयित्वा तदूर्ध्वे तु छत्राकारं घनं ततः ३६
देवाग्रे मण्टपं सर्वं सान्तरालं प्रकल्पयेत्
एकद्वित्रिचतुः पङ्क्तिमानेष्वपि च कारयेत् ३७
मण्टपेन समं तारं पङ्क्तिहीनमथापि वा
द्वित्रिदण्डाधिकं वापि चतुर्दण्डाधिकं तु वा ३८
ऄन्तरालस्य मानं स्यात्प्रवेशं वा द्विदण्डकम्
देवाग्रे मण्टपं सर्वं मसूरेणाङ्घ्रिभिस्तथा ३९
प्रस्तरेण च तुल्यं तु प्रासादेन प्रकल्पयेत्
ऄन्यत्र मण्टपानां तु चतसृष्वपि चेष्यते ४०
मुखं दिक्षु यथायुक्त्या निर्गमेण समन्वितम्
सर्वशोभासमायुक्तं सर्वलक्षणलक्षितम् ४१
कारयेन्मण्टपं सर्वं शिलादार्विष्टकामयम्

इत्यजिताख्ये महातन्त्रे क्रियापादे मण्टपलक्षणविधिः सप्तत्रिंशः पटलः

## ऄष्टत्रिंशः पटलः

## प्राकारलक्षणविधिः

प्राकारलक्षणं वक्ष्ये तच्छृणु त्वं समाहितः
प्रासादस्य तु विस्तारं मानं दण्डं प्रकल्पयेत् १
त्रैविध्यं तस्य दण्डस्य वक्ष्यते क्रमशोऽधुना
उपानान्मानतः श्रेष्ठं कैरवान्मध्यमं स्मृतम् २

पादान्तादधमं चैव तेषु चेष्टं प्रगृह्य च
तन्मानेनैव सालांस्तु कल्पयेत्कल्पवित्तमः ३
अन्तर्मण्डलकं पूर्वमन्तर्हारं द्वितीयकम्
मध्यहारं तृतीयं तु तुर्यं मर्यादिभित्तिकम् ४
महामर्यादिभित्तिं च पञ्चमं परिकल्पयेत्
अन्तर्मण्डलकं यत्तद्धवेद्दण्डार्धसंमितम् ५
अन्तर्हारं तु दण्डेन द्विदण्डेन तृतीयकम्
चतुर्दण्डप्रमाणेन कुर्यान्मर्यादि भित्तिकम् ६
महामर्यादिभित्तिं च सप्तदण्डप्रमाणतः
कल्पयेदथवा हस्तैर्देशिकः सालपञ्चकम् ७
हस्तसप्तमितं कुर्यादन्तर्मण्डलसंज्ञितम्
वसुहस्तमितं बाह्येऽप्यन्तर्हारं तु कल्पयेत् ८
दशत्रिमध्यहारं तु ततो मर्यादिभित्तिकम्
विकारहस्तैः कुर्वीत विंशद्धस्तैरतः परम् ९
महामर्यादिभित्तिं तु प्रोक्तं प्राकारपञ्चकम् ।
आद्यं सालाङ्गणान्तं ततिगतमथवा वह्निबाणाब्धिनन्दै
रुद्रैर्हस्तैः क्रमोच्चैः परिमितमधमाद्याद्यमानं विधेयम् ।
प्रत्येकं हस्तवृद्ध्या नवकमिह भवेदुत्तमाद्युक्तमानं
चत्वारिंशत्प्रमाणं भवति तदितरेष्वेषु पञ्चाधिकं च १०
अन्तर्मण्डलगं मानमुपानात्परिकल्पयेत्
तद्वहिश्चापि सर्वत्र मानसूत्राद्वहिर्बहिः ११
कल्पयेदुक्तमानानि चतुः पञ्च यथाक्रमम्
एवमाधिक्यसालं तु न्यूनं वक्ष्ये यथाक्रमम् १२
तन्न्यूनमग्निसालं तु तस्मान्न्यूनं द्विसालकम्

एकसालान्वितं हर्म्यमाभासं तु विधीयते १३
प्रासादस्य तु रक्षार्थं शोभार्थं च प्रकल्पयेत्
अन्तर्मण्डलमानं वा त्रिपादं वा तदर्धकम् १४
प्राकाराणां तु सर्वेषामुत्तरे वा विशालता
अग्निनेत्राम्बरैस्तत्र हस्तैर्वा स्याद्विशालता १५
मुखायामं ततः प्रोक्तं पादाधिकसमन्वितम्
अर्धाधिकं वा कुर्वीत त्रिपादेनाधिकं तु वा १६
द्विगुणं त्रिगुणं वापि चतुर्गुणमथापि वा
मुखायाममिति प्रोक्तं प्राकाराणां जनार्दन १७
मानसूत्राद्बहिर्भित्तिरन्तर्वापि प्रकल्पयेत्
भित्तिमध्यगतं वाथ मानसूत्रं प्रकल्पयेत् १८
भित्तिविस्तारमन्त्ये तु गायत्र्यङ्गुलमुच्यते
द्वित्र्यङ्गुलविवृद्ध्याथ बाह्यसालान्यथाक्रमम् १९
कारयेच्चतुरश्चापि तेषामुत्सेधमुच्यते
प्रासादसमतुङ्गं स्यात्पादाधिकमथापि वा २०
अर्धाधिकंवा कुर्वीत क्षुद्रधामसु सालकम्
अन्येष्वपि च पादान्तं प्रस्तरान्तमथापि वा २१
ग्रीवान्तं वापि कुर्वीत शिखरोच्छ्रायकं तु वा
षट्सप्ताष्टकरोत्तुङ्गमथवा सालमुच्यते २२
कूटपञ्जरशालाभिर्युक्तं तोरणसंयुतम्
सर्वाङ्गाङ्घ्रिसमायुक्तं सर्वशोभासमन्वितम् २३
ऊर्ध्वे वृषेन्द्रसंयुक्तं नानाचित्रसमायुतम्
कारयेत्केवलं वाथ मालिकाकारमेव वा २४
भित्त्यन्तं मालिकायास्तु पङ्क्तिकात्रयमुत्तमम्

द्वितयं मध्यमं प्रोक्तमेकं कन्यसमुच्यते २५
पङ्क्तिपादमसूराणां कल्पनं पूर्ववद्भवेत्
द्वितलैकतलं वापि मालिकान्तं प्रकल्पयेत् २६
जलमार्गविहीनं वा शालाकारं प्रकल्पयेत्
एकसालविधौ हित्वा प्रथमं पञ्चमं तथा २७
अन्येषु त्रिषु कुर्वीत सालस्थानोपपत्तितः
वेदिकाद्यं तु सालानां कल्पयेत्तु यथेच्छया २८
सालकल्पनमुद्दिष्टं प्रासादानां समन्ततः
अन्तर्मण्डलके द्वारमेकं मुखगतं भवेत् २९
सालेष्वन्येषु सर्वेषु चतुर्द्वारं विधीयते
उभयोर्वाथ कुर्वीत द्वारं तु मुखपृष्ठयोः ३०
गोपुरं स्यात्प्रतिद्वारं केवलं द्वारमेव वा
गोपुरं तेषु कर्तव्यमुक्तलक्षणसंयुतम् ३१
महामर्यादिभित्तौ तु महागोपुरमिष्यते
तस्य विस्तारमानं स्यात्तिथिहस्तेन चोत्तमम् ३२
त्रयोदशकरैर्मध्यमधमं रुद्रहस्तकैः
मर्यादिभित्तिविस्तारमधमं नवहस्तकम् ३३
मध्यमं रुद्रहस्तं तु श्रेष्ठं तत्र त्रयोदशैः
गोपुरं मध्यहारे च रुद्रहस्तेन चोत्तमम् ३४
मध्यमं नवहस्तं स्यादधमं सप्तहस्तकम्
अन्तर्हारेऽपि तच्छ्रेष्ठं नवहस्तैस्तु विस्तृतम् ३५
मध्यमं सप्तहस्तैः स्यादधमं पञ्चहस्तकैः
अन्तर्मण्डलके वापि द्वारगोपुरविस्तरम् ३६
मुनिहस्तकृतं श्रेष्ठं पञ्चहस्तं तु मध्यमम्

अधमं गुणहस्तं स्यात्तेषामुत्सेधमुच्यते ३७
प्रासादस्य समं वापि शिखरान्तमथापि वा
अथवा तस्य विस्तारादध्यर्धं तुङ्गमुच्यते ३८
पादोनद्विगुणं वापि द्विगुणं वा विशेषतः
तेषु पञ्चममाद्यं च गोपुराकारमुच्यते ३९
शेषेषु हर्म्यवद्वापि कुर्याच्छोभासमन्वितम्
द्वारोत्सेधमथो वक्ष्ये गोपुराणां विशेषतः ४०
उपानादुत्तरान्तं तु तदर्धं तस्य विस्तरम्
अथवा नवतालं स्यात्कन्यसं द्वारमुच्यते ४१
मध्यमं दशतालं स्याद्रुद्रतालमथोत्तमम्
उत्सेधात्पादहीनं तु द्वारविस्तारमुच्यते ४२
एवं प्राकारमुद्दिष्टं प्राकाराश्रितमुच्यते
आग्नेय्यां पचनस्थानं चतुःशालासमन्वितम् ४३
शक्रपावकयोर्मध्ये व्यञ्जनालयमुच्यते
याम्यपावकयोर्मध्ये स्नानाम्भःस्थानमुच्यते ४४
याम्यनैर्ऋतयोर्मध्ये पुष्पशाला प्रकीर्तिता
रक्षोवरुणयोर्मध्ये पुष्पशालाथवा भवेत् ४५
नैर्ऋते धनधान्यानां स्थानं तु परिकल्पयेत्
रक्षोवरुणयोर्मध्ये धर्मश्रवणमण्टपम् ४६
मरुद्वरुणयोर्मध्ये विद्यास्थानं प्रकीर्तितम्
वायव्ये शस्त्रशाला स्याद्वस्त्रशालासमन्वितम् ४७
वायुचन्द्रमसोर्मध्ये शयनस्थानमिष्यते
सोमशंकरयोर्मध्ये छत्रादीनां निवेशनम् ४८
ऐशान्यां दिशि कुर्वीत यागमण्टपमुत्तमम्

कूपस्थानं च तत्रान्तरङ्कणे परिकीर्तितम् ४६
ईशानशक्रयोर्मध्ये धान्यस्थानं विधीयते
उक्तान्येतानि सर्वाणि स्थानानि च सुरोत्तम ५०
अन्तर्मण्डलकं हित्वा महामर्यादिभित्तिकम्
मध्यस्थेषु प्रयुञ्जीत त्रिषु भित्तिसमाश्रितम् ५१
सर्वेषां व्यक्तलिङ्गानां स्थानं सालसमाश्रितम्
कारयेत्परितो धीमान् मूलप्रासादसंमुखम् ५२
भित्तिं हित्वाङ्गणे वापि कारयेद्देशिकोत्तमः ५३
इत्यजिताख्ये महातन्त्रे क्रियापादे प्राकारलक्षणविधिरष्टत्रिंशः पटलः

एकोनचत्वारिंशः पटलः

परिवारालयविधिः

परिवारालयं वक्ष्ये तच्छृणु त्वं समाहितः
प्रासादानां तु तत्प्रोक्तं प्राकारेषु समन्ततः १
अन्तर्मण्डलके पूर्वं परिवाराष्टकं भवेत्
अन्तर्हाराग्रतः कुर्याद्द्विरष्टपरिवारकम् २
मध्यहारे प्रयुञ्जीत द्वात्रिंशत्परिवारकम्
तेषां भित्त्याश्रितं वाथ मध्यमे वा प्रकल्पयेत् ३
परिवारालयं सर्वं तन्मानमधुनोच्यते
मूलप्रासादगर्भे तु शरभागविभाजिते ४
व्योमभागाधिकं धाम नेत्रभागाधिकं तु वा
कुर्याद्वै परिवाराणां हीनं तद्वदथापि वा ५
तत्समं च प्रमाणानां पञ्चकं परिकीर्तितम्

मूलधाममुखं तेषां द्वारं च परिकल्पयेत् ६
लक्षणं प्रतिमादीनां पूर्ववत्परिकीर्तितम्
अग्रे वृषालयं कुर्यान्मण्टपप्रान्तसंस्थितम् ७
आग्नेय्यां ब्रह्मणः कुर्याद्याम्ये मातृगणस्य तु
विनायकस्य नैर्ऋत्यां प्राग्द्वारं तत्प्रकल्पयेत् ८
वारुण्यां स्कन्दधामस्याज्ज्येष्ठाया वायुगोचरे
कौशिक्याश्चोत्तरे तत्र विष्णोर्वापि प्रकल्पयेत् ९
मूलधामवदस्यापि द्वारं च परिकल्पयेत्
ऐशान्यां तु रवेः कुर्यात्पश्चिमद्वारमेव हि १०
चण्डेशालयमव्यक्तं मण्डले तु प्रकल्पयेत्
ऐशान्यां दक्षिणद्वारं मुखमण्टपसंयुतम् ११
वृषालयं चतुर्द्वारं मण्टपाकारमुच्यते
ब्रह्मणश्चतुरश्रं तु मातॄणां गोपुराकृतिः १२
विस्तारद्विगुणं तस्य चायामं परिकल्पयेत्
हस्तिपृष्ठं गणेशस्य निवेशः स्याद्गुहस्य तु १३
ज्येष्ठाया नागरं चापि दुर्गायाश्च तथा भवेत्
विष्णोर्द्राविडमित्युक्तमर्कस्यापि विधानवत् १४
परिवारालयं सर्वं कुर्यादेकतलान्वितम्
एवमालयमुद्दिष्टमधुना पीठमुच्यते १५
अन्तर्मण्डलमध्ये तु भित्त्याश्रितमथापि वा
बलिपीठं प्रकर्तव्यं कौशिकाङ्गुलसंमितम् १६
अधमं द्विगुणं मध्यं त्रिगुणं चोत्तमं भवेत्
वेदाश्रमथवा वृत्तं सर्वपीठं प्रकल्पयेत् १७
विस्तारसमतुङ्गं स्यात्त्रिपादं चार्धमेव वा

त्रिमेखलं तु कुर्वीत द्विमेखलमथापि वा १८
एकमेखलया युक्तमूर्ध्वे पद्मसमन्वितम्
पद्मपीठं तु कुर्वीत पद्माकारं सकर्णिकम् १९
मातृणां नवपीठं स्याज्ज्येष्ठायाः पीठकत्रयम्
अन्येषामेवमेकं स्याच्चण्डेशस्य तथैव हि २०
बेरं संत्यज्य पीठं स्यादेकं चण्डेश्वरं विना
अष्टकं परिवाराणामुद्दिष्टमथ षोडशम् २१
पश्चिमद्वारहर्म्ये तु वृषस्थाने गुहो भवेत्
गुहस्थाने वृषश्चापि शेषं पूर्ववदेव हि २२
द्वितीयं परिवाराणां षोडशं कथ्यतेऽधुना
प्रागादिषु यथास्थानं लोकपालान्प्रकल्पयेत् २३
अर्कचन्द्रमसोः स्थानं शक्रदक्षिणवामयोः
नारदागस्त्ययोश्चापि कीनाशस्य तथा भवेत् २४
श्रियं सरस्वतीं चापि वरुणस्य तथैव हि
व्यासवागीशयोः स्थानं कुबेरस्य तथा भवेत् २५
एवं षोडशकं प्रोक्तं परिवारद्वितीयकम्
द्वात्रिंशत्परिवारं तु तृतीयमधुनोच्यते २६
धरो ध्रुवश्च सोमश्चाप्यापश्चैवानिलोऽनलः
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ दिगाश्रिताः २७
गगनः स्पर्शनो वायुरनिलो मारुतस्तथा
प्राणः प्राणेशजीवेशौ मरुतोऽष्टौ प्रकीर्तिताः २८
वसूनामन्तरालेषु प्रागादिषु च संस्थिताः
अनन्तो वासुकिश्चैव तक्षः कार्कोटकस्तथा २९
गुलिकः शङ्खपालश्च महापद्मश्च पद्मकः

एते चाष्टौ महानागा मरुतां दक्षिणे स्थिताः ३०
एतेषामूर्ध्वकायं तु कल्पयेत्पुरुषाकृतिम्
कृकट्यां तु शिरःपार्श्वे फणेन परिमण्डितम् ३१
सर्पाकारमधःकायं सर्वेषां परिकल्पयेत्
विकृतो विवृतास्यश्च पवनो गणपावनः ३२
प्रमथो मथकारिश्च मारुतश्च महेन्द्रकः
एते तु प्रमथाश्चाष्टौ मरुतां वामपार्श्वगाः ३३
अन्तर्हारगतं कुर्यादैशान्यां क्षेत्रपालकम्
बेराभावे तु पीठस्थं स्थापयेत्स्थापकोत्तमः ३४
उक्तस्थाने यदि द्वारं सर्वं तस्य प्रयोजयेत्
परिवारत्रयेऽप्यस्मिन्यदिष्टं तत्प्रकल्पयेत् ३५
द्वयं वापि त्रयं वाथ यथास्थानोपपत्तिकम्
परिवारबलिं तत्र चाग्रादारभ्य दापयेत् ३६
प्रदक्षिणक्रमेणैव गन्धपुष्पादिभिर्युतम्
स्वनाममन्त्रसंयुक्तं बलिं दद्याद्विशेषतः ३७
निर्माल्यलङ्घने दोषो सोमसूत्रे न विद्यते
सव्यापसव्यमार्गं चेद्राजराष्ट्रं विनश्यति ३८
तस्मात्सर्वप्रयत्नेन सव्यमार्गे बलिं क्षिपेत्
सालमण्टपयुक्तं चेदन्तस्थं परिवारकम् ३९
बाह्ये पीठं तु संस्थाप्य तद्देवानां बलिं क्षिपेत्
मण्टपावृतदेवानां पूर्ववद्बलिमाचरेत् ४०
महापीठद्वयं कुर्याद्बाह्याभ्यन्तरयोरपि
गोपुरस्याग्रसंस्थस्य चाभ्यन्तरस्य चावधौ ४१
गुणहस्तादि तत्स्थानमथवा तिथिहस्तकम्

महापीठस्य निर्दिष्टं तल्लक्षणमथोच्यते ४२
तालत्रयं समारभ्य षट्षडङ्गुलवृद्धितः
मुनितालान्तकं यावन्मानानि परिकल्पयेत् ४३
तेषु चैकेन मानेन गृहीत्वा तेन कारयेत्
विस्तारसममुत्सेधं पीठस्य परिकल्पयेत् ४४
विकारभागे तत्तुङ्गे व्योमांशं पादुकं भवेत्
वेदांशं जगतीं कुर्यात्कैरवं वह्निभागतः ४५
व्योमांशं पट्टिका तत्र गलं वह्न्यंशकं भवेत्
तदूर्ध्वे पट्टिकां कुर्याद्भागेनैकेन बुद्धिमान् ४६
नेत्रांशं स्यान्महापट्टी शिवांशं चोर्ध्वपट्टिका
तदूर्ध्वे कमलं कुर्यात्तत्तारार्धसमुन्नतम् ४७
तत्त्र्यंशकैकभागेन तदूर्ध्वे कर्णिका भवेत्
द्व्यंशेन तद्दलं प्रोक्तमेवं पीठं प्रकल्पयेत् ४८
पीठकोणेषु कुर्वीत वृषेन्द्रांश्चतुरः समान्
अथवान्यप्रकारेण त्रिःसप्तांशे विभाजिते ४९
व्योमांशोपानपद्मे च कण्ठं पद्मं च पट्टिका
पञ्चभागेनोपपीठं शेषं पूर्ववदाचरेत् ५०
महाभूतादियुक्तं तु कुर्यात्कोणचतुष्टये
पीठव्यासाष्टभागैकमुपपीठोच्छ्रयं भवेत् ५१
सोपपीठं तु वा कुर्यात्पीठं सोपानसंयुतम्
बाह्याभ्यन्तरतः पीठविस्तृतं संप्रकल्पयेत् ५२
पीठलक्षणमुद्दिष्टं तयोर्देवानतः शृणु
आद्ये गणेश्वरं विद्धि द्वितीयेऽष्टगणाः स्मृताः ५३
तयोस्तेभ्यो बलिं दद्यान्नित्ये नैमित्तिकेऽपि च

एवं शैलेन कर्तव्यं सुधापक्वेष्टकामयम् ५४

इत्यजिताख्ये महातन्त्रे क्रियापादे
परिवारालयविधिरेकोनचत्वारिंशः पटलः

## चत्वारिंशः पटलः

## प्रतिमास्थापनविधिः

प्रतिमास्थापनं वक्ष्ये तच्छृणु त्वं समाहितः
केवलं सोमकं चैव साम्बिकागुहमेव च १
सब्रह्मकेशवं चैव सोमश्रीविष्णुपद्मजम्
सविष्णवर्धं सगौर्यर्धमिति सप्तप्रकारजम् २
केवलं प्रथमं तेषां वदामि सुरपुङ्गव
केवलं केवलस्यैव शिवस्य स्थापनं भवेत् ३
सर्वेषां स्थापनार्थाय मण्टपं चाधुनोच्यते
प्रासादाग्रेऽथवा तस्य दक्षिणेतरयोस्तु वा ४
शांकरे वापि कुर्वीत सर्वलक्षणसंयुतम्
पञ्चविंशतिहस्तैस्तु दशपञ्चकरैस्तु वा ५
दशहस्तेऽथवा बेरे षोडशैः परिकल्पयेत्
पञ्चहस्ते तु हस्तैस्तु तिथिसंख्यैः क्रमाद्भवेत् ६
षट्त्रिंशत्स्तम्भसंयुक्ते प्रोक्तेऽस्मिन्मण्टपत्रये
वर्जयेद्देशिको धीमान्मध्ये स्तम्भचतुष्टयम् ७
वेद्यर्थमथवान्येषां बेराणां मण्टपं बुधः
उत्तमं रविहस्तं तु मध्यमं सप्तहस्तकम् ८
अधमं पञ्चहस्तं तु षोडशस्तम्भसंयुतम्
कुर्यात्सर्वे च ते प्रोक्ता रवितालसमुछ्र्याः ९

तालमात्रतलोत्सेधद्वितालोत्सेधवेदिका
तत्र कुराडानि पूर्वादि लन्नरोनैव कारयेत् १०
वेदाश्रं योनिखराडेन्दुत्र्यश्राणि च सुवृत्तकम्
षडश्रं पद्मकुराडं च वस्वश्रं च प्रकल्पयेत् ११
ईशानशक्रयोर्मध्ये प्रधानं च सुवृत्तकम्
गोमयेनोपलिप्याथ मराटपं कुराडवेदियुक् १२
ब्राह्मणान्भोजयित्वात्र गोमयेनानुलेपयेत्
पुरायाहं वाचयित्वाथ वास्तुहोमं च कारयेत् १३
स्थापनस्यात्र यत्पूर्वं कर्म तच्चाभिधीयते
नेत्रोन्मीलनवर्जं तु निर्वृत्ते शिल्पिकर्मणि १४
वेदाश्रकुट्टिमे तत्र गोमयेनानुलेपिते
सितपुष्पान्ततोपेते स्थरिडले शालिनिर्मिते १५
पीठं तत्र समादाय प्रोन्नयित्वासिनाम्भसा
विन्यस्याभ्यर्च्य चानन्तमासने तत्र मध्यमे १६
रत्नानि विन्यसेद्धीमान्मध्यादीशान्तदेशके
माणिक्यं विन्यसेन्मध्ये शक्रे मरकतं न्यसेत् १७
वैडूर्यं वह्निदेशे तु नीलं याम्येऽथ नैर्ऋते
मौक्तिकं स्फटिकं वाःपदिशि वायौ च पुष्यकम् १८
वज्रं तु सोमदिग्भागे प्रवालं शांकरे तथा
विन्यस्य नवबीजैस्तु ततस्तत्रोपरि न्यसेत् १९
प्रतिमां स्थाप्य निष्कम्पां संश्लेषं कारयेद्दृढम्
शिल्पिना कर्मदन्नेण नेत्रोन्मीलनमेव च २०
विधिना कारयेत्पश्चात्तद्विधानमथोच्यते
अन्यत्र स्थरिडलं कृत्वा तत्र देशे तु विन्यसेत् २१

ततश्च हेमसूच्या तु शिल्पिना दृष्टिमण्डलम्
वर्तयित्वा ततः कृष्णज्योतिश्चाथ च वर्तयेत् २२
विसृज्य शिल्पिनं पश्चाद्यजमानेन सत्कृतम्
पुण्याहं वाचयित्वाथ बेरशुद्धिपुरःसरम् २३
पञ्चमृत्पञ्चगव्यैस्तु तस्य शुद्धिरुदाहृता
शुद्धिं कृत्वा मधुप्रस्थं घृतप्रस्थं तथैव च २४
पयसश्च ततः प्रस्थं लोहपात्रे विनिक्षिपेत्
सौवर्णकमलं तेषु मध्वादिषु विनिक्षिपेत् २५
स्थण्डिलं शालिभिः कृत्वा साष्टपत्रं सकर्णिकम्
पद्मं तत्र समालिख्य तत्र देवं निवेशयेत् २६
तस्याग्रे स्थण्डिले तत्र मध्वादीनपि विन्यसेत्
बेरमभ्यर्च्य गन्धाद्यैः प्रणवं समुदाहरन् २७
मध्वादींश्चाथ संप्रोक्ष्य हृदयेन कुशाम्भसा
दक्षिणादूर्ध्वगान्तं तु नयनानां क्रमेण वै २८
मधु दुग्धं घृतं चापि मुद्रितं धेनुमुद्रया
हृदयेन प्रदर्श्याथ दूर्वया हैमया ततः २९
सूर्येन्दुवह्निबीजैस्तु क्रमेण परिकल्पयेत्
तानि नेत्रेषु सर्वेषु सुवर्णनखसंयुतैः ३०
तर्जन्यनामिकामध्यानखैः स्पृष्ट्वा तु विन्यसेत्
ततो यवनिकां तत्र व्यपोह्यातोद्यवाद्यकैः ३१
ब्राह्मणांश्च सवत्सां गां गायत्र्या संप्रदर्शयेत्
ततोऽभिषिच्य देवेशं गन्धतोयेन देशिकः ३२
सर्वालंकारसंयुक्तं नीत्वा ग्रामप्रदक्षिणम्
जलतीरे समे स्थाप्य जलैस्तैरभिषिच्य च ३३

पञ्चविंशैः कुशैः कृत्वा कूर्चग्रन्थिं तु मूर्धनि
न्यस्याथ परितः पादालम्बितैस्तु कुशैः सह ३४
बेरं मूर्धादिपादान्तं नववस्त्रेण वेष्टयेत्
पुण्याहं वाचयित्वाथ नद्यादौ तज्जले ततः ३५
नाभिदघ्नेऽथ गायत्र्या फलकायां समाहितः
शाययेद्देशिको धीमान्प्राक्शिरश्चोर्ध्ववक्त्रकम् ३६
ततो दिगस्त्राण्यभ्यर्च्य साधिपानि यथाक्रमम्
षष्टिका नाडिकानां तु तदर्धं वा तदर्धकम् ३७
नीत्वा प्रहरकं वापि तत उत्थाप्य देशिकः
प्रतिमां तां रथे वाथ शिबिकायामथापि वा ३८
साधकैः पुत्रकैर्वापि समारोप्यानयेत्ततः
प्रतिष्ठामण्टपाद्बाह्ये कल्पिते स्नानमण्टपे ३९
वेदिकातुल्यविस्तारे सोमेशानदिगास्थिते
नालावटसमायुक्ते वेदिकोपरि विन्यसेत् ४०
तत्र वस्त्रं सकूर्चं तु व्यपनीय यथापुरम्
यथोक्तशुद्धिपूर्वं तु प्रतिमामभिषेचयेत् ४१
जलाधिवासनं यत्र क्रियते तु विवर्जितम्
शतशः प्रणवेनात्र कम्बुकेनाभिषेचयेत् ४२
ततो मण्टपसंस्कारं कुर्यात्पुण्याहपूर्वकम्
वितानं बन्धयेदूर्ध्वे दिग्ध्वजानष्टदिक्षु च ४३
परितो दर्भमालां च मालापल्लवसंयुताम्
मुक्तादामानि कोणेषु मालां सर्वत्र लम्बयेत् ४४
विन्यसेद्वेदिपर्यन्ते साङ्कुरं चाष्टमङ्गलम्
तोरणं चापि पूर्वादि विन्यसेत्क्षीरवृक्षजम् ४५

वेद्यां भूमिं समभ्यर्च्य विताने चन्द्रमर्चयेत्
वासुकिं दर्भमालायां वज्रादि दिग्ध्वजेषु च ४६
अन्तस्तम्भचतुष्के तु धर्मादीन्परितो यजेत्
आग्नेयादिषु कोणेषु बाह्येषु च रवींस्तथा ४७
स्तम्भेष्वथ समभ्यर्च्य भद्रं च विजयं क्रमात्
विजृम्भं लोहितं चैव तोरणेषु चतुर्ष्वपि ४८
तत्र वेद्यां प्रकर्तव्यं स्थण्डिलं तु मनोहरम्
यवगोधूमशाल्याद्यैरष्टद्रोणैर्वरं भवेत् ४९
तदर्धैर्मध्यमं प्रोक्तं तदर्धैरधमं भवेत्
सुसितैस्तण्डुलैः कृष्णैस्तिलैश्चापि विकीर्य च ५०
पद्ममष्टदलं कृत्वा शयनं तत्र कल्पयेत्
दारुजं चर्मजं चैव रोमजं पक्षजं तथा ५१
उपर्यास्तरणोपेतं शयनं पञ्चधा भवेत्
दारुजं फलकं ज्ञेयं क्षीरवृक्षसमुद्भवम् ५२
चर्मजं शयनं चर्म वैयाघ्रं चैणमेव वा
रोमजं शयनं रोमकम्बलं पक्षिपक्षजम् ५३
चतुर्थं शाल्मलीतूलसंभवं वा प्रकल्पयेत्
उपर्यास्तरणं चापि केवलं सूक्ष्मवाससा ५४
चर्मकम्बलतूलानामभावे वस्त्रमुच्यते
दारुजादिभिरप्येतैरुपर्युपरि कल्पयेत् ५५
कल्पिते शयने तस्मिन्कुशान्पूर्वोत्तराग्रकान्
परिस्तीर्य तिलान्कृष्णाँल्लाजाञ्शुभ्रांश्च देशिकः ५६
विकिरेच्च ततो मध्ये शयनेऽथ मनोन्मनीम्
संपूज्य शाययेत्तत्र प्रतिमां प्रणवेन तु ५७

प्राक्शिरश्चोर्ध्ववक्त्रां तां पूर्ववद्बद्धकूर्चकाम्
प्रच्छादयेत्सुरक्तेन वाससा बद्धकौतुकाम् ५८
सुगन्धं साक्षतं तत्र पुष्पदूर्वासमायुतम्
प्रणवेनैव मन्त्रेण प्रतिमोपरि विन्यसेत् ५९
ततो देवाधिवासार्थं कुम्भान्बिम्बफलप्रभान्
द्रोणार्धतोयसंपूर्णान्सुपक्वान्दोषवर्जितान् ६०
अष्टौ संगृह्य वैद्येशाञ्शैवमेकं तथाविधम्
द्रोणपूर्णं तु संशोध्य प्रक्षाल्य हृदयेन तु ६१
आवेष्ट्य तन्तुना सम्यक् समेन सुसितेन च
नादेयेनाथ कौपेन वारिणा शीतलेन च ६२
चन्दनोशीरजैश्चूर्णैर्लवङ्गत्रुटिसंभवैः
पुष्पैः सगन्धिभिश्चैव वासितेन प्रपूरयेत् ६३
वस्त्रपूतेन गायत्रीं शैवीं सम्यगुदाहरन्
तेषु शैवे क्षिपेत्पञ्चरत्नमन्येषु काञ्चनम् ६४
सर्वेषु कूर्चं विन्यस्य पिधानैस्तु पिधाय च
वस्त्रयुग्मेन शैवाख्यमावेष्ट्यान्यान् पृथक् पृथक् ६५
संवेष्ट्यैकेन वस्त्रेण ततः शैवं तु विन्यसेत्
प्रतिमायाः शिरोभागे दक्षिणे तानपि क्रमात् ६६
पूर्वादिषु च विन्यस्य घटान्विद्येश्वरात्मकान्
चतुर्दिक्षु परिस्तीर्य त्रिंशद्दर्भैः क्रमेण वै ६७
पुण्याहं वाचयित्वा तु प्रोक्षयित्वास्त्रमुच्चरन्
पाद्याद्यैः पूजयेद्देवाञ्छिवादीन्देशिकोत्तमः ६८
सुप्रसन्नमना भूत्वा तद्विधानमिहोच्यते
कृतविद्यातनुर्मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ६९

पाद्यादीन्सम्यगापाद्य प्रोन्नयित्वा शिवाम्भसा
ब्रह्मभिः पञ्चभिः सर्वानभिमन्त्र्य यथाक्रमम् ७०
मुद्रां च दर्शयित्वाथ सुरभिं तेषु वस्तुषु
प्राणवृत्तिनिरोधेन ध्यात्वा देवं यथाविधि ७१
पुष्पैरञ्जलिमापूर्य तस्य मूलं समुच्चरन्
प्रणवादि नमोऽन्तं तु साक्षान्मन्त्रतनुं शिवम् ७२
आवाह्य कुम्भतोये तु प्रधाने मध्यसंस्थिते
आवाहन्या ततश्चापि स्थापन्या स्थापनं भवेत् ७३
संनिधिः संनिधान्या स्यान्निरोधिन्या निरोधनम्
ततो नमस्कृतिं बध्वा दर्शयेच्च तदग्रतः ७४
षडङ्गानि हृदादीनि पावकादिचतुर्ष्वपि
कोणेषु तत्र विन्यस्य तद्दिक्ष्वस्त्रं च देशिकः ७५
मृग्यैव मुद्रया न्यस्य नेत्रमीशानगोचरे
शान्तां मनोरमां चैव मुकुलीं शशकर्णिकाम् ७६
पद्मां च कालकर्ण्याख्यां षडङ्गानां प्रदर्शयेत्
ततः पाद्यादिभिर्देवमर्चयेन्मूलमन्त्रतः ७७
अङ्गैरङ्गानि चाभ्यर्च्य तत्तत्स्थानेषु मन्त्रवित्
विद्येशांश्च क्रमाद्ध्यात्वा कुर्यादावाहनादिकम् ७८
तेषां वज्रादिमुद्राश्च दर्शयेन्मन्त्रवित्तमः
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च धूपकम् ७९
दीपं च क्रमशो दद्यात् सर्वेषां स्वस्वमूलतः
ततो होमः प्रकर्तव्यस्तद्विधानमथोच्यते ८०
तेषु कुण्डेषु सर्वेषु कृत्वा संस्कारमुत्तमम्
अधिदेवान्यजेत्पश्चात्प्रागादिषु यथाक्रमम् ८१

अधिदेवास्त्विति प्रोक्ता विद्येशाश्च समन्ततः
प्रधाने शिव एव स्यादर्चनं स्यात्स्वनामभिः ८२
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
ततश्चाग्निमुखं हुत्वा होमयेद्द्रव्यसंचयम् ८३
समिदाज्यचरूँल्लाजांस्तिलान् सर्षपकान्यवान्
प्लक्षोदुम्बरकाश्वत्थवटवह्निसमुद्भवाः ८४
अपामार्गार्कजाश्चैव खादिराश्च समिद्भवेत्
पालाशी स्यात्प्रधानस्य तत्तत्परिधिसंयुता ८५
यथोक्तालाभे सर्वत्र पलाशोदुम्बरावुभौ
समिद्धोमं तु मूलेन सर्वत्र परिकल्पयेत् ८६
आज्यादीन्यथ शेषाणि चाङ्गैर्हृदयपूर्वकैः
अस्त्रान्तैर्जुहुयान्मन्त्री क्रमेणैव हुताशने ८७
आचार्यो मूर्तिपैः सार्धं समकाले तु होमयेत्
द्रव्यान्ते व्याहृतिं हुत्वा देशिकः प्रतिमां तथा ८८
मूर्धादिपादपर्यन्तं मूलमन्त्रेण संस्पृशेत्
ततः प्रागादिहोतारः स्पृशेयुः क्रमशस्तदा ८९
तथैव षड्भिरङ्गैश्च तत्तदङ्गेषु संस्पृशेत्
सर्वद्रव्यावसानेषु सर्वकुण्डेषु चैव हि ९०
मूर्तीनां कुण्डसंस्थानां प्रत्येकं तु शताहुतिम्
आज्येन हुत्वा सर्वत्र परिषिच्य यथाविधि ९१
विद्येशमूर्तिभेदेन स्थितं पावकमर्चयेत्
होमकाले प्रयुञ्जीत ऋग्यजुःसामाथर्वणैः ९२
वेदैरध्ययनं दिक्षु प्रागादिषु यथाक्रमम्
ऐशान्यां दिशि तत्रैव साधकोऽस्त्रं जपेत्तदा ९३

ततः कुम्भगतानां तु हविर्दत्त्वा यथाक्रमम्
अधिवासनकर्मैवं समाप्य गुरुणा सह ९४
होतारः सर्व एवात्र रात्रिशेषं तु जागरात्
नीत्वा प्रातः समुत्थाय कृतनित्यक्रियास्तु ते ९५
देशिकेन समाविश्य सुमुहूर्ते सुलग्नके
देवानभ्यर्च्य कुम्भस्थान्प्रज्वाल्याग्निं समन्ततः ९६
व्याहृत्यन्तं तु सर्वत्र मूर्तिमन्त्रैर्दशाहुतिम्
हुत्वा सर्वात्मना पश्चात्स्रुचा पूर्णां प्रदापयेत् ९७
परिषिच्य ततो मूर्तिमुद्वास्यानलसंश्रयाम्
परिधीन्विष्टरांश्चापि गृहीत्वाभ्युद्य च क्रमात् ९८
वह्नौ विनिक्षिपेद्धीमांस्तत उत्थाय देशिकः
नववस्त्रोत्तरीयं च नवोष्णीषाम्बरं दधत् ९९
पञ्चाङ्गभूषणोपेतः सपवित्रकरो गुरुः
देवमुत्थापयेद्वेद्याः प्रणवं समुदाहरन् १००
वस्त्रकूर्चादिकं सर्वमपनीय च होतृभिः
तस्मिन्नध्येतृभिश्चैव काले स्वस्त्यादिवाचकैः १०१
सातोद्यवाद्यैरन्यैश्च मङ्गलैस्तु समन्वितैः
मण्टपे स्नानवेद्यां तु बेरं पीठे तु विन्यसेत् १०२
उपविश्योत्तरास्यं तु भद्रपीठे निराकुलः
कृतविद्यातनुर्मन्त्री शोधयेत्प्रतिमां तदा १०३
हरिद्राद्यैस्ततः पञ्चगव्येन हृदयेन च
अभिषिच्य ततः शुद्धिं भसितेन सितेन च १०४
शुद्धोदकेन संस्नाप्य ब्रह्मपञ्चकमुच्चरन्
अभिषिच्य ततो दत्त्वा वक्त्रेणाचमनीयकम् १०५

प्रणवेन शिवस्यार्घ्यं दत्त्वा पुष्पं च मन्त्रवित्
स्थापितं तु ततः कुम्भं प्रधानं देशिकः स्वयम् १०६
उद्धृत्योद्वाहयित्वाथ शेषान्कुम्भांश्च होतृभिः
क्रमेण स्वस्वदिक्संस्थैः कृत्वार्चां च प्रदक्षिणम् १०७
अग्रे तु स्थण्डिले तस्याः स्थापयित्वा यथा पुरा
कृतविद्यातनुर्देवानर्चयित्वा यथाक्रमम् १०८
कुम्भस्थांस्तांस्ततो देवान् ध्यायेद्धृदि समाहितः
प्राणवृत्तिनिरोधेन तमेवाथ घटे जले १०९
मन्त्रं प्राणस्थितिं मत्वा तस्मान्मूलं समुच्चरन्
तत्कुम्भाम्भस्तु कूर्चेन गृहीत्वा प्रतिमाहृदि ११०
स्रावयेत्कर्मणा तेन स देवः स्यात्प्रतिष्ठितः
तत उद्धृत्य तत्कुम्भं वत्सरेणाभिषेचयेत् १११
विद्येशानां तु कुम्भेभ्यः पूर्ववत्परितः क्रमात्
तत्तन्मन्त्रांस्तु विन्यस्य तत्र तैरभिषेचयेत् ११२
ततः सप्रणवं मूलं हृदये विन्यसेत्ततः
अङ्गानि हृदयादीनि हृदयादिषु विन्यसेत् ११३
अस्त्रं हस्ते तु विन्यस्य तारं शिरसि विन्यसेत्
गायत्रीं वक्त्रदेशे तु मातृकाश्च ततो न्यसेत् ११४
अकारं मूर्ध्नि चाकारं ललाटे नेत्रयोस्ततः
इकारं कर्णयोश्चापि ईकारं विन्यसेत्ततः ११५
उकारं गण्डयोर्न्यस्य ऊकारं नासिकापुटे
ओष्ठयोश्च तथा ऋ ॠ दन्तपङ्क्तिद्वयोः पुनः ११६
ऌ ॡ च विन्यसेत्कण्ठे एकारं चांसयोर्द्वयोः
ऐकारं च ततो जत्रुद्वयोरोकारमेव च ११७

औकारं स्तनमध्ये तु अंकारं जठरे तथा
अःकारं मेढ्रदेशे तु कचवर्गौ च पार्श्वयोः ११८
टवर्गं पृष्ठदेशे तु तवर्गं कटिदेशके
ऊर्वोश्च पयवर्गौ च जङ्घयोः शहवर्गकौ ११९
विन्यसेन्मुद्रया मृग्या सर्वाण्येतानि देशिकः
एवं मन्त्रतनुं कृत्वा ततश्चाप्यभिषेचयेत् १२०
गायत्र्या गन्धतोयेन पाद्यमाचमनार्घ्यकम्
गन्धपुष्पं तथा धूपं वस्त्राभरणमेव च १२१
मालां नैवेद्यकं चापि हृन्मन्त्रेण प्रदापयेत्
एवं बेरं प्रतिष्ठाप्य चलं चेदुत्सवं ततः १२२
तेनैव कुर्यात्तद्रात्रौ समारभ्य तु भौवनम्
चलानामचलानां तु तथा चैवोभयात्मनाम् १२३
समाना स्यात्प्रतिष्ठेयं विशेषः कथ्यतेऽधुना
जलाधिवासनं नोक्तं मृण्मये तु कथंचन १२४
शयने चाधिवासश्च शेषं सर्वं समं भवेत्
शूलस्थापनकाले तु रत्नन्यासविधिर्भवेत् १२५
अचलस्यापि शैलस्य विशेषोऽयं निदर्शितः
अधिवास्य प्रभाते तु मन्त्रन्यासविधेः पुरा १२६
रत्नन्यासस्तु कर्तव्यस्ततः स्थापनमाचरेत्
चित्राभासेषु सर्वेषु रत्नन्यासस्तु नो भवेत् १२७
जलाधिवासनं तद्वच्छयनं न तथा भवेत्
अचलेष्वेव कर्तव्यो रत्नन्यासश्चलेष्वपि १२८
कुर्याद्वा सर्वबेरेषु नयनोन्मीलनं भवेत्
मन्त्रन्यासविधौ मन्त्री मृण्मये भित्तिचित्रके १२९

केवलेनैव कूर्चेन मन्त्रन्यासं तु कल्पयेत्
अचले मृगमये बेरे वर्णयुक्ते शिलामये १३०
मन्त्रकर्म जलोपेतं तस्याग्रे परिकल्पिते
पीठे सर्वं प्रयुञ्जीत तालमात्रसमन्विते १३१
प्रभा वा पीठिका वापि यत्र बेरे पृथक्कृता
कृत्वा शुद्धिं तयोः कुर्यात्पञ्चमृत्पञ्चगव्यकैः १३२

इत्यजिताख्ये महातन्त्रे क्रियापादे प्रतिमास्थापनविधिश्चत्वारिंशः पटलः

## एकचत्वारिंशः पटलः

साम्बिकस्थापनविधिः सम्बिकागुहस्थापनविधिश्च

साम्बिकस्याथ देवस्य स्थापनं वक्ष्यतेऽधुना
रत्नन्यासविधिः कार्यो गोमयालेपिते शुभे १
देशे तत्कर्मशालायां कृत्वा वै स्थण्डिलद्वयम्
शालिभिर्विमलैः पद्मं तयोः सम्यक्सुशोभनम् २
देवं देवीं तयोश्चापि प्राङ्मुखं संनिवेश्य च
तत्तदग्रे तयोः पीठं स्थण्डिले विन्यसेत्ततः ३
प्रोक्षयित्वाम्भसा पीठं सर्वात्मानं समुच्चरन्
माणिक्यवज्रवैडूर्यहरितालेन्द्रनीलकान् ४
स्फटिकं मौक्तिकं चैव पुष्यरागं प्रवालकम्
मध्यादीशानपर्यन्तं शक्तिबीजैः क्रमान्न्यसेत् ५
देव्याः पीठे च रत्नानि पञ्च वा विन्यसेत्क्रमात्
शक्तिबीजैस्तु तत्रापि देव्याः पीठे च विन्यसेत् ६
तयोरासनयोः पश्चात् संश्लेषं सुदृढं तथा

कारयेच्छिल्पिना कर्मदक्षेण शुचिना ततः ७
ततश्च देवयोर्मूर्ध्नि कुसुमं संनिवेशयेत्
रत्नन्यासं समाप्यैवं नेत्रोन्मीलनमारभेत् ८
तदर्थं स्थण्डिलं कुर्यादन्यत्रैव यथा पुरा
तत्रापि देवं देवीं च विन्यसेत्स्थण्डिलोपरि ९
ततो वै हैमया सूच्या पद्मरेखां तु शिल्पिना
ज्योतिर्मण्डलमालिख्य कृष्णमण्डलमालिखेत् १०
उन्मील्य च विसर्ज्यैनं शिल्पिनं कृतकृत्यकम्
अन्यत्र देवौ संस्थाप्य पूर्ववत्स्थण्डिले कृते ११
तयोरग्रे मधुप्रस्थं घृतप्रस्थं तथैव च
दुग्धप्रस्थं च संगृह्य लोहपात्रस्थितं शुचि १२
तेषु हैमं विनिक्षिप्य कमलं प्रणवेन तु
सर्वात्मना तु संप्रोक्ष्य न्यस्य च स्थण्डिलोपरि १३
हैमया दूर्वया क्षौद्रं तर्पयेद्दक्षिणाक्षकम्
ऊर्ध्वे च सर्पिषा तद्वद्वामे दुग्धेन चैव हि १४
सूर्याग्निसोमबीजैस्तु तर्पणं सम्यगाचरेत्
हिरण्यनखसंप्रोतां देशिनीं मध्यमां तथा १५
अनामिकां च कृत्वाथ देशिन्या दक्षिणे स्पृशेत्
सूर्यबीजं समुच्चार्य ततो ललाटलोचने १६
अग्निबीजमनुस्मृत्य मध्यानामिकया स्पृशेत्
सोमबीजमनुस्मृत्य ततो देव्याश्च लोचने १७
सोमसूर्यात्मने कुर्यान्मधुना पयसा ततः
अग्निनेत्रं घृतेनैव पूर्ववद्धैमदूर्वया १८
ततस्तिरस्करिण्यास्तु निरासं तत्र कारयेत्

ततो धेनुं ततो विप्रांस्ततः कन्याश्च दर्शयेत् १९
देवदेव्योश्च गायत्रीमुच्चरन्देशिकः सुधीः
पञ्चमृत्पञ्चगव्यैस्तु ततः शुद्धिं समाचरेत् २०
पाशुपतेन चास्त्रेण तयोः शुद्धिरुदाहृता
मालाभरणवस्त्राद्यैः कृत्वालंकारमुत्तमम् २१
प्रदक्षिणं ततश्चापि कुर्याद्ग्रामपुरादिषु
जलाधिवासनं कुर्यान्नद्यादिषु ततः सुधीः २२
जलतीरं ततो नीत्वा प्रतिमे तत्र विन्यसेत्
अभिषिच्य ततस्तोयैः कृत्वा पुण्याहमुत्तमम् २३
देवं देवीं च कूर्चाभ्यां वस्त्राभ्यां चापि वेष्टयेत्
ततः शिरसि चाप्यर्घ्यं प्रणवेनैव विन्यसेत् २४
नाभिदघ्ने जले पश्चात्प्राक्शिरश्चोर्ध्ववक्त्रकम्
शाययेत्प्रतिमे तत्र दिक्पालास्त्रं यथादिशम् २५
अर्चयेदेवमुक्तः स्यादधिवासो जलाश्रितः
कालोऽस्य च पुरा प्रोक्तो मण्टपं चापि पूर्ववत् २६
कल्पयेदथ तत्रैव कोणेष्वपि चतुर्ष्वपि
योन्याकाराणि कुण्डानि तत्र चैव सुसंस्कृते २७
स्नानमण्टपमध्यं तु नीत्वा देवौ च यत्नतः
स्नानवेद्यां तु विन्यस्य शुद्धिं कृत्वा यथाविधि २८
अभिषिच्य ततो देवौ गन्धतोयेन मन्त्रवित्
सर्वात्मना शिवं देवीं गायत्र्या चाभिषेचयेत् २९
हैमैः प्रतिसरं बध्वा हृदयेन तयोस्ततः
कूर्चद्वयेन वस्त्राभ्यां देवं देवीं च वेष्टयेत् ३०
ततः कृत्वा च पुण्याहं कल्पिते शयने शुभे

शाययेत्प्रतिमे सम्यक् सर्वात्मानं समुच्चरन्  ३१
ततो भवानीं रक्तेन वाससा वेष्टयेत्सुधीः
पूर्ववत्कलशानां तु स्थापनं सम्यगाचरेत्  ३२
शक्तिकुम्भं शिरोदेशे देव्याश्चापि प्रकल्पयेत्
वर्धनी शक्तिकुम्भः स्याद्वस्त्रहेमादिसंयुता  ३३
देवं देवीं च गायत्र्या गन्धाद्यैः पूजयेत्ततः
देवं देवीं यथारूपं ध्यात्वा देशिकसत्तमः  ३४
आवाहनादिकं कर्म कुम्भयोः शिवयोर्यजेत्
पूर्ववच्चाथ विद्येशान्कलशेषु समर्चयेत्  ३५
ततो होमं प्रकुर्वीत कुण्डेषु विधिना ततः
पुरुषः पूर्वकुण्डे स्याद्दक्षिणे घोर उच्यते  ३६
पश्चिमे चापि सद्यस्तु वामदेवस्तथोत्तरे
ईशानस्तु प्रधाने स्यान्मूर्तयः पञ्च एव हि  ३७
आग्नेयादिषु कोणेषु चतस्रो मूर्तयः स्मृताः
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च ताः स्मृताः  ३८
दिग्विदिक्षु स्थितास्तास्ता देवदेव्योश्च मूर्तयः
तेष्वग्निं विधिनाधाय शिवहोमस्तु पूर्ववत्  ३९
प्रधानकुण्डे कर्तव्यो देवहोमादनन्तरम्
देव्या होमो विधातव्यो तद्विधानमिहोच्यते  ४०
देवीं तत्र समावाह्य पूजयित्वा यथाविधि
पूर्वोक्तैरखिलैर्द्रव्यैर्देव्यङ्गैर्मूलपूर्वकैः  ४१
तेनैव क्रमयोगेन जुहुयान्मन्त्रवित्तमः
देवहोमे तु देवस्य कुर्यात्तन्मूर्तिपैः सह  ४२
देव्याश्च तद्वद्धोमं तु मूर्तिपैः सह मन्त्रवित्

द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं स्पृशेद्गुरुः ४३
तस्यानन्तरमेवात्र स्पृशेयुः क्रमशोऽधुना
देवहोमस्थिता देवं देवीहोमस्थिताश्च ताम् ४४
मूर्धादिपादपर्यन्तं तन्मूलैः स्पर्श इष्यते
हृदयादिभिरङ्गैस्तु तत्तदङ्गानि संस्पृशेत् ४५
सर्वद्रव्यावसाने तु मूर्तीनां तु दशाहुतीः
प्रतिकुण्डं ततो हुत्वा संपूज्य परिषिच्य च ४६
कुम्भस्थानां तु देवानां दत्त्वा चैव हविः क्रमात्
रात्रिशेषं ततो नीत्वा जागरेण समन्वितः ४७
प्रभाते देशिको धीमान्मूर्तिपैः सह साधकैः
कृतनित्यक्रियो भूत्वा होतृभिश्च समन्वितः ४८
प्रविश्य मण्टपं तत्र सकलीकृतविग्रहः
नवाम्बरधरो भूत्वा नववस्त्रोत्तरीयकः ४९
गन्धचन्दनलिप्ताङ्गः पञ्चाङ्गभूषणैर्युतः
देवान्पूर्ववदभ्यर्च्य सुमुहूर्ते सुलग्नके ५०
देवदेव्योः प्रधाने तु तत्तन्मूलं समुच्चरन्
पूर्णाहुतिं क्रमाद्धुत्वा शेषेष्वष्टसु च क्रमात् ५१
देवकुण्डेषु देवस्य देव्याश्चापि तथा सुधीः
हुत्वा पूर्णाहुतिं पश्चाद्देवमुत्थापयेच्छनैः ५२
सुमुहूर्ते सुलग्ने तु सर्वदोषविवर्जिते
स्नानवेद्यां तु संस्थाप्य प्राङ्मुखौ प्रणवेन तौ ५३
वस्त्रकूर्चादिकं त्यक्त्वा दत्त्वा चार्घ्यं द्वयोरपि
तत्तद्धृदयमन्त्रेण ततः स्नाप्य च मन्त्रवित् ५४
गन्धोदकेन मन्त्रेण देवं संवत्सरात्मना

देवीं गायत्रिया चैव तयोस्तु कलशौ ततः ५५
उद्धृत्य कृत्वा वैद्येशैः प्रासादं तु प्रदक्षिणम्
कलशौ देवदेव्योश्च पुरतस्तान्यथा पुरा ५६
संस्थाप्य देवं देवीं च गन्धाद्यैश्च समर्चयेत्
स्वस्वमूलेन मन्त्रेण ततः कूर्चाम्भसा तयोः ५७
मन्त्रन्यासश्च कर्तव्यो देवदेव्योस्तु पूर्ववत्
ताभ्यां च कलशाभ्यां तौ द्वयोर्गायत्रिमुच्चरन् ५८
अभिषिच्य ततो देवं मन्त्रान्पूर्वोक्तवन्न्यसेत्
देव्याश्च मूलमन्त्रं च विन्यस्याथ च मूर्धनि ५९
तारं विन्यस्य वक्त्रे तु गायत्रीमातृकास्ततः
यथा देवे तथा न्यस्य सर्ववर्मतया सुधीः ६०
मलाभरणवस्त्राद्यैर्गायत्र्या तौ समर्चयेत्
प्रभूतं च हविर्दत्त्वा ततश्चोत्सवमाचरेत् ६१
एवं साम्बिकमुद्दिष्टं साम्बिकागुहमप्यथ
स्थापनं शृणु देवेश तत्रापि च विशेषतः ६२
क्रियाकार्यमशेषं यत्तदिदानीं प्रवक्ष्यते
रत्नन्यासं तु वा कुर्यान्नेत्रोन्मीलनकर्म च ६३
जलाधिवासनं चापि स्कन्दगायत्रिमुच्चरन्
अधिवासादिकर्माणि स्कन्दमूलेन कारयेत् ६४
होमं च स्कन्दमूलाङ्गैः प्रधाने समिदादिभिः
उक्तैर्द्रव्यैस्ततः कुण्डे जुहुयात्पूर्वसंख्यया ६५
मन्त्रन्यासश्च कर्तव्यो गुहे पित्रोरनन्तरम्
स्कन्दमूलेन मन्त्रेण ततोऽङ्गानि च विन्यसेत् ६६
पूजां च स्कन्दगायत्र्या कृत्वा दत्त्वा हविः क्रमात्

ततः सहोत्सवं कुर्यात्सर्वलोकहितावहम् ६७
एवं यः कारयेत्कर्ता सर्वान्कामानवाप्य सः
मोदते रुद्रसामीप्यं लब्ध्वान्ते रुद्रसद्मनि ६८

इत्यजिताख्ये महातन्त्रे क्रियापादे
साम्बिकसाम्बिकागुहस्थापनविधिरेकचत्वारिंशः पटलः

## द्विचत्वारिंशः पटलः
## सब्रह्मकेशवशम्भुस्थापनविधिः

सब्रह्मकेशवं शम्भोः स्थापनं शृणु सांप्रतम्
देवस्य पूर्ववत्कुर्याद्रत्नन्यासं विधानतः १
ब्रह्मणश्च तथा विष्णोः पञ्च रत्नानि विन्यसेत्
पञ्चभूतात्मकैर्धीमान्नेत्रोन्मीलनकर्मणि २
कृते तु शिल्पिना पश्चात्स्थित्वा तु स्थण्डिलोपरे
देवस्य पूर्ववत्कृत्वा ब्रह्मविष्णवोरनन्तरम् ३
तयोश्च विन्यसेन्नेत्रे सूर्यसोमौ यथा पुरा
तर्पणं मधुदुग्धाभ्यां नेत्रयोः परिकल्पयेत् ४
पूर्ववद्बेरशुद्धिं च कुर्यात्तत्र हृदा सुधीः
जलाधिवासनं चापि त्रयाणां परिकल्पयेत् ५
केवलोक्तप्रकारं स्यान्मण्टपं कुण्डवेदियुक्
शयनत्रितयं कुर्याद्दारुजाद्यैः क्रमेण तु ६
जलाधिवासितान्देवानानयेत्स्नानमण्टपम्
स्नानवेद्यां समानीय हित्वा कूर्चाम्बरस्त्रजः ७
गन्धाम्बुनाभिषिच्याथ कृत्वा पुण्याहमेव च
तेषां प्रतिसरं बध्वा तत्तन्मन्त्रमनुस्मरन् ८

कूर्चेन सह संवेष्ट्य वस्त्रैर्देवाननुक्रमात्
अर्घ्यं दत्त्वा ततो मूर्ध्नि तेषां हृदयमुच्चरन् ९
आनीय वेद्यामातोद्यैर्देवघोषैः समायुतः
शाययेन्मध्यमे शम्भुं प्राविशरश्चोर्ध्ववक्त्रकम् १०
ब्रह्माणं दक्षिणे चैव वामे विष्णुं तथैव च
अर्चयित्वा तथा मन्त्रैस्तन्मन्त्रत्रयमुच्चरन् ११
कुम्भावप्यधिपौ तत्र ब्रह्मनारायणात्मकौ
दक्षिणोत्तरयोर्न्यस्य शिवकुम्भस्य देशिकः १२
अभितः कलशानष्टौ वैद्येशान्विन्यसेत्ततः
पूर्वोक्तलक्षणोपेतान्सर्वांस्तान्परिकल्पयेत् १३
ब्रह्मविष्णुमहेशांस्तु कुम्भेषु त्रिषु पूर्ववत्
आवाहनादिकं कृत्वा गन्धपुष्पादिभिः क्रमात् १४
संपूज्य च क्रमात्तांश्च होमयेत्तदनन्तरम्
कृत्वा केवलवद्धोमं देवस्य तदनन्तरम् १५
तत्संख्ययापि होमं च कृत्वा पूर्वोक्तवत्क्रमात्
प्रधानकुण्डे मूलेन ब्रह्मविष्णवोर्यथाक्रमम् १६
अङ्गैरपि तथा षड्भिः कृत्वा स्पर्शाहुतिं तयोः
समाप्येत्थं च कुम्भेषु देवानां च हविः क्रमात् १७
दत्त्वा तु रात्रिशेषं तु नीत्वा प्रातः समाहितः
कृतनित्यो गुरुः सार्धं साधकैरथ होतृभिः १८
नवाम्बरोत्तरीयश्च बद्धपञ्चाङ्गभूषणः
कृतविद्यातनुर्मन्त्री देवान्पूर्ववदर्चयेत् १९
पूर्णाहुतिं त्रिमूर्तीनां मूलमन्त्रैर्यथाक्रमम्
अन्येष्वपि च कुण्डेषु पूर्णा सर्वात्मना भवेत् २०

ततो देवान्समुत्थाप्य स्नानवेद्यां तु विन्यसेत्
ततः कूर्चादिकं त्यक्त्वा तत्तद्धृदयमुच्चरन् २१
शुद्धिं कृत्वाथ देवानामुक्तैर्द्रव्यैर्विशेषतः
गन्धोदकेन संस्नाप्य तत्तद्धृदयमुच्चरन् २२
मन्त्रन्यासं ततः कुर्यात्कुम्भानानीय पूर्वतः
प्रथमं तु शिवे कुर्याद्ब्रह्मविष्णवोरनन्तरम् २३
सर्वेषां हृदि मूलं तदङ्गान्यङ्गेषु विन्यसेत्
क्रमेण कुम्भैस्तान्देवान् स्नापयेद्ब्रह्मपञ्चकैः २४
वैद्येशैश्च ततः कुम्भैर्देवदेवेऽभिषेचयेत्
देवस्य पूर्ववन्मन्त्रान्नयस्याथ ब्रह्मकृष्णयोः २५
मूलमङ्गानि गायत्रीं मातृकाश्चापि पूर्ववत्
विन्यस्य गन्धतोयेन सर्वानप्यभिषेचयेत् २६
वस्त्राभरणमालादींस्तत्तन्मूलेन दापयेत्
प्रभूतं च हविर्दत्त्वा ताम्बूलं च निवेदयेत् २७
सब्रह्मकेशवस्यैवं देवस्य स्थापनं भवेत्
एकत्र रत्नन्यासं तु शयनं चैकमेव हि २८
लिङ्गोद्भवप्रतिष्ठायामपि तद्वद्विधीयते
एवं स्थाप्य सुरेशानं प्रत्यहं सममर्चयेत् २९
सर्वान्कामान्स संप्राप्य गच्छेच्छिवपुरं सुधीः ३०

इत्यजिताख्ये महातन्त्रे क्रियापादे
सब्रह्मकेशवशम्भुस्थापनविधिर्द्विचत्वारिंशः पटलः

## त्रिचत्वारिंशः पटलः

## सोमाश्रीविष्णुपद्मजस्थापनविधिः

अथ वक्ष्ये विशेषेण सोमाश्रीविष्णुपद्मजम्
स्थापनं तु महेशस्य सर्वकामार्थसाधनम् १
रत्नन्यासः प्रकर्तव्यः सर्वेषां कारयेत्पृथक्
शिवयोः पूर्ववत्कुर्यात्तयोर्विष्णुविरिञ्चयोः २
पञ्चरत्नानि मध्यादि विन्यसेदुत्तरान्तकम्
माणिक्यं मुक्ता वैडूर्यमिन्द्रनीलं प्रवालकम् ३
पञ्चरत्नमिति प्रोक्तं मध्यस्थं व्योमबीजकम्
पृथिव्याद्यैस्तु बीजानि प्रागादिषु च विन्यसेत् ४
तथैव स्याच्छ्रियश्चापि नेत्रोन्मीलनमप्यथ
हैमया शिल्पिना सूच्या वर्तयित्वाक्षिमण्डलम् ५
शिवादिसर्वदेवानां स्थितानां स्थण्डिलोपरि
उद्वास्य शिल्पिनं पश्चात्स्थण्डलेऽन्ये निवेश्य तान् ६
शिवयोः पूर्ववत्कृत्वा ततो विष्णुविरिञ्चयोः
श्रियश्चापि न्यसेन्मन्त्री दक्षिणेतरनेत्रयोः ७
सुर्यसोमावजस्यात्र न्यासः प्रतिमुखं स्मृतः
सर्वेषां स्वस्वगायत्र्या मधुना पयसापि च ८
सुवर्णदूर्वया कुर्यात्तर्पणं दृष्टिमण्डले
पृथग्यवनिकापाये सर्वेषां ब्राह्मणांश्च गाम् ९
स्वस्वगायत्रिमन्त्रेण दर्शयेद्देशिकोत्तमः
पञ्चमृत्पञ्चगव्येन सर्वेषां शुद्धिरुच्यते १०
तत्तद्गायत्रिमन्त्रेण सेचयेद्गन्धवारिणा
सहैव पूर्ववत्कुर्याद्ग्रामादीनां प्रदक्षिणम् ११
जलाधिवासनं कुर्यान्नद्यादिषु विशेषतः

तीरे समतले देवान्प्राङ्मुखान्स्थाप्य देशिकः १२
पुण्याहं वाचयित्वादौ तत्तोयैरभिषेचयेत्
प्रणवेन शिरस्यर्घ्यं दत्त्वा देवस्य मन्त्रवित् १३
देवीं च तद्वत्संचिन्त्य तद्वत्कूर्चाम्भसा न्यसेत्
अर्घ्यं देव्याश्च दत्त्वाथ दर्शयेत्तु मनोरमाम् १४
ततो विष्णुं ततः स्थाप्य चक्रमुद्रां प्रदर्शयेत्
लक्ष्मीं चैव तथा स्थाप्य दर्शयेच्छशकर्णिकाम् १५
ब्रह्माणं च तथा स्थाप्य पद्ममुद्रां प्रदर्शयेत्
पावकं च प्रतिष्ठाप्य शक्तिमुद्रां प्रदर्शयेत् १६
एवं देवान्प्रतिष्ठाप्य यथास्वैः कलशैश्च तैः
स्वस्वगायत्रिमुच्चार्य शिवादीनभिषेचयेत् १७
वैद्येशैः स्नाप्य देवेशं ततो मन्त्रान्क्रमान्न्यसेत्
प्रणवं मूर्ध्नि विन्यस्य गायत्रीं वदने न्यसेत् १८
मूलमन्त्रं हृदि न्यस्य चाङ्गान्यङ्गेषु विन्यसेत्
अस्त्रं च दोर्द्वये न्यस्य मातृकाः पूर्ववन्यसेत् १९
एवमेवान्यदेवानां स्वस्वमूलाङ्गमन्त्रयुक्
प्रणवेन च गायत्र्या विन्यसेन्मातृकास्ततः २०
ततोऽभिषिच्य सर्वांस्तान्गन्धचन्दनवारिणा
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च धूपकम् २१
दीपं चैव निवेद्यं च स्वस्वमूलेन मन्त्रवित्
प्रभूतं च हविर्दद्यात् सर्वेषां च यथाक्रमम् २२

इत्यजिताख्ये महातन्त्रे क्रियापादे
सोमाश्रीविष्णुपद्मजस्थापनविधिस्त्रिचत्वारिंशः पटलः

# चतुश्चत्वारिंशः पटलः

## हर्यर्धप्रतिष्ठाविधिः

विष्णवर्धस्य महेशस्य प्रतिष्ठामधुना शृणु
पूर्वोक्तलक्षणोपेतां रुद्रनारायणात्मिकाम् १
प्रतिमां पूर्वमापाद्य गोमयेनोपलेपिते
कुट्टिमे स्थण्डिलं कृत्वा प्राङ्मुखं तु निवेशयेत् २
तत्र पीठं समादाय प्रोक्षयित्वा शिवाम्भसा
रत्नानि नव वा पञ्च विन्यसेत्पूर्ववत्सुधीः ३
देवं तदूर्ध्वे संस्थाप्य सुश्लिष्टं कारयेत्सुधीः
नेत्रोन्मीलनमप्यस्य कुर्यात्तद्विधिरुच्यते ४
शिल्पिकर्मणि निर्वृत्ते नेत्रेषु च यथा पुरा
अन्यत्र स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः ५
तत्र देवं समानीय तस्याग्रे विन्यसेन्मधु
सर्पिषा पयसा चैव पृथक्पात्रस्थितं तथा ६
तेषु हैमं विनिक्षिप्य कमलं स्वर्णदूर्वया
स्थण्डिले स्थाप्य तत्पार्श्वे नेत्रयोर्दक्षिणान्ययोः ७
मधुना पयसा चैव तर्पयेत्सोमसूर्ययोः
मन्त्रमुच्चारयन्मन्त्री ललाटे सर्पिषा ततः ८
वह्निबीजमनुस्मृत्य पूर्ववत्स्वर्णदूर्वया
एवं कृत्वापनीयात्र सद्यो यवनिकां सुधीः ९
गोब्राह्मणांश्च शैवादीन्दर्शयेद्देशिकः स्वयम्
पञ्चमृत्पञ्चगव्यैश्च शुद्धिं कुर्यात्ततो बुधः १०
प्रणवेनैव मन्त्रेण ततः शुद्धोदकेन च
अभिषिच्य ततो नीत्वा ग्रामादौ वा प्रदक्षिणम् ११

ततो जलाधिवासाय जलतीरे निवेशयेत्
प्राङ्मुखां प्रतिमां तत्र कुर्यात्पुरयाहमेव च १२
ततस्तत्तीर्थतोयेन देवं समभिषेचयेत्
कूर्चेन नववस्त्रेण वेष्टयेत्प्रतिमां शनैः १३
प्राक्शिरस्तूर्ध्ववक्त्रं तु शाययेत्पूर्ववत्सुधीः
परितस्तु दिगस्त्राणि साधिपानि समर्चयेत् १४
उक्तं कालं तु तत्रैव नीत्वा तस्माज्जलाशयात्
स्नानमरटपमानीय मध्यमे संनिवेशयेत् १५
प्राङ्मुखां प्रतिमां मन्त्री तत्र वस्त्रादिकं त्यजेत्
ततो गन्धाम्बुना देवमभिषिच्य हरीशयोः १६
गायत्र्याभ्यर्चनं चापि पुरयाहं तत्र कारयेत्
बध्वा प्रतिसरं हैमं सव्यहस्ते हृदा तदा १७
ततश्च कूर्चवस्त्राभ्यां वेष्टयेत्प्रतिमां सुधीः
केवलोक्तप्रकारे तु मरटपे संस्कृते सुधीः १८
मध्यमे वेदिकायास्तु स्थरिडले लक्षणान्विते
शयने पूर्ववत्क्लृप्ते प्रोक्षिते तु शिवाम्भसा १९
शाययेत्प्राक्शिरस्कां तां प्रतिमामूर्ध्ववक्त्रकाम्
ततः पीताम्बरेणापि रक्तेनाप्यथ वेष्टयेत् २०
शिवगायत्रिमुच्चार्य विष्णुगायत्रिमेव च
पूजयेद्गन्धपुष्पाद्यैः कलशान्विन्यसेत्ततः २१
पूर्वोक्तलक्षणोपेतान्हेमरत्नादिसंयुतान्
प्रतिमायाः शिरोभागे रुद्रनारायणात्मकम् २२
कुम्भमेकं न्यसेत्पश्चात्परितोऽष्टौ घटानपि
विद्येश्वरसमायुक्तान्नयस्य पुरयाहमारभेत् २३

ततश्च पूजयेधीमान्देवताध्यानसंयुतम्
आवाहनादिभिर्मन्त्रैर्मूलमन्त्रं समुच्चरन्  २४
प्रधानकुम्भे पश्चात्तु विद्येशानभितो यजेत्
चक्रवर्तीननन्तान्तं ततो होमं समारभेत्  २५
कुण्डानां संस्थितिं तत्र कल्पयेत्केवले यथा
कुण्डेषु मूर्तिद्रव्याणि तद्वदेव प्रकल्पयेत्  २६
प्रधानकुण्डे तद्रूपं रुद्रनारायणात्मकम्
ध्यात्वा संपूज्य गन्धाद्यैस्तत्र होमं प्रकल्पयेत्  २७
ततो मूलेन चाङ्गैश्च पूर्ववद्धोममाचरेत्
द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यमतन्द्रितः  २८
प्रतिमां होतृभिः सार्धं हृदयादिसु संस्पृशेत्
तत्तदङ्गैः क्रमेणैव ततो होमं समाचरेत्  २९
होमकाले प्रयुञ्जीत चतुर्दिक्षु ऋगादिभिः
वेदैरध्ययनं चास्त्रजपमीशानगोचरे  ३०
ततः कुम्भगतानां तु देवानां च यथाविधि
हविर्दत्त्वाधिवासं तं समाप्यैवं पुरोक्तवत्  ३१
प्रभाते होतृभिः सार्धं कृतनित्यक्रियस्तदा
प्रविश्य मण्टपं तत्र कुण्डस्थानर्चयेत्क्रमात्  ३२
कृतविद्यातनुर्मन्त्री ततः पूर्णां स्रुवाहुतिम्
सर्वत्र मूलमुच्चार्य दापयेद्देशिकोत्तमः  ३३
सुमुहूर्ते सुलग्ने तु नक्षत्रकरणान्विते
देवमुत्थाप्य संस्थाप्य स्नानवेद्यां समाहितः  ३४
वस्त्रकूर्चादिकं सर्वमस्त्रमन्त्रेण चोत्सृजेत्
पञ्चगव्येन तां पश्चात्प्रतिमामभिषेचयेत्  ३५

ततः शुद्धोदकेनापि प्रणवेनैव मन्त्रवित्
ततः कुम्भान्समुद्धृत्य कृत्वा धामप्रदक्षिणम् ३६
प्रतिमाग्रे समानीय संस्थाप्य च यथा पुरा
तद्रूपं हृदि कृत्वाथ ततः कुम्भाम्भसि स्थितम् ३७
कृत्वा कूर्चाम्भसा मन्त्री तयोर्मूलमनुस्मरन्
प्रतिमायास्तु हृद्देशे मन्त्ररूपं न्यसेत्सुधीः ३८
कुम्भाम्भसा च संस्नाप्य क्रमेण स्वस्वमन्त्रतः
ततो बेरे न्यसेन्मन्त्री मन्त्रानेताननुक्रमात् ३९
प्रणवं मूर्ध्नि विन्यस्य गायत्रीं वदने न्यसेत्
मूलमन्त्रं हृदि न्यस्य चाङ्गान्यङ्गेषु च क्रमात् ४०
अस्त्रं च दोर्द्वयोर्न्यस्य मातृकाः पूर्ववन्न्यसेत्
ततः शुद्धोदकेनापि प्रणवेनाभिषेचयेत् ४१
मालाभरणवस्त्राद्यैः कृत्वा पूजामनुक्रमात्
प्रभूतं च हविर्दत्त्वा ताम्बूलं च प्रदापयेत् ४२
उत्सवं च ततः कुर्याद्ग्रामादिषु यथाविधि ४३

इत्यजिताख्ये महातन्त्रे क्रियापादे हर्यर्धप्रतिष्ठाविधिश्चतुश्चत्वारिंशः पटलः

## पञ्चचत्वारिंशः पटलः

## अर्धनारीश्वरप्रतिष्ठाविधिः

गौर्यर्धस्य महेशस्य प्रतिष्ठाविधिमप्यथ
शृणु सर्वं समासेन वक्ष्यमाणं महाधुना १
पूर्वोक्तलक्षणोपेतां प्रतिमां काञ्चनादिभिः
विधाय रत्नन्यासं तु पूर्ववत्परिकल्पयेत् २

नयनोन्मीलनं पश्चात्कुर्यात्तद्विधिरुच्यते
शिल्पिकर्मविनिर्मुक्ते तन्नेत्रे च यथा पुरा ३
अन्यत्र स्थण्डिलं कृत्वा विधिवत्तस्य मध्यमे
संस्थाप्य प्राङ्मुखं पश्चात्तस्याग्रे तु घृतं मधु ४
पयश्च पात्रे निक्षिप्य पृथक्पृथगतन्द्रितः
अभ्युक्षणं ततो मन्त्री तर्पयेत्स्वर्णदूर्वया ५
दक्षिणेतरयोरक्ष्णोर्मधु दुग्धमथोर्ध्वके
नेत्रे तु सर्पिर्मन्त्रान्तैः सोमसूर्याग्निपक्षकैः ६
पूर्ववद्ब्राह्मणादींश्च दर्शयेत्प्रणवेन तु
पञ्चमृत्पञ्चगव्यैस्तु कृत्वा शुद्धिं च पूर्ववत् ७
पुण्याहं वाचयित्वात्र नीत्वा ग्रामप्रदक्षिणम्
जलाधिवासनं तत्र कुर्यात्तद्विधिरुच्यते ८
जलतीरे समादाय प्रतिमां प्राङ्मुखां सुधीः
पुण्याहं वाचयित्वाथ तज्जलैरभिषेचयेत् ९
अर्घ्यं तन्मूर्ध्नि विन्यस्य प्रणवं समुदाहरन्
संवेष्ट्य कूर्चवस्त्राभ्यां प्रतिमां हृदयाणुना १०
पूर्ववज्जलमध्ये तु शाययेत्फलकोपरि
तत्रोक्तमपि तं कालं नीत्वा देशिकसत्तमः ११
पूर्वोक्तलक्षणोपेते मण्टपे संस्कृते शुभे
स्नानवेद्यां समानीय प्रतिमां स्थाप्य मन्त्रवित् १२
व्यपोह्य वस्त्रकूर्चं च दत्त्वार्घ्यं प्रणवेन तु
पञ्चगव्यैस्ततोऽर्चां तामभिषिच्य तथा बुधः १३
गन्धतोयेन पश्चात्तु ब्रह्मपञ्चकमुच्चरन्
अभिषिच्य ततश्चापि वेष्टयेन्नववाससा १४

सकूर्चेन शिवाभ्यां तु ततः कृत्वा नमस्कृतिम्
पुरायाहं वाचयित्वाथ बन्धयेत्कौतुकं हृदा १५
देवस्य दक्षिणे हस्ते पूर्ववत्परिकल्पयेत्
शयने शाययेदर्चां पूर्ववद्देशिकोत्तमः १६
ततः कुम्भांश्च तत्रैव स्थापयेच्च यथा पुरा
पूर्वोक्तलक्षणोपेतान् गन्धोदपरिपूरितान् १७
सकूर्चान्हेमवस्त्राढ्यान्पल्लवाढ्यान्मनोरमान्
गौर्यर्धदेवं पूर्वोक्तं ध्यात्वावाह्य यथाविधि १८
स्थापयेन्मध्यमे कुम्भे तन्मूलं समनुस्मरन्
गन्धाद्यैश्च ततोऽभ्यर्च्य विद्येशानष्टदिक्ष्वपि १९
पूर्वादिषु क्रमाद्देवानर्चयेद्देशिकः सुधीः
ततो होमं च कुर्वीत केवलोक्तप्रकारतः २०
प्रधाने शिवयोरङ्गैः समूलैर्होममाचरेत्
शेषकर्म तथा सर्वं केवलोक्तवदाचरेत् २१
प्रभाते विमले पश्चात्कृतनित्यक्रियो गुरुः
मूर्तिपैः होतृभिः सार्धं मराटपं संप्रविश्य च २२
देवान् गन्धादिभिः पूज्य सुमुहूर्ते सुलग्नके
सर्वत्र मूलमन्त्रैस्तैः पूर्णां कृत्वा विचक्षणः २३
ततश्चार्चां समुत्थाप्य सर्वातोद्यसमन्वितम्
स्नानवेद्यां समाधाय वस्त्रकूर्चादिकं हृदा २४
व्यपनीय शिरस्यर्घ्यं दत्त्वा तारं समुच्चरन्
पुरायाहं वाचयित्वाथ कुम्भानुत्थाप्य मन्त्रवित् २५
एवं प्रदक्षिणं कृत्वा देवाग्रे संनिवेश्य च
कृतविद्यातनुर्मन्त्री तद्रूपध्यानपूर्वकम् २६

कुम्भान्तस्थं ततो देवं कूर्चाग्रोद्धृतवारिणा
तन्मन्त्रोच्चारणपूर्वं प्रतिमाहृदि विन्यसेत् २७
अभिषिच्याथ कुम्भेन सर्वात्मानं समुच्चरन्
पाद्याद्यैरर्चयित्वाथ दीपान्तं मूलमुच्चरन् २८
प्रभूतं च हविर्दत्त्वा ताम्बूलं च निवेदयेत्
उत्सवं च ततः कुर्यान्नवस्वेकं विधानतः २९
एवं यः कारयेन्मर्त्यो देव्यर्धस्थापनं परम्
त्रिसप्तकुलसंयुक्तः शिवलोके महीयते ३०
दक्षिणान्ता क्रिया सर्वा सफलत्वमवाप्नुयात्
क्रिया शरीरमित्युक्तं दक्षिणा जीव उच्यते ३१
क्रिया दक्षिणया हीना निर्जीवा निष्फला भवेत्
क्रियाणां सर्वफलदां दक्षिणां दापयेत्ततः ३२
आढ्योऽपि दक्षिणां दत्त्वा क्षुद्रां हस्ते दरिद्रवत्
सोऽप्यन्यो डाम्भिको नैव यथोक्तफलमाप्नुयात् ३३
अधमा पञ्चनिष्का स्यादाचार्याय तु दक्षिणा
त्रिगुणा मध्यमा प्रोक्ता षड्गुणा चोत्तमा भवेत् ३४
तस्माद्दशांशं होतृणामध्येतृणां तदर्धतः
जापिनां होतृवत्तस्य दैवज्ञे त्रिगुणं भवेत् ३५
सकलस्य प्रतिष्ठायां दक्षिणा संप्रकीर्तिता
निष्कलस्य प्रतिष्ठायां तस्मात्त्रिगुणिता भवेत् ३६

इत्यजिताख्ये महातन्त्रे क्रियापादे अर्धनारीश्वरप्रतिष्ठाविधिः
पञ्चचत्वारिंशः पटलः

## षट्चत्वारिंशः पटलः

वृषेन्द्रप्रतिष्ठाविधिः
उत्पत्तौ तौ तदा देवौ वाहनत्वमुपागतौ
एवमुत्पत्तिरुद्दिष्टा मन्त्रं तत्स्थापनोचितम् १
मूलख्यं सषडङ्गं च वक्ष्ये गायत्रियान्वितम्
सप्तमस्वरसंयुक्तलकारान्तं जनार्दन २
बिन्दुनादसमायुक्तं मूलबीजं च कथ्यते
वृषभाय नमश्चान्ते तारं तत्स्थस्य तस्य तु ३
योजयेन्मूलमन्त्रस्य ततोऽङ्गानि च पूर्ववत्
वकारेण समायुक्तहृदयादीनि कल्पयेत् ४
तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि
तन्नो वृषः प्रचोदयादिति गायत्रिमुच्चरेत् ५
एवं मन्त्राः समुद्दिष्टाः स्थापनं तु ततः शृणु
रत्नन्यासं पुरा कुर्यात्स्थण्डिले शालिनिर्मिते ६
तन्मध्ये पीठमादाय स्थापयेद्धृदिना ततः
माणिक्यादीनि नवकं मध्यादिष्वपि विन्यसेत् ७
पीठे तु नवशक्तीनां मन्त्रैस्तत्र वृषं ततः
सम्यगारोप्य नीरन्ध्रं कृत्वा पीठसमन्वितम् ८
वृषेन्द्रमूलमन्त्रेण प्रोक्षयेद्गन्धवारिणा
रत्नन्यास इति प्रोक्तो नेत्रोन्मीलनमुच्यते ९
तादृशे स्थण्डिले देवं संस्थाप्य शिवसंनिधौ
देशिकः शिल्पिना तत्र कारयेन्नेत्रमण्डलम् १०
तस्य कर्मसमाप्तौ तु नेत्रयोर्देशिकः सुधीः
विन्यस्य सोमसूर्याभ्यां नेत्रयोस्तु पुनः पुनः ११
सर्पिर्दुग्धं च संतर्प्य दक्षिणेतरयोः क्रमात्

स्वर्णदूर्वाङ्कुराभ्यां तु वृषगायत्रिमन्त्रतः १२
प्रच्छन्नपटमावर्ज्य ब्राह्मणान्गां च दर्शयेत्
शुद्धिं कृत्वा ततो मन्त्री पञ्चमृत्पञ्चगव्यकैः १३
वृषगायत्रिमन्त्रेण गन्धतोयेन सेचयेत्
तत्र तस्योचितैर्द्रव्यैः शुद्धिं कृत्वा पुनः पुनः १४
अलंकारं वृषे कृत्वा नीत्वा ग्रामप्रदक्षिणम्
जलेऽधिवासयेत्पश्चाद्वृषं संवेष्ट्य वाससा १५
मालाकूर्चसमायुक्तं वृषगायत्रिमन्त्रतः
ततस्तस्मात्समानीय स्नानमण्टपमध्यमे १६
पञ्चगव्यादिना स्नाप्य वृषगायत्रिमुच्चरन्
सौवर्णं कौतुकं तस्य सव्यशृङ्गे तु बन्धयेत् १७
वेष्टयेत्कूर्चवस्त्राभ्यां तनुत्राणं समुच्चरन्
पूर्वोक्तलक्षणोपेतमण्टपादिषु कल्पयेत् १८
कुण्डानि परितस्तत्र चतुरश्रार्धचन्द्रके
वृत्तं त्रिकोणकं चैव शांकरे पद्ममेव च १९
गोमयेनोपलिप्याथ पुण्याहं च प्रयोजयेत्
स्थण्डिलं विधिना कृत्वा पद्ममालिख्य तत्र वै २०
शयनं पूर्ववत्कृत्वा यथापूर्ववदर्चयेत्
सर्वात्मनाणुनाभ्युद्य वृषेन्द्रं तत्र शाययेत् २१
प्रत्यग्द्वारा समानीय शयने पुष्पकीर्णके
शङ्खदुन्दुभिनिर्घोषैः सामवेदसमीरणैः २२
पूर्वोक्तलक्षणोपेतं प्रधानं तोयपूरितम्
हेमकूर्चसुवस्त्राढ्यं गन्धचन्दनचर्चितम् २३
ककुत्पार्श्वे न्यसेद्धीमान्वृषगायत्रिमन्त्रतः

ततश्च परितः पश्चादष्टौ कुम्भांश्च भाजितान् २४
तदर्धपरिमाणांश्च न्यसेद्दिक्षु विदिक्षु च
तेषु चाष्टौ दिशाधीशाः शक्राद्याः संस्थिताः क्रमात् २५
ततस्तु देशिकः शान्तो नवाम्बरधरः शुचिः
धृतपञ्चाङ्गभूषश्च सोष्णीषः सोत्तरीयकः २६
मौनी देहं शिवीकृत्य प्रसन्नः प्रियदर्शनः
वृषेन्द्ररूपं स्मृत्वा तु हृदि पङ्कजगह्वरे २७
प्राणायामसमायुक्तं हृदयाग्रेसरं वृषम्
पुष्पैरञ्जलिमापूर्य कुम्भाम्भसि मनोरमे २८
आवाहनादिकं सर्वं कृत्वा पूर्वोक्तवत्सुधीः
मूलमन्त्रं न्यसेत्साङ्गं प्रथमे वृषमर्चयेत् २९
गन्धपुष्पादिभिः सर्वैर्लोकपालांश्च पूजयेत्
वृषेन्द्रस्य तु मुद्गान्नमन्येषां शुद्धमुच्यते ३०
ततो होमं प्रकुर्वीत देशिकः साधकैः सह
अग्निकार्योक्तमार्गेण स्थाप्य कुण्डेषु पावकम् ३१
पूर्वादिष्विन्द्रकीनाशपाशिसोमान्क्रमेण तु
प्रधाने वृषभेन्द्रं च समावाह्यार्चयेत्ततः ३२
समिदाज्यचरूँल्लाजांस्तिलनिष्पावमुद्गकान्
साङ्गेन मूलमन्त्रेण जुहुयात्क्रमशः पुनः ३३
प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात्
प्रधाने तु पलाशश्च समिदित्थं प्रकल्पयेत् ३४
द्रव्यान्ते व्याहृतिं हुत्वा तत्तन्मन्त्रैः स्पृशेद्वृषम्
वृषगायत्रिमन्त्रेण प्रतिकुण्डं च सर्पिषा ३५
दशाहुतिं ततो हुत्वा परिषिच्य समापयेत्

होमकाले प्रयुञ्जीत दिक्त्वध्ययनमुत्तमम् ३६
शांकरेऽस्त्रजपः कार्यः सर्वातोद्यसमन्वितम्
एवं कृत्वाधिवासं तु त्यक्त्वा रात्रिं तु जागरात् ३७
प्रभाते विधिवत्स्नात्वा नित्यकर्म समाप्य च
प्रविश्य मण्टपं तत्र कुम्भस्थानर्चयेत्सुरान् ३८
पूर्णाहुतिं च मूलेन सर्वत्र जुहुयात्क्रमात्
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत् ३९
तदर्धं वृषमुत्थाप्य स्नानवेद्यां तु विन्यसेत्
वस्त्रकूर्चादिकं सर्वमपनीय विचक्षणः ४०
अर्घ्यं दत्त्वा वृषेन्द्रस्य मूलमन्त्रेण मूर्धनि
वृषगायत्रिमन्त्रेण गन्धोदमभिषेचयेत् ४१
ततः कुम्भान्समादाय कृत्वा धाम्नि प्रदक्षिणम्
वृषाग्रे स्थण्डिलं कृत्वा पूर्ववत्पूजयेत्ततः ४२
प्रधानकुम्भसंस्थं च ध्यात्वा च वृषभेश्वरम्
तस्मात्कूर्चाम्भसा मूर्ध्नि स्रवता मूलमुच्चरन् ४३
वृषेन्द्रमन्त्रदेहं तु विन्यसेच्छान्तमानसः
अङ्गानि च तदङ्गेषु हृदयादीनि विन्यसेत् ४४
लोकपालघटैश्चापि तत्रस्थैरभिषेचयेत्
अर्घ्यादिभिश्च संपूज्य नैवेद्यान्तैर्यथाक्रमम् ४५
मालाभरणवस्त्राद्यैरलंकृत्य वृषेश्वरम्
चलं चेत्स्थापयेदग्रे दिव्यलिङ्गस्य देशिकः ४६
अचले स्थापितस्यैव मन्त्रन्यासं समाचरेत्
वृषस्तिष्ठति वा यत्र देवेन सह विष्टरे ४७
सहाक्ष्युन्मीलनादीनि कृत्वा कर्माणि मन्त्रवित्

प्रधानकुण्डे तस्यापि होमं मूलेन कारयेत् ४८
अङ्गैश्चाद्यैर्नवैकेन प्रत्येकं तु शताहुतिम्
कुम्भन्यासश्च कर्तव्यो देवकुम्भसमीपके ४९
शेषं कर्म च कुर्वीत देवदेव्योरनन्तरम्
एवं संस्थाप्य विधिवद्वृषेन्द्रं पुत्रवृद्धिदम् ५०
सर्वान्कामांश्च संप्राप्य देहान्ते तु शिवं व्रजेत् ५१

इत्यजिताख्ये महातन्त्रे क्रियापादे वृषेन्द्रप्रतिष्ठाविधिः
षट्चत्वारिंशः पटलः

## सप्तचत्वारिंशः पटलः

## ब्रह्मप्रतिष्ठाविधिः

प्रतिष्ठां ब्रह्मणो वक्ष्ये धर्मकामार्थमोक्षदाम्
मण्टपे पूर्ववत्क्लृप्ते पूर्वादिचतसृष्वपि १
दिक्षु कुण्डानि कुर्वीत चतुरश्रार्धचन्द्रके
वृत्तं त्रिकोणकं चैव पद्ममीशानगोचरे २
सर्वकर्म ततः कुर्यात्तस्य संस्कारपूर्वकम्
ब्राह्ममर्चां ततः कुर्यान्नीत्वा च स्नानमण्टपम् ३
नेत्रोन्मीलनकर्माद्याः पूर्ववत्परिकल्पयेत्
चतुर्ष्वपि मुखेष्वेषु नयनेष्वष्टसु क्रमात् ४
पूर्ववन्मधुसर्पिर्भ्यां तर्पयेन्मन्त्रवित्तमः
नेत्रयोः प्रतिवक्त्रं तु सूर्यसोमाणुमुच्चरन् ५
पूर्ववच्छेषकर्माणि तत्र कुर्याद्विचक्षणः
ततस्तां प्रतिमां मृद्भिः पञ्चभिः पञ्चगव्यकैः ६
शोधयेत्क्षालयेत्पश्चाद्ब्रह्मगायत्रिमुच्चरन्

पुण्याहं वाचयित्वात्र मालाकूर्चसमावृतम्  ७
बेरं नवाम्बरेणैव वेष्टयित्वा जलाशयम्
नीत्वा तज्जलमध्ये तु नाभिदघ्ने जले सुधीः  ८
प्राक्छिरस्कां तु तां तत्र शाययेत्प्रतिमां ततः
तत्रापि पूर्ववन्नीत्वा कालं बेरं समानयेत्  ९
स्नानमण्टपमध्ये तु नालावटसमन्विते
वेदिकायां तु तां न्यस्य त्यक्त्वा कूर्चादिकं ततः  १०
गायत्र्या प्रणवेनापि गन्धोदेनाभिषेचयेत्
पुण्याहं वाचयित्वात्र बन्धयेत्कौतुकं हृदा  ११
मालाभिर्लम्बकूर्चेन वेष्टयेत्प्रतिमां ततः
ततो मण्टपवेद्यां तु स्थण्डिलं तत्र कल्पयेत्  १२
पूर्ववच्छयनं चापि पुण्याहं तत्र कारयेत्
वास्तुहोमादिकं सर्वं पूर्ववत्परिकल्पयेत्  १३
ततो देवं समानीय पश्चिमेनोत्तरेण वा
द्वारेण तत्र शय्यायां शाययेत्प्रणवेन तु  १४
ततो बेरं समाच्छाद्य पीतेनाहतवाससा
अर्घ्यं दत्त्वाथ शिरसि प्रणवं समुदाहरन्  १५
ब्रह्मकुम्भं तदा तत्र द्रोणपूरं मनोरमम्
वेष्टितं सितसूत्रेण गन्धोदपरिपूरितम्  १६
हिरण्यपद्मसंयुक्तं सकूर्चं सापिधानकम्
आवेष्ट्याहतवस्त्राभ्यां स्थापयेद्वेदिमध्यमे  १७
परितश्च ततः कुम्भांस्तादृशानपि विन्यसेत्
तदर्धपरिमाणांश्च तदर्थेषु यजेत्क्रमात्  १८
चतुर्भुजं चतुर्वक्त्रमासीनं कमलासने

बद्धपद्मासनं देवं हेमाभं शुभ्रवाससम् १९
वरदाभयहस्तं च कमण्डल्वक्षधारिणम्
ध्यात्वा कुम्भाम्भसि स्थाप्य मूलमन्त्रं समुच्चरन् २०
आवाहनादिकं कृत्वा गन्धपुष्पादिभिर्यजेत्
लोकपालान्यथास्थानं तत्तन्मन्त्रैः समर्चयेत् २१
ततो होमं प्रकुर्वीत कुण्डेषु परितः क्रमात्
अग्निकार्योक्तमार्गेण स्थाप्य कुण्डेषु पावकम् २२
तत्तदाशाधिपान्कुम्भेष्वभितः पूजयेत्ततः
ब्रह्माणं तु प्रधानेऽत्र साङ्गं संपूजयेत्ततः २३
समिदाज्यचरूंश्चापि तिलवेणुयवानपि
माषं तु क्रमतो मन्त्रैरङ्गैर्मूलादिभिर्बुधः २४
जुहुयाच्छतमर्धं वा तदर्धं वा पृथक्पृथक्
पुक्षोदुम्बरकाश्वत्थवटाः पूर्वदितः क्रमात् २५
पलाशस्तु प्रधानस्य समिदित्थं प्रकल्पयेत्
एवं कृत्वा तु सर्वेषु गायत्र्या होममाचरेत् २६
आज्येनैकेन तत्संख्यां पूर्ववत्परिकल्पयेत्
ततो होमं समाप्यैवं परिषिच्य च पावकम् २७
दद्यात्कुम्भस्थितानां तु हविस्तत्र दिवौकसाम्
रात्रिशेषं ततो नीत्वा प्रातरुत्थाय देशिकः २८
कृतनित्यक्रियः शान्तो मूर्तिपैः सह मन्त्रवित्
प्रविश्य मण्टपं तत्र धृतपञ्चाङ्गभूषणः २९
सोष्णीषः सोत्तरीयश्च कृत्वा मन्त्रात्मिकां तनुम्
देवान्संपूज्य तत्रस्थान् स पूर्णां तत्र दापयेत् ३०
व्याहृत्यन्तेन मूलेन परिषिच्य च पावकम्

उत्थाप्य शयनाद्देवं नीत्वा धाम्नि प्रदक्षिणम्  ३१
रथादिभिः प्रविश्यान्तो दत्त्वार्घ्यं प्रतिमाहृदि
नवरत्नादि विन्यस्य पूर्ववत्पीठिकावटे  ३२
तत्र वागीश्वरीं पूज्य पीठपार्श्वे रथात्ततः
अवतीर्णां तदा तत्र प्रतिमां स्थापयेत्सुधीः  ३३
मूलमन्त्रं समुच्चार्य मूलस्याभिमुखं तथा
पूर्ववत्पीठविश्लेषसंधिं कृत्वा विचक्षणः  ३४
शिल्पिकर्माणि निष्पाद्य विसृज्यैनं सपर्यया
कृतस्नानस्ततो मन्त्री कृत्वा मन्त्रात्मिकां तनुम्  ३५
देवान्कुम्भेषु संपूज्य समुद्धृत्याथ तान्क्रमात्
प्रदक्षिणक्रमादन्तर्भवनं संप्रविश्य च  ३६
यथास्थानं घटानग्रे स्थण्डिले स्थाप्य पूजयेत्
गन्धपुष्पादिभिः पश्चादर्चां शुद्धोदकेन च  ३७
पञ्चमृत्पञ्चगव्यैश्च शोधयित्वाभिषिच्य च
पुण्याहं वाचयित्वा तु मन्त्रन्यासं समर्चयेत्  ३८
उत्तराभिमुखः सम्यगासीनः सुखमासने
हृदयादीनि चाङ्गानि विन्यसेद्धस्तयोर्द्वयोः  ३९
अङ्गुष्ठादिकनिष्ठान्ते नेत्रान्तं तु तलद्वयोः
अस्त्रं विन्यस्य चाङ्गेषु हृदयादि हृदादिषु  ४०
विन्यसेत्क्रमशो मन्त्री मूलं हृन्मध्यमे न्यसेत्
एवं मन्त्रात्मिकां कृत्वा तनुं देवं विचिन्तयेत्  ४१
ततः कुम्भार्चितं देवं मूलमन्त्रं समुच्चरन्
प्रतिमाहृदि विन्यस्य पूर्ववन्मन्त्रवित्तमः  ४२
अङ्गेष्वङ्गानि चाप्यस्य विन्यसेद्धृदयादिषु

ततो मूलं समुच्चार्य गन्धपुष्पादिभिर्यजेत् ४३
प्रभूतं च हविर्दत्त्वा ताम्बूलं च प्रदापयेत् ४४
इत्यजिताख्ये महातन्त्रे क्रियापादे ब्रह्मप्रतिष्ठाविधिः सप्तचत्वारिंशः पटलः

अष्टचत्वारंशिः पटलः

मातृकास्थापनविधिः

मातृणां सगणानां तु स्थापनं कथ्यतेऽधुना
शिवालयेषु याम्ये स्याद्ग्रामादिष्वीशगोचरे १
सौम्ये वा तत्प्रशस्तं स्यान्नद्यादीनां च तीरके
उद्याने च वने रम्ये पर्वते वा मनोरमे २
विजने यत्र कुत्रापि स्थापयेद्देशिकोत्तमः
शिवालयेषु ग्रामादौ स्थाप्या मध्ये तु वैष्णवी ३
अन्यत्र मध्ये चामुण्डां स्थापयेद्विधिना पुमान्
मातरो लोकरक्षार्थं ब्राह्म्याद्या निर्मिताः पुरा ४
ब्रह्माणी ब्रह्मणा सृष्टा महेशेन महेश्वरी
कौमारी षण्मुखेनैव वैष्णवी विष्णुना तथा ५
वाराही यज्ञवाराहेणेन्द्राणीन्द्रेण चासृजत्
कालरात्रिमुमा चैव रूपवाहनचिह्नकैः ६
तैस्तैर्देवैः समाः सर्वाश्चामुण्डा चातिभीषणा
भ्रुकुटीकुटिला सा च समस्तारिष्टमर्दनी ७
त्रिणेत्रा चतुर्भुजा चैव पिशाचध्वजवाहना
मातुरुत्पत्तिरुद्दिष्टा शृणु मन्त्रानतः परम् ८
यकारादिसकारान्तान् ब्राह्म्यादीनां तु कल्पयेत्

बिन्दुनादसमायुक्तान्मूलमन्त्रानतः परम् ९
तत्तन्नाम चतुर्थ्यन्तं नमस्कारेण योजयेत्
हकारं वीरभद्रस्य गणेशस्य गकारकम् १०
एवं मूलांश्च संकल्प्य चाङ्गान्येभ्यश्च कल्पयेत्
पूर्ववद्धृदयादीनि प्रतिष्ठाविधिरुच्यते ११
तदर्थं मण्टपं कुर्यात्पूर्वोक्तविधिना सह
तन्मध्ये वेदिकां चापि परितोऽग्निनिकेतनम् १२
योन्याकारं तु सर्वासु दिक्षु कुण्डं प्रकल्पयेत्
ईशानशक्रगौ कुण्डौ वृत्तवेदाश्रकौ मतौ १३
शक्रशंकरयोर्मध्ये पद्मकुण्डं प्रकल्पयेत्
मण्टपस्याथ संस्कारमलंकारं च पूर्ववत् १४
नेत्रोन्मीलनकर्माणि पृथगेव प्रकल्पयेत्
शिल्पिनाथ गुरुस्तासां मधु दुग्धं च नेत्रयोः १५
तत्तन्नयनमन्त्रेण दक्षिणेतरयोरपि
कल्पयेद्धैमया सम्यग्दूर्वया कल्पवित्तमः १६
नेत्रत्रययुतानां तु लोचने तु ललाटके
सर्पिषा तर्पयेत्पश्चादग्निबीजं समुच्चरन् १७
हिरण्यनखसंप्रोतैरङ्गुल्यग्रैस्त्रिभिस्ततः
तत्तन्नेत्रेषु सूर्येन्दुवह्निबीजानि विन्यसेत् १८
अन्यासां सोमसूर्यौ च विन्यसेल्लोचनद्वये
ततश्च पञ्चगव्येन तत्तद्धृदयमुच्चरन् १९
अभिषिच्याथ मृद्भिश्च पञ्चभिस्ताश्च शोधयेत्
गन्धतोयेन पश्चात्तु पञ्चब्रह्मजपेन तु २०
अभिषिच्य पृथक् पश्चात्पुण्याहं वाचयेत्सुधीः

ततस्ताः प्रतिमाः सर्वाः कूर्चमालाभिवेष्टिताः २१
वेष्टयेद्वाससा मन्त्री विशुद्धेन नवेन च
पृथक्पृथक् ततो मन्त्री तासामर्घ्यं शिरस्सु च २२
तत्तद्धृदयमुच्चार्य दद्यात्पश्चाद्रथादिभिः
ग्रामादि परितो नीत्वा गत्वा चैव जलाशयम् २३
स्थापनक्रमतः सर्वा जलमध्ये तु शाययेत्
परितो दिक्पतींश्चास्त्रान् गन्धाद्यैरर्चयेत्ततः २४
जलाधिवासकालस्तु पूर्वमेव प्रदर्शितः
ततस्ताः प्रतिमाः सर्वा विघ्नाद्यन्ताः क्रमेण वै २५
उद्धृत्यारोप्य साये तु स्यन्दनादींस्तथैव च
स्नानमण्टपमानीय स्नानवेद्यां तु विन्यसेत् २६
क्रमेण वस्त्रकूर्चादीनपनीय च देशिकः
पञ्चमृत्पञ्चगव्यैश्च शुद्धिं पूर्ववदाचरेत् २७
ततः पुण्याहमादौ तु कृत्वा तासां शिरस्सु च
अर्घ्यं दत्त्वा क्रमेणैव पूर्ववन्मन्त्रवित्तमः २८
कौतुकं बन्धयेत्तासां बीजेन हृदयेन तु
वेदिकायां यथापूर्वं कल्पिते स्थण्डिले सुधीः २९
शयने पृथगास्तीर्णे प्रतिमास्ता यथाक्रमम्
वीरादिविघ्नपर्यन्ताः शाययेदष्टदिक्षु च ३०
या वात्र मध्ये संस्थाप्या तां तन्मध्ये निवेशयेत्
प्राक्शिरश्चोर्ध्ववक्त्रास्ताः सर्वाश्च परिकीर्तिताः ३१
तासामुपरि कूर्चं तु पुष्पवस्त्रसमन्वितम्
कुशान् गन्धं न्यसेन्मन्त्री तत्तद्धृदयमुच्चरन् ३२
वस्त्रैरावेष्ट्य सद्यस्तास्ततः कुम्भान्निवेशयेत्

द्रोणपूर्णान्दृढान्द्रव्यैः काञ्चनाद्यैश्च निर्मितान् ३३
सितसूत्रविचित्रांस्तान् गन्धोदपरिपूरितान्
सकूर्चान्वस्त्रहेमाढ्यान् गन्धचन्दनचर्चितान् ३४
सितवस्त्रैः सुसंवेष्ट्य पिहितांश्च पिधानकैः
शिरसि दक्षिणे तासां मध्यात्प्रभृति विन्यसेत् ३५
पुण्याहं वाचयित्वात्र प्रोक्षयेद्ब्रह्मपञ्चकैः
ततस्तान्पूजयेत्सर्वान् पूजाविधिरथोच्यते ३६
वेद्या दक्षिणपार्श्वे तु सुखासीन उदङ्मुखः
प्राणायामत्रयं कृत्वा रेचकादिक्रमेण तु ३७
दहनं प्लावनं तत्र भूतशुद्धिं च कल्पयेत्
मध्यस्थायां च मूले तु करशाखासु विन्यसेत् ३८
हृदयाद्यस्त्रपर्यन्तं कनिष्ठाङ्गुष्ठकान्तकम्
नेत्रं हस्ततले न्यस्य मूलं सर्वासु विन्यसेत् ३९
एवं कृत्वा करन्यासमङ्गन्यासमथाचरेत्
हृदयादिषडङ्गानि यथास्थानं प्रयोजयेत् ४०
ततो मध्यस्थितां देवीं ध्यात्वा हृत्पद्ममध्यमे
तां घटस्थां घटे देवीं मूलमन्त्रं समुच्चरन् ४१
आवाह्य शेषितं कर्म सर्वं पूर्ववदाचरेत्
तत्तदङ्गानि विन्यस्य यथास्थानं समर्चयेत् ४२
एवं क्रमेण पूर्वादि न्यस्य ध्यात्वा तु पूजयेत्
ततो होमं तु कुर्वीत तद्विधानमथोच्यते ४३
अग्निकार्योक्तमार्गेण स्थाप्य कुण्डेषु पावकम्
प्रधानकुण्डे तां देवीं मध्यास्त्रान्तं पृथग्यजेत् ४४
प्रागादिषु ततः शेषा वीराद्याश्च क्रमाद्यजेत्

देशिकः स्यात्प्रधानस्य होता शेषेषु चाष्टसु ४५
कुण्डेषु साधकाः प्रोक्ता होतारः पुत्रकास्तु वा
पलाशौदुम्बराश्वत्थवटप्लक्षमयूरकाः ४६
शमीखदिरबिल्वाश्च वीरादीनां यथाक्रमम्
समिद्वृक्षाः समुद्दिष्टाः शेषद्रव्यमथोच्यते ४७
आज्यं चरुं तथा लाजतिलसर्षपमेव च
एतानि सर्वकुण्डेषु होमयेद्धृदयादिभिः ४८
तन्मूलेन समिद्धोमं सर्वत्र प्रथमं हरेत्
तत्तदङ्गैर्यथाहोमं तत्तत्कुण्डेषु होमयेत् ४९
प्रतिद्रव्यावसाने तु व्याहृत्यन्ते स्पृशेद्गुरुः
तत्तदङ्गेषु तन्मन्त्रं सर्वासां होतृभिः सह ५०
एवं होमे तु निर्वृत्ते देवतास्ताः समर्चयेत्
परिषिच्य ततस्तेषु कुण्डेष्वग्निं यथाविधि ५१
देवतानां हविः पश्चाद्दद्यात्सम्यग्यथाविधि
नीत्वा रात्रिं च तच्छेषां प्रभाते होतृभिः सह ५२
कृत्वा नित्यक्रियां सर्वां संप्रविश्याथ मण्टपम्
कुम्भस्था देवताः सर्वाः समभ्यर्च्य यथाविधि ५३
कुण्डेषु तास्तथा यष्ट्वा तत्तन्मूलेन दापयेत्
पूर्णाहुतिं ततस्तत्र प्रतिमास्ताः समर्चयेत् ५४
तत उद्धृत्य ताः सर्वाः क्रमेण प्रतिमाः शनैः
अपनीय च वस्त्राद्यं तत्तद्धृदयमुच्चरन् ५५
तत्तच्छिरसि दत्त्वार्घ्यं मध्यमां प्रतिमां ततः
प्रदक्षिणं समानीय प्रासादान्तः प्रविश्य च ५६
रत्नानि विधिवन्न्यस्य बीजानि सहृदानि च

अभ्यर्च्य देवीं तत्रैव मूलमन्त्रेण तच्छिरः ५७
संस्पृश्य स्थापयेद्देवीं शिल्पिवर्यसमन्वितः
शेषाश्च सगणाः सर्वा मातृस्तेष्वपि तेषु च ५८
पृथग्रत्नादियुक्तेषु सव्यवामक्रमेण तु
स्थापयेत्पूर्ववद्धीमान् सर्वाश्च स्वस्वमूलतः ५९
उत्तराभिमुखाः सर्वा वीरेशः पश्चिमोन्मुखः
विघ्नेशः प्राङ्मुखस्तत्र स्थापने तु प्रकीर्तिताः ६०
ततः स्नात्वा गुरुर्धाम्नि पुण्याहं तत्र वाचयेत्
पञ्चब्रह्मभिरभ्युन्द्य बहिर्निष्क्रम्य देशिकः ६१
सुमुहूर्ते सुलग्ने तु कुम्भानुद्धृत्य तान्क्रमात्
प्रदक्षिणमुपावृत्य प्रासादान्तः प्रविश्य च ६२
तत्तदग्रेषु तान्कुम्भान् स्थण्डिलोपरि विन्यसेत्
पूर्ववन्मन्त्रिताङ्गस्तु धृतपञ्चाङ्गभूषणः ६३
सोष्णीषः सोत्तरीयश्च तत्तत्कुम्भान्पुरोक्तवत्
मन्त्रन्यासं ततः कुर्यात्स्थापनक्रमशो बुधः ६४
पृथक्पृथक् समभ्यर्च्य कलशैरभिषेचयेत्
तेषु मध्यस्थितां तस्या वामाद्याः परितः स्थिताः ६५
ततश्चन्दनगन्धोदकर्पूरागरुगन्धिना
आलिप्य प्रतिमाः सर्वा वस्त्राभरणभूषिताः ६६
प्रभूतं च हविर्दत्त्वा पृथक् तासां यथाविधि
ताम्बूलं मुखवासेन दद्यात्तासां पृथक् पृथक् ६७
अचलस्थापनं ह्येवं मृच्छिला मृण्मयास्तु वा
चित्राभासाश्च यास्तासां रत्नन्यासादिकाः क्रियाः ६८
यथायुक्त्या प्रयुञ्जीत चलेष्वपि तथा नयेत्

आभासमृरामयानां तु पीठमग्रे तु कल्पयेत् ६९
तासां पूजाविधिं कुर्यादन्यत्रैव शिवालये
मातृतन्त्रोक्तमार्गेण मातृमन्त्रकृताग्निके ७०

इत्यजिताख्ये महातन्त्रे क्रियापादे
मातृकास्थापनविधिरष्टचत्वारिंशः पटलः

## एकोनपञ्चाशः पटलः

## विनायकस्थापनविधिः

विनायकस्य वक्ष्यामि तदुत्पत्तिपुरस्सरम्
स्थापनं तस्य मन्त्रं च शृणु मत्तः समासतः १
पुरा ममोमया सार्धं क्रीडतः सरसस्तटे
मानसस्य गजान्दृष्ट्वा करिणीवरसंयुतान् २
क्रीडतश्च यथाकामं तटे तस्मिन्मनोरमे
ततो रम्यमृगे चैव वामेऽप्यत्र जलाशये ३
गजरूपधरौ भूत्वा प्रीत्यर्थं पुत्रमुत्तमम्
गजास्यं तु समुत्पाद्य मनसा सह तेन च ४
क्रीडावोऽथ यथाकाममित्युक्तोऽहं च यत्तदा
यदुक्तं कर्म तत्सर्वं क्षणेन कृतवानहम् ५
ततश्चिराद्गजक्रीडां कृत्वा विरमितस्तदा
देवकार्यं विचिन्त्येह जगतां च हितेच्छया ६
देवारिसूदनं पुत्रमुमया जगतस्तदा
चतुर्दशविधस्यास्य कृतवानग्रनायकम् ७
तेनैव तस्य नामापि विनायक इति श्रुतम्
दत्तवानस्मि तस्याहमष्टादशगणेशताम् ८

विघ्नानामीश्वरत्वं च स्वस्वामित्वमतुल्यताम्
ततस्तं सर्वदेवाश्च पुरन्दरपुरोगमाः ९
स्वप्रयोजनसिद्ध्यर्थं कर्मारम्भेष्वपूजयन्
एवमुत्पत्तिरुद्दिष्टा तस्य मन्त्रमथ शृणु १०
प्रथमस्वरसंयुक्तः खपरो मूलमुच्यते
बिन्दुनादसमायुक्तश्चतुर्थ्यन्तगणेशयुक् ११
नमस्कारान्तसंयुक्तः सर्वसिद्धिप्रदो भवेत्
हृदयादीनि चाङ्गानि पूर्ववत्परिकल्पयेत् १२
गायत्री च भवेदेषा सर्वकामफलप्रदा
गणेश्वराय विद्महे हस्तिवक्त्राय धीमहि १३
तन्नो दन्ती प्रचोदयादिति गायत्रिमुच्चरेत्
एवं साङ्गः सगायत्रीमन्त्र एष उदीरितः १४
तस्य प्रतिष्ठायोग्यं यत्स्थानं देवालयेषु च
ग्रामादौ पश्चिमे भागे दक्षिणे वा प्रकल्पयेत् १५
लिङ्गस्थापनयोग्यं यत्स्थानं पूर्वमुदाहृतम्
तत्रापि स्थापनं कुर्यान्मण्टपं चतुरश्रकम् १६
दक्षिणे चोत्तरे वापि तत्पूर्वं मण्टपं भवेत्
कुण्डानि परितो दिक्षु विदिक्षु परितः सुधीः १७
चतुरश्रं धनुर्वृत्तं त्रिकोणं च यथाक्रमम्
विदिक्षु चतुरश्राणि कुण्डानि परिकल्पयेत् १८
शक्रशांकरयोर्मध्ये प्रधानं पद्ममेव हि
संपत्तौ नवभिर्होमैरलाभे पञ्चभिर्भवेत् १९
स्थापनं पञ्चहोमे स्यादैशान्यां तत्प्रधानकम्
मण्टपे पूर्ववत्सर्वं संस्कारं संप्रकल्पयेत् २०

ततोऽद्त्युन्मीलनं कुर्यान्मरादपे समलंकृते
मरादपे स्थरिडले स्थाप्य प्राङ्मुखं शिल्पिना ततः २१
प्रच्छन्नपटमावेष्ट्य नववस्त्रेण वेष्टयेत्
भ्रूरेखां पद्मरेखां च कृष्णमराडलमेव च २२
दृष्टिं च कृतहस्तेन कारयेल्लत्तणान्वितम्
स्वर्णसूच्या ततो मन्त्री दूर्वया स्वर्णभूतया २३
मध्याज्यदुग्धैः पात्रस्थैः सुवर्णकलशाञ्चितैः
प्रोत्तितैरस्त्रमन्त्रेण लोचनेषु यथाक्रमम् २४
तर्पयेत्पूर्ववन्मन्त्री ततो धेनुं प्रदर्शयेत्
पञ्चमृत्पञ्चगव्यैश्च शुद्धिं कृत्वास्त्रमुच्चरन् २५
प्रदत्तिणं ततो नीत्वा ग्रामादौ च जलाशयम्
ततः प्रविश्य तत्तीरे स्थाप्य देवं विनायकम् २६
पुरायाहप्रोत्तणं कृत्वा सकूर्चं मालया सह
श्रावेष्ट्याहतवस्त्रेण चावगाह्य जलं ततः २७
पूर्ववच्छाययेदादौ नीत्वा कालं च पूर्ववत्
श्रानीय च ततः स्नानमराटपे वेदिकोपरि २८
संस्थाप्य प्राङ्मुखं देवं पञ्चगव्येन सेचयेत्
गायत्र्या गन्धतोयेन ततः प्रणवमुच्चरन् २९
श्रभिषिच्य ततो मन्त्री बध्वा प्रतिसरं बुधः
कूर्चेन वा सुसंवेष्ट्य वस्त्रेण सुसितेन च ३०
पूर्ववन्मराटपे कृत्वा स्थरिडलं शयनानि च
पूर्ववत्तत्र देवांश्च पूजयित्वा यथाक्रमम् ३१
ततो देवं समानीय प्राक्शिरश्चोर्ध्ववक्त्रकम्
शाययेच्छयने मन्त्री मूलमन्त्रं समुच्चरन् ३२

ततः कुम्भं तु हेमादिनिर्मितं तोयपूरितम्
पूर्ववत्संस्कृतं तत्र शिरोभागेऽथ दक्षिणे ३३
विन्यस्य परितः कुम्भानष्टौ चाप्यथ तादृशान्
संस्थाप्य तेषु मध्यादि देवांश्चाथ समर्चयेत् ३४
वेद्यास्तु दक्षिणे पार्श्वे प्राङ्मुखो वाप्युदङ्मुखः
आसने सुखमासीनो देशिकः कल्पयेत्तनुम् ३५
तथा मन्त्रात्मिकां तत्र विधिरस्य निगद्यते
अङ्गानि करशाखासु हृदयादीनि विन्यसेत् ३६
अङ्गुष्ठादिकनिष्ठान्तमस्त्रं हस्ततले न्यसेत्
पुनश्चैव षडङ्गानि यथास्थानं गुरुस्ततः ३७
एवं मन्त्रतनुर्भूत्वा गणेशं हृदि विन्यसेत्
प्राणायामत्रयं कृत्वा हृत्कुशेशयमध्यगम् ३८
त्रिनेत्रं चतुर्भुजं ध्यात्वा रक्तं रक्ताम्बरोज्ज्वलम्
एकदन्तं प्रलम्बोष्ठं नागयज्ञोपवीतिनम् ३९
टङ्कदन्तौ दधत्सव्ये फलपाशौ तथापरे
तरुणादित्यसंकाशं गजवक्त्रं विचिन्तयेत् ४०
ततो वैनायके देवे गन्धचन्दनचर्चिते
गन्धमाल्यावृते गन्धपुष्पधूपादिभिः क्रमात् ४१
पूजिते तद्धृदा तस्मिन् सुधामुद्राप्ररोचिते
हृदयान्तं समावाह्य गणेशं मुद्रया तथा ४२
स्थापिन्याथ च संस्थाप्य निरोधिन्या निरुध्य च
संनिधीकृत्य चाप्येनं संनिधान्या गजाननम् ४३
पूजयेन्मूलमन्त्रेण मन्त्रमूर्तिं गणेश्वरम्
गन्धपुष्पादिभिः सम्यक् सर्वभक्ष्यसमन्वितम् ४४

वेदध्वनिसमायुक्तं सर्वातोद्यसमायुतम्
ततश्च वरदं वीरं विघ्नेशं च गजाननम्  ४५
भक्ष्यप्रियं गजकर्णं लम्बोष्ठं विघ्ननाशनम्
पूर्वादिष्वभितःस्थेषु घटेष्वष्टसु विन्यसेत्  ४६
अर्चयेद्गन्धपुष्पाद्यैः स्वनामपदमन्त्रकैः
ततोत्थायार्घ्यहस्तस्तु होमकुण्डान्तरे क्षिपेत्  ४७
आचार्यो होतृभिः सार्धं साधकैः पुत्रकैस्तु वा
कुण्डसंस्कारपूर्वाणि कृत्वा कर्माणि शास्त्रतः  ४८
होमयेयुः क्रमाच्चैव द्रव्याण्येतानि मन्त्रतः
समिदाज्यचरूँल्लाजान्सक्तुकांश्च यवांस्तिलान्  ४९
षडङ्गैर्मूलमन्त्रैश्च जुहुयात्क्रमशः समम्
भक्ष्याणि च फलान्यत्र स्वादूनि च बहूनि च  ५०
होमयेयुश्च मूलेन यथालाभं सुरोत्तम
गणानां चेति मन्त्रेण सर्पिषा तु शताहुतीः  ५१
गायत्र्या च शतं हुत्वा सर्वकुण्डेषु मन्त्रवित्
द्रव्यान्ते व्याहृतिं हुत्वा समुत्थाय होतृभिः  ५२
तत्तद्द्रव्यावसाने तु तत्तन्मन्त्रमनुस्मरन्
तत्तदङ्गानि संस्पृश्य स्पशयेद्धोतृभिः सह  ५३
यथास्थानं तु कुण्डेषु वरदादीन्समर्चयेत्
प्रधाने गणेश्वरं देवं तैस्तैर्मन्त्रैर्दशाहुतीः  ५४
सर्पिषा जुहुयात्तेषां होमान्तेषु यथाक्रमम्
प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात्  ५५
शम्यपामार्गखदिराः कोणेष्वर्कोऽप्युदाहृतः
पलाशस्तु प्रधानस्य समिद्दोषविवर्जिता  ५६

होमकाले यथास्थानं स्थितैरध्ययनं भवेत्
होमान्ते सर्वदेवानां कुम्भस्थानां ददेद्धविः ५७
रात्रावेवं क्रियां कृत्वा प्रभाते स्थापयेद्बुधः
आचार्यो मूर्तिपैः सार्धं स्नात्वा कृत्वा च नैत्यकम् ५८
प्रविश्य मण्टपं तत्र देवानभ्यर्च्य पूर्ववत्
पूर्णाहुतिं तु मूलेन सर्वत्रापि प्रदापयेत् ५९
उत्थाप्य शयनाद्देवं प्रासादं तु प्रदक्षिणम्
समानीय प्रविश्यान्तःस्थानं देशिकसत्तमः ६०
स्थापयेच्छिल्पिना सार्धं गणेशं गर्भवेश्मनि
यथोक्तस्थानतो न्यस्य पीठस्य पदमध्यमे ६१
रत्नानि लोहधातूनि गन्धाद्योषधिसंयुतम्
बीजानि च गुरुर्न्यस्य स्थापयेत्तत्र देवताम् ६२
श्लिष्टं कृत्वा ततो मन्त्री पुण्याहं तत्र वाचयेत्
स्नात्वाचम्य शुचिर्भूत्वा शान्तचित्तस्त्वतन्द्रितः ६३
ततो मण्टपमासाद्य कृतमन्त्रतनुर्गुरुः
पूर्ववत्पूजयेत्कुम्भान्गन्धपुष्पादिभिः क्रमात् ६४
ततो गणेशकुम्भं तमुत्थाप्य शयनात्तदा
प्रदक्षिणं परिग्राह्य प्रविश्याग्रे निधाय च ६५
सुमुहूर्ते सुलग्ने तु दैववित्संप्रदर्शिते
देहशुद्धिं पुनः कृत्वा मन्त्रैर्मन्त्री प्रसन्नधीः ६६
सोष्णीषः सोत्तरीयश्च श्वेतवासोधरो मृदुः
प्रसन्नं तत्र विन्यस्य मन्त्रदेहं गणेश्वरम् ६७
बेरदेहेऽतिसूक्ष्मं तं स्थूलकूर्चाम्भसा न्यसेत्
प्राणमूलं ततो विद्वान्क्रमादङ्गानि विन्यसेत् ६८

साङ्गमूलं तमभ्यर्च्य गन्धपुष्पादिभिः क्रमात्
ततो मूलं तु तन्मूर्ध्नि ललाटमुखयोरपि ६९
गलेंऽसयोश्च बाह्वोश्च करयोर्जठरे तथा
नाभावूर्वोश्च जान्वोश्च जङ्घयोर्गुल्फयोरपि ७०
विन्यस्य प्रथमं मन्त्री गन्धपुष्पादिभिर्यजेत्
ततोऽष्टौ वरदादींश्च प्रागादिपरितो न्यसेत् ७१
न्यस्य तद्वत्तथा तेषां कुम्भान्कुर्याद्यथाक्रमम्
अभिषिच्य ततः कुम्भैस्ततो देवं गणेश्वरम् ७२
वस्त्राभरणमालाद्यैर्भूषयित्वाथ पायसम्
अपूपं घृतसंयुक्तं दत्त्वा हृदयमुच्चरन् ७३
ताम्बूलं मुखवासं च गणेशाय निवेदयेत्
लोहदारुसुधादीनां बेराणामपि देवप ७४
कर्मव्यत्यासमप्यत्र रत्नन्यासान्तकं तु यत्
संमतं सर्वमेव स्यात्सर्वेषां स्थापनेष्वपि ७५
एवं गौणं समाख्यातं गणेशस्थापनं परम्
मुख्ये तु स्थापने विष्णो विशेषोऽयं निगद्यते ७६
सर्वत्रापि गणेशस्य धाम प्राग्द्वारमिष्यते
सुप्रवेशः सुवृत्तश्च वामनः शङ्खपालकः ७७
महावीरो भैरवश्च वीरेशश्चोग्ररूपकः
एतेऽष्टौ स्युर्गणेशस्य परिवारा जनार्दन ७८
तांश्च वेद्यां तु परितः पूर्वादारभ्य विन्यसेत्
कुम्भस्थांश्च तथा द्वारपालावेतौ च विन्यसेत् ७९
द्वारपार्श्वगतौ वीरमहावीरौ सुदंष्ट्रिणौ
अग्रे चास्यं तथा न्यस्य गणराजस्य वाहनम् ८०

सर्वानितान्न्यसेन्मन्त्री स्वस्वनामपदान्वितान्
एतानप्यधिवास्यैवं प्रतिष्ठान्ते यथास्थिति ८१
पीठेषु स्थापयेन्मन्त्री देवाग्रादि यथाक्रमम्
एवं संस्थापितो देवः सर्वान्कामान्प्रयच्छति ८२
विशेषात्पुत्रकामस्तु स्थापयेत्तं गणेश्वरम् ८३

इत्यजिताख्ये महातन्त्रे क्रियापादे
विनायकस्थापनविधिरेकोनपञ्चाशः पटलः

## पञ्चाशः पटलः
## स्कन्दस्थापनविधिः

स्कन्दस्य स्थापनं वक्ष्ये तस्योत्पत्तिपुरःसरम्
तन्मन्त्रं तत्समासेन शृणु सर्वं सुराधिप १
स्कन्दो मदङ्गसंभूतो मद्वीर्यो मत्पराक्रमः
मयैव हि पुरा सृष्ट उमपुत्रो जगद्धितः २
अग्निभूतः स चैवेति तस्याग्नेयत्वमुच्यते
अयोनिजन्मसंप्राप्तये तत्सुरवरेष्वहम् ३
वैश्वानरमुखे पूर्वं मद्वीर्यं तु न्यषिक्त यत्
सोऽपि सोढुमशक्तस्तत्प्रविश्य शरधानकम् ४
ससर्ज तत्र तद्वीर्यं तत्तु कालवशात्पुनः
व्यक्ताङ्गोऽभूत्सुरस्तत्र दीप्तकालानलप्रभः ५
तेनाग्नेयः समुद्दिष्टः शरजन्मा च तेन वै
स्कन्दः कुमारः सेनानीः सुब्रह्मण्यो गुरुस्तथा ६
एतैरन्यैश्च बहुभिर्नामभिः समुदीरितः
स्कन्दयेत्सर्वपापेभ्य इति स्कन्दत्वमस्य वै ७

कुत्सितान्मारयत्येष कुमारत्वेन कीर्तितः
सेनानीत्वं च तस्यापि देवसेनाभिरक्षणात् ८
तस्य प्रतिष्ठा पूजा च मन्त्रेणैव हि साध्यते
तस्मान्मन्त्रं प्रवक्ष्यामि चतुर्वर्गफलप्रदम् ९
अष्टमस्य द्वितीयान्तो द्वितीयाद्येन संयुतः
बीजेन प्रथमाद्येन संयुक्तो मूलमुच्यते १०
बिन्दुनादसमायुक्तश्चतुर्थ्यन्तेन तेन वै
अभिधानेन संयुक्तो नमस्कारान्तयोजितः ११
अङ्गानि हृदयादीनि पूर्ववत्परिकल्पयेत्
सुब्रह्मण्याय विद्महे शक्तिहस्ताय धीमहि १२
तन्नः स्कन्दः प्रचोदयादिति गायत्रिमुच्चरन्
गायत्री च भवेत्तस्य तत्प्रतिष्ठात्र कथ्यते १३
लिङ्गस्थापनयोग्येषु स्थापने स्थापनं भवेत्
उक्तस्थानेषु संस्थाप्यो ग्रामादौ च शिवालये १४
कल्पिते धाम्नि तस्याग्रे पार्श्वयोरुभयोस्ततः
पूर्ववन्मण्टपं कृत्वा कुण्डवेदिसमन्वितम् १५
विशेषोऽयं भवेत्तत्र प्रधानं स्यात्षडश्रकम्
गोमयालेपिते तस्मिन्पूर्ववत्संस्कृते ततः १६
नेत्रोन्मीलनकर्मास्य कुर्याद्वै स्नानमण्टपे
षड्वक्त्रैकमुखा चापि स्वतन्त्रप्रतिमा भवेत् १७
गौणे तु प्रतिमा स्थाप्या भवेदेकमुखा हरे
प्रतिमां स्थण्डिले स्थाप्य पूर्वस्य पूर्ववत्कृते १८
वर्तयेन्नयनं चात्र हेमसूच्या च शिल्पिना
तस्य कर्मणि निर्वृत्ते प्रोक्षयित्वा कुशाम्भसा १९

स्कन्दगायत्रिया पश्चाद्द्वादशाक्षि क्षिपेत्क्रमात्
दक्षिणेतरयोश्चापि न्यस्यार्केन्द्वोरणू क्रमात् २०
मधु दुग्धं च हेमादिपात्रस्थं प्रस्थसंमितम्
तस्याग्रे स्थण्डिले स्थाप्य प्रोक्षयित्वा शिवाम्भसा २१
मुद्रया चामृतीकृत्य तत्राथो धेनुसंज्ञया
हैमया दूर्वया मन्त्री दक्षिणेतरयोरपि २२
मधुना पयसा चैव तर्पयेन्नेत्रमुच्चरन्
त्रिनेत्राय ददेत्तच्च ललाटे लोचने सुधीः २३
अग्निमन्त्रं तु विन्यस्य तर्पयेत्सर्पिषा तथा
ततो यवनिकां तत्र विसृज्य यतिभूसुरान् २४
गां च गायत्रिमन्त्रेण दर्शयेद्देशिकोत्तमः
पञ्चमृत्पञ्चगव्यैश्च प्रतिमाशुद्धिमादिशेत् २५
ततश्च गन्धतोयेन स्कन्दगायत्रिमुच्चरन्
अभिषिच्य ततो नीत्वा ग्रामादौ च प्रदक्षिणम् २६
ततो जलाशयं नीत्वा तत्तीरे स्थाप्य देशिकः
अभिषिच्य ततो वस्त्रकूर्चमालाभिरत्र तु २७
प्रतिमां सम्यगावेष्ट्य दत्त्वार्घ्यं तस्य मूर्धनि
निवेशयेज्जलस्यान्तः पूर्वोक्तविधिना सुधीः २८
नीत्वा जलान्ततस्तत्र स्नानमण्टपमानयेत्
तत्रैव स्नानवेद्यां तु स्थाप्यार्चां प्राङ्मुखां ततः २९
वस्त्रकूर्चादिकं न्यस्य स्कन्दगायत्रिमुच्चरन्
अभिषिच्याम्बुना कुर्यात्पुण्याहं विधिवत्सुधीः ३०
ततश्च कौतुकं हैमं बन्धयेद्धृदयं स्मरन्
पूर्ववच्चाभिवेष्ट्यार्चां कूर्चवस्त्रादिभिः क्रमात् ३१

मराटपे स्थरािडले वेद्यां शयनं चापि पूर्ववत्
संस्थाप्याथ च संप्रोन्द्य देवानभ्यर्च्य देशिकः ३२
आनयेत्प्रतिमां तत्र शयने शाययेत्ततः
प्राक्शिरस्कोर्ध्ववक्त्रां तां ततो रक्तेन वाससा ३३
आच्छाद्य च ततः कुम्भान्स्थापयेत्तच्छिरोऽन्तके
हेमादिनिर्मितं रम्यं द्रोणपूरं मनोरमम् ३४
सितसूत्रविचित्रं च गन्धतोयेन पूरितम्
पञ्चरत्नसमायुक्तं सकूर्चं सापिधानकम् ३५
वस्त्रेण वेष्टितग्रीवं मालापल्लवशोभितम्
परिच्छदघटानष्टौ तदर्धपरिमाणकान् ३६
तादृशान्स्थापयेन्मन्त्री प्रागादिषु समन्ततः
वेद्या दक्षिणपार्श्वेऽथ समानीय ह्युदङ्मुखः ३७
प्राणायामत्रयं कृत्वा कुर्यान्मन्त्रात्मिकां तनुम्
अङ्गन्यासकरन्यासं तन्मन्त्रेणैव कारयेत् ३८
यथा बहिः स्थितं रूपं ध्यात्वा तस्य गुहस्य तु
ततः प्रधानकुम्भे तमेवं प्राणपथा सुधीः ३९
आवाह्य स्थापयेत्तत्र संनिधीकृत्य रोधयेत्
मूलमन्त्रेण तत्सर्वं कुर्यात्तन्त्रोक्तमुद्रया ४०
ततो गन्धादिभिश्चापि गुहं सम्यक् समर्चयेत्
देशेषु दिग्विदिक्स्थेषु पूर्वादिकलशेषु च ४१
विद्येशान्गन्धपुष्पाद्यैर्यजेत्सर्वं प्रदर्शयेत्
हविर्निवेदनं पश्चात्सर्वेषामपि कारयेत् ४२
ततो होमं तु कुराडेषु देशिको मूर्तिपैः सह
आसनं तत्र कुर्वीत कुराडसंस्कारपूर्वकम् ४३

होतारः साधकाः प्रोक्ताः पुत्रकास्तदलाभके
ततः शान्तमनाः कुण्डे गुहदेवं प्रधानके ४४
स्कन्दं सर्वामरेशानं पूजयेत्पूर्ववत्सुधीः
शेषेष्वपि च विद्येशान्कुण्डेषु परितो यजेत् ४५
पञ्चहोमे तथा प्रोक्ताः कोणसंस्था विवर्जिताः
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ४६
शतमर्धं तदर्धं वा होमद्रव्यं च सर्वकम्
सर्वत्रैव समिद्धोमं मूलमन्त्रेण कारयेत् ४७
आज्यादिषट् षडङ्गैस्तु होमयेद्धोतृभिः सह
द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं च संस्पृशेत् ४८
तत्तदङ्गानि देवस्य तत्तदङ्गं समुच्चरन्
ततस्तु मूलमन्त्रेण फलभक्ष्याणि होमयेत् ४९
ततो गायत्रिमुच्चार्य घृतेनैव दशाहुतीः
सर्वे हुत्वा तु कुण्डेषु रात्रौ होमं समापयेत् ५०
प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात्
शम्यर्कखदिराश्चैव ह्यपामार्गो विदिक्षु च ५१
पलाशस्तु प्रधानस्य तैरेव परिधिर्भवेत्
होमकाले वदेद्दिक्षु वेदाध्ययनमुत्तमम् ५२
शांकरेऽस्त्रजपः कार्यः साधकेन समन्वितः
एवं सर्वं गुरुर्नीत्वा रात्रिं जागरतस्ततः ५३
प्रभाते मूर्तिपैः सार्धं स्नानं कृत्वा च नैत्यकम्
प्रविश्य मण्टपं तत्र देवानभ्यर्च्य पूर्ववत् ५४
पूर्णां च मूलमन्त्रेण सर्वत्रापि प्रदापयेत्
आचार्यः शिल्पिना सार्धं स्थापयेच्छिवलग्नके ५५

स्कन्दगायत्रिमुच्चार्य देवमुत्थाप्य यत्नतः
प्रदक्षिणं समानीय प्रासादं संप्रविश्य च ५६
रत्नलोहादिकान्सर्वाँल्लिङ्गस्य स्थापने यथा
पीठावटे तथा न्यस्य शक्तिचक्रं यजेत्ततः ५७
प्रतिमां निश्चलां स्थाप्य सुश्लिष्टं कारयेत्ततः
स्नात्वाचम्य शुचिर्भूत्वा देशिकः शान्तमानसः ५८
मन्त्रिताम्भस्ततो नीत्वा गत्वा मण्टपमध्यमम्
तत्र पुण्याहमारभ्य प्रविश्य भवनं गुरुः ५९
प्रोक्षयित्वा गृहं मन्त्री ब्रह्मभिः पञ्चभिः क्रमात्
प्रतिमां बहुशस्तोयैः शुद्धिं कृत्वा तु देशिकः ६०
गन्धचन्दनलिप्ताङ्गो बद्धपञ्चाङ्गभूषणः
ससद्वासाः स्थितः सूक्ष्ममुत्तरीयं दधत्तदा ६१
उष्णीषं च तथैवान्यत्प्रसन्नः प्रियदर्शनः
मूर्तिपैः सोत्तरीयैश्च जापिभिश्च तथाविधैः ६२
कृतमन्त्रतनुस्तत्र प्रधानं कुम्भमुद्वहन्
स्कन्दस्य तं विशेषात्तु प्रासादं तु प्रदक्षिणम् ६३
बेराग्रे विन्यसेत्कुम्भं देवाग्रे स्कन्दमाश्रितम्
विद्येशांश्चैव परितो होतारः कलशाष्टकम् ६४
कुम्भकूर्चाम्भसा मन्त्री विन्यसेत्प्रतिमाहृदि
स्थूलादिसूक्ष्मपर्यन्तं मन्त्ररूपं जनार्दन ६५
स्नापयेत्स्थापकस्तत्र ततोऽङ्गानि च विन्यसेत्
विद्येशान्कलशांश्चापि क्रमात्तत्राभिषेचयेत् ६६
अवर्गं मूर्ध्नि विन्यस्य कवर्गं दक्षिणे न्यसेत्
चवर्गं वामहस्ते तु टवर्गं हृदये न्यसेत् ६७

तवर्गं कुक्षिप्रदेशे तु पवर्गं पृष्ठतो न्यसेत्
यवर्गं दक्षिणे पादे शवर्गं वामके न्यसेत्  ६८
ळकारं मेढ्रदेशे तु कूटं च हृदये न्यसेत्
तारं सर्वत्रमप्यस्य स्कन्दगायत्रिमुच्चरन्  ६९
सर्ववर्गेषु विन्यस्य पुत्रमूलं हृदि न्यसेत्
अङ्गानि चाङ्गेष्वाधाय स्नपनोक्तविधानतः  ७०
अभिषिच्य पुनः शुद्धिं कृत्वा मन्त्रान्पुरोक्तवत्
विन्यस्य स्कन्ददेवस्य शुभस्याग्रे महात्मनः  ७१
अर्घ्यं च मूर्ध्नि विन्यस्य गन्धपुष्पादिभिः शुभैः
मूलमन्त्रैः समं पूज्य चन्दनेनानुलिप्य च  ७२
मालाभरणवस्त्रैश्च यत्नेनैव समर्चयेत्
हविर्निवेदयेत्पश्चाद् महद्व्यञ्जनसंयुतम्  ७३
शैवांश्चतुर्विधांस्तत्र ब्राह्मणान्भोजयेत्ततः
प्रागुक्ताच्च विशेषोऽयं प्रधाने तूपदिश्यते  ७४
प्रासादस्य भवेद्द्वारं पश्चिमाभिमुखं तथा
प्राङ्मुखं वा परीवाराँल्लोकपालान्प्रवर्तयेत्  ७५
विशाखनैगमेयौ च दक्षिणेतरयोरपि
पार्श्वयोर्द्वारपालौ च मयूरं वाहनं तथा  ७६
यथास्थानं प्रतिष्ठाप्य कलशेष्वभितो न्यसेत्
वेदिकायास्तु परितो भूमौ संस्थाप्य मन्त्रवित्  ७७
स्वस्वनामपदैर्मन्त्रैरर्चयित्वा यथाक्रमम्
एवं यो विधिना देवगुहस्थापनतो नरः  ७८
पुत्रार्थी पुत्रमाप्नोति जयार्थी जयभाग्भवेत्
विद्यार्थी लभते विद्यां सोऽन्ते सायुज्यमाप्नुयात्  ७९

इत्यजिताख्ये महातन्त्रे क्रियपादे स्कन्दस्थापनविधिः पञ्चाशः पटलः

## एकपञ्चाशः पटलः

अथेदं स्थापनं वक्ष्ये चण्डेशस्य जनार्दन
उत्पत्तिं मन्त्रपूर्वां तु समासाच्छृणु सांप्रतम् १
चण्डः स्वभावात्सन्पूर्वं शिवार्चनपरायणः
यक्षरक्षःपिशाचाद्या गणत्वं च पुरा गताः २
शिवाज्ञया हि चण्डत्वे तिष्ठन्तो दुःसहा सुरैः
विरिञ्चेन्द्रमुखैश्चापि दुर्धर्षाश्चण्डविक्रमाः ३
चण्डस्वभावस्तेषां यो नाशकोऽभूच्छिवाज्ञया
चण्डेश्वराय विद्महे टङ्कहस्ताय धीमहि ४
तन्नश्चण्डः प्रचोदयादिति गायत्रिमुच्चरेत्
गायत्रीयं भवेत्तस्य मन्त्राः सर्वेऽप्युदाहृताः ५
प्रतिष्ठाविधिरप्यस्य कथ्यतेऽद्य समासतः
शिवालयेशदिग्भागे दक्षिणद्वारसंयुते ६
प्रासादे स्थापनीयोऽयमन्यत्र न हि कुत्रचित्
प्रासादस्याग्रके वाथ पार्श्वयोरुभयोस्तु वा ७
मण्टपं विधिना कृत्वा तस्मिन्कुण्डानि कल्पयेत्
आशासु चतुरश्राणि वृत्तान्यग्न्यादिषु क्रमात् ८
शक्रशांकरयोर्मध्ये वृत्तं प्राधान्यमुच्यते
पञ्चहोमे तु पद्मं तु शांकरे परिकल्पयेत् ९
हित्वा वृत्तानि सर्वाणि संस्कारादि यथा पुरा
मण्टपस्य प्रयुञ्जीत ततोऽक्ष्युन्मीलनक्रियाम् १०

मण्टपस्य तु पार्श्वस्थे कुर्याद्वै स्नानमण्टपे
स्थण्डिलं शालिभिः कृत्वा तन्मध्ये स्थाप्य देशिकः ११
प्रतिमां प्राङ्मुखामत्र परितोऽभ्यर्च्य दिक्पतीन्
सास्त्रान्मूलेन संप्रोक्ष्य शिल्पिना वर्तयेत्ततः १२
सूच्या तु हैमया सर्वा रेखा नेत्रत्रयेषु च
शिल्पिकर्मणि निर्वृत्ते मधु सर्पिः पयः क्रमात् १३
संगृह्य पूर्ववत्पात्रे बेराग्रे स्थापयेत्ततः
सौवर्णं कमलं तेषु न्यस्य पात्रेषु देशिकः १४
अस्त्रमन्त्रं समुच्चार्य प्रोक्षयेत्तान्पृथक् पृथक्
हैमया दूर्वया पश्चान्मधु नेत्रे तु दक्षिणे १५
सर्पिर्वामे ललाटे च दुग्धं चाप्यथ तर्पयेत्
नेत्रमन्त्रं गृणन्मन्त्री ततः स्वर्णनखान्वितैः १६
अङ्गुल्यग्रैस्त्रिभिश्चापि नेत्रमन्त्रं त्रिषु न्यसेत्
पञ्चमृत्पञ्चगव्यैश्च कृत्वा शुद्धिं ततः सुधीः १७
पुण्याहं वाचयित्वा तु ब्राह्मणान्गाश्च दर्शयेत्
ततो जलाधिवासाय जलतीरं समानयेत् १८
तत्र स्थाप्य तथा देवं स्नाप्य गायत्रिमुच्चरन्
आवेष्ट्य कूर्चवस्त्राभ्यामस्त्रमन्त्रं समुच्चरन् १९
प्रणवेन शिरस्यर्घ्यं दत्त्वा तज्जलमध्यमे
पूर्ववच्छाययेन्मन्त्री चण्डमूलमनुस्मरन् २०
परितो दिक्पतीन्सास्त्रानर्चयेच्च यथाक्रमम्
उक्तकालेऽप्यतीतेऽथ स्नानमण्टपमानयेत् २१
शङ्खभेर्यादिनिर्घोषैः प्रतिमां वेदिकोपरि
ततः संस्थाप्य तद्वस्त्रं कूर्चं चापि परित्यजेत् २२

ततः शुद्धोदकेनैव प्रतिमामग्निषेचयेत्
तस्य गायत्रिमुच्चार्य गन्धोदेनाभिषेचयेत् २३
कौतुकं च हृदा बध्वा वेष्टयेत्प्रतिमां ततः
कूर्चेन वाससा चैव ततोऽर्घ्यं शिरसि न्यसेत् २४
ततो मण्टपवेद्यां तु पूर्ववत्कल्पिते शुभे
स्थण्डिले शयनं चापि पूर्ववत्परिकल्पयेत् २५
शाययेत्प्रतिमां मन्त्री प्राक्शिरश्चोर्ध्ववक्त्रकाम्
मूलमन्त्रं समुच्चार्य सर्वातोद्यसमन्वितम् २६
ततश्चण्डेश्वरं देवं छादयेत्पीतवाससा
ततश्चण्डाधिपं कुम्भं सर्वलक्षणसंयुतम् २७
हेमटङ्कसमोपेतं गन्धोदपरिपूरितम्
वस्त्रकूर्चापिधानाढ्यं शिरोभागेऽथ विन्यसेत् २८
परितश्च घटानष्टौ तपस्वी तादृशान्न्यसेत्
मन्त्रात्मिकां तनुं पश्चात्पूर्ववत्कारयेत्सुधीः २९
आवाहयेत्ततश्चण्डं ध्यात्वा हृदि समाहितः
यथा बहिः स्थितं रूपं कुम्भे तस्मिन्प्रसन्नधीः ३०
आवाहनादिभिः पश्चान्मूलमन्त्रं समुच्चरन्
गन्धपुष्पादिभिर्मन्त्रैः पूजयेत्परितः स्थितान् ३१
तत्रस्थानपि देवांस्तु पूर्वादि परितो यजेत्
ततो होमं प्रकुर्वीत कृत्वा कुण्डेषु च क्रमात् ३२
कुण्डसंस्कारपूर्वं तु वह्निं संस्थाप्य पूर्ववत्
कुण्डेषु कुम्भवद्देवान्संस्थाप्याभ्यर्चयेत्ततः ३३
युक्तो वाहादिभिर्मन्त्री होमं सर्वत्र कारयेत्
समिदाज्यचरूणां तु तिलसर्षपयोस्तथा ३४

मुद्गमाषयवानां च प्रत्येकं तु शताहुतीः
तदर्धं वा क्रमान्मूलमन्त्राङ्गैश्च यथाक्रमम्  ३५
गायत्र्या सह कुर्यात्तु प्रतिद्रव्यं तु सर्पिषा
हुत्वा व्याहृतिमन्त्रैस्तु देशिको होतृभिः सह  ३६
तत्तदङ्गं स्पृशेन्मन्त्री बेरस्य पुष्पपाणिना
सर्वद्रव्यावसाने तु कुण्डेशानां दशाहुतीः  ३७
सर्पिषा जुहुयात्पश्चात्परिषिच्य समाचरेत्
ततो हविश्च देवानां कुम्भस्थानां प्रदापयेत्  ३८
ताम्बूलं च ततो दत्त्वा नीत्वा रात्रिं तु देशिकः
प्रभाते कृतनित्यस्तु मण्टपं संप्रविश्य च  ३९
मन्त्रात्मिकां तनुं कृत्वा पुष्पैर्देवांश्च पूजयेत्
सर्वकुण्डेषु संपूज्य देवान्व्याहृतिपूर्वकम्  ४०
स्रुचा पूर्णाहुतिं दद्यान्मूलमन्त्रं समुच्चरन्
परिषिच्य ततो देवान्कुण्डेऽभ्यर्च्य विवर्जयेत्  ४१
परिधीन्विष्टरांश्चैव संप्रोक्ष्याग्नौ विनिक्षिपेत्
ततो गर्भगृहं गत्वा ब्राह्मे दिव्येऽथवा पदे  ४२
स्थाप्याधारशिलां तत्र रत्नादि विधिवन्न्यसेत्
ततो मण्टपमागम्य बेरमुद्धृत्य मूलतः  ४३
वस्त्रादिकं समुत्सृज्य दत्त्वार्घ्यं शिरसि क्रमात्
रथादिषु समारोप्य कृत्वा धामप्रदक्षिणम्  ४४
नीत्वा गर्भगृहं तत्र स्थापयेत्संस्पृशञ्छिरः
मूलविद्यां भणन्मन्त्री शिल्पिना सह देशिकः  ४५
शिल्पिकर्मणि निर्वृत्ते तमुद्वास्याथ शिल्पिनम्
स्नात्वा विद्यात्मकं देहं कृत्वा पुण्याहमत्र तु  ४६

गर्भगेहे ततो बेरं पञ्चमृत्पञ्चगव्यकैः
शोधयित्वा हृदा मन्त्री गन्धोदेनाभिषिच्य च ४७
ततस्तान्मण्टपे कुम्भान्यथापूर्वं समानयेत्
बेराग्रे स्थण्डिले तांश्च यथापूर्वं तु विन्यसेत् ४८
तत्रोदङ्मुखमाविश्य पूर्ववत्सकलीकृतः
ध्यात्वा देवं तु कुम्भस्थं यथापूर्वं तु देशिकः ४९
मूलविद्यां समुच्चार्य ततः कूर्चसृताम्भसा
प्रतिमाहृदि कुम्भस्थदेवं विन्यस्य पूजयेत् ५०
गन्धादिभिस्तु मूलेन ततोऽङ्गानि यथास्थिति
अङ्गेषु तेषु विन्यस्य ततश्चाभ्यर्चयेच्छनैः ५१
ततो हारादिकं न्यस्य पूर्वादारभ्य विन्यसेत्
चण्डेशमभिषिच्याथ पुनर्मन्त्रांश्च विन्यसेत् ५२
प्रणवं मूर्ध्नि विन्यस्य मूलं वक्त्रेऽथ विन्यसेत्
पुनश्च हृदये तारं गायत्रीं कुक्षिदेशके ५३
पादयोरुभयोश्चापि चण्डबीजं ततो न्यसेत्
गन्धादिभिः समभ्यर्च्य कृत्वा पूजां विशेषतः ५४
लिङ्गे निवेदयित्वाथ पायसं घृतसंयुतम्
ततस्तच्चण्डमूलेन चण्डेशाय प्रदापयेत् ५५
ताम्बूलं च ततो दद्याद्द्यान्मालादिकं ततः
एवं प्रतिदिनं दद्याच्छिवलिङ्गे निवेदितम् ५६
एवं वै स्थापयेन्मर्त्यश्चण्डेशं तु शिवालये
सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात् ५७

इत्यजिताख्ये महातन्त्रे क्रियापादे चण्डेशस्थापनविधिरेकपञ्चाशः पटलः

## द्विपञ्चाशः पटलः

ज्येष्ठायाः स्थापनं वक्ष्ये तदुत्पत्तिपुरःसरम्
तन्मन्त्रं च समासेन शृणु सर्वं जनार्दन १
आदिशक्तेः समुत्पन्ना पश्चादुदधिसंभवा
उदधौ मथ्यमाने सा चोत्थिता सुरसत्तम २
तदुत्पत्तिरिति प्रोक्ता मन्त्रांस्तस्या वदामि ते
तृतीयस्य तृतीयं तत्सप्तमाद्येन संयुतम् ३
प्रथमैकादशेनापि तन्मूलं बिन्दुनादयुक्
तारमादौ समुच्चार्य ततो मूलमुदीर्य च ४
ज्येष्ठापदं चतुर्थ्यन्तमन्ते चापि नमःपदम्
संयोज्योच्चारयेन्मन्त्रं मूलमन्त्रमिति स्मृतम् ५
जकारेणैव चाङ्गानि हृदयादीनि कल्पयेत्
फलप्रदायै विद्महे पापहन्त्र्यै च धीमहि ६
तन्नो ज्येष्ठा प्रचोदयाद्गायत्रीयं प्रकीर्तिता
स्वनामाद्यक्षरं चैव बिन्दुनादसमन्वितम् ७
प्रणवादिनमोऽन्तं चाप्यन्येषां मन्त्रमुच्यते
एवं मन्त्राः समुद्दिष्टाः प्रतिष्ठाविधिरुच्यते ८
लिङ्गस्थापनयोग्येषु स्थानेष्वपि शिवालये
ग्रामादिष्वपि चोक्तेषु स्थानेष्वेनां प्रकल्पयेत् ९
तदग्रे मण्टपं कुर्यात्पूर्ववत्पार्श्वयोस्तथा
तत्र वेद्यास्तु परितः कुर्यात्कुण्डचतुष्टयम् १०
योन्याकारं प्रधानं स्याच्छेषं पूर्ववदाचरेत्
नेत्रोन्मीलनकर्मार्थं प्रतिमास्ताः समानयेत् ११

स्नानमगटपमध्ये तु स्थगिडलं परिकल्पयेत्
विन्यस्य प्रतिमास्तासां नेत्रोन्मीलनकर्म च १२
शिल्पिना कारयित्वाथ मध्वाज्याभ्यां च पूर्ववत्
तर्पयित्वाद्गिमन्त्रेण तत्तन्नेत्रेषु देशिकः १३
पूर्ववत्प्रतिमाशुद्धिं कृत्वा गत्वा जलाशयम्
तत्तीरे ताश्च विन्यस्य कृत्वा पुगयाहमप्यथ १४
अभिषिच्य प्रतिमास्ताः कूर्चमालांशुकैस्तथा
आवेष्टयाभ्यर्च्य ता मन्त्री जलस्यान्तः प्रविश्य च १५
तत्राधिवास्य चार्चास्ताः कालं नीत्वा तु पूर्ववत्
स्नानमगटपमानीय वस्त्रकूर्चादिकं त्यजेत् १६
मूलेन तु शिरस्यर्घ्यं तासां दत्त्वा क्रमेण तु
अभिषिच्य पुनर्गन्धतोयेन सुसमाहितः १७
कूर्चमालादिकैः पश्चाद्वेष्टनं कौतुके कृते
कृत्वा पुगयाहपूर्वं तु वेद्यां तत्र प्रकल्पिते १८
स्थगिडले शयने विष्णो रम्ये पूर्ववदास्तृते
शाययेत्प्रतिमाः सर्वाः प्राक्शिरश्चोर्ध्ववक्त्रकाः १९
तासां मूर्धप्रदेशे तु विन्यसेत्कलशत्रयम्
पूर्वोक्तलज्ञणोपेतान्परितोऽष्टौ च विन्यसेत् २०
तेषु मध्ये यजेज्ज्येष्ठां वृषमान्ये च पार्श्वयोः
दज्ञिणेतरयोर्यष्ट्वा परितः कलशेष्वपि २१
तमा मोहा ज्ञुधा निद्रा मृत्युर्माया जरा भया
विन्यस्य पूजयेत्सर्वा गन्धपुष्पादिभिः क्रमात् २२
होमयेच्च ततो मन्त्री होतृभिः सह पूर्ववत्
कृत्वा कुगडाग्निसंस्कारं पूर्वादिष्वथ पूजयेत् २३

कुण्डेषु वामां रौद्रीं च कालीं कलविकरणीमपि
बलविकरणीं देवीं ज्येष्ठां यष्ट्वा प्रधानके २४
वृषमान्यासमायुक्तां ततो होमं समारभेत्
समिदाज्यचरूँल्लाजान्सक्त्वपूपतिलांस्तथा २५
मूलादिहेतिपर्यन्तैरणुभिः सप्तभिः क्रमात्
हुत्वा गायत्रिया चैव जुहुयात्सर्पिषा ततः २६
शतमर्धं तदर्धं वा प्रधाने वृषमान्ययोः
सर्वद्रव्यैश्च जुहुयात्तत्तन्मन्त्रेण देशिकः २७
प्रतिद्रव्यावसाने तु व्याहृत्यन्ते स्पृशेद्गुरुः
मूर्तिपैः सह मन्त्रैस्तु तत्तदङ्गानि च क्रमात् २८
प्लक्षोदुम्बरमश्वत्थं वटं पूर्वादिषु क्रमात्
समिदर्थं पलाशं तु प्रधानस्य समाचरेत् २९
होमकाले चतुर्दिक्षु वेदाध्ययनमुच्यते
कुण्डस्थानां तु देवानां हविस्तत्र निवेदयेत् ३०
एवं कृत्वा तु तद्धोमं नीत्वा रात्रिं तु जागरात्
ज्येष्ठामूलेन मन्त्रेण ततः स्थापनमारभेत् ३१
प्रभाते कृतनित्यस्तु देशिको मूर्तिपैः सह
प्रविश्य मण्टपं तत्र कृतमन्त्रतनुस्तदा ३२
संपूज्य देवताः सर्वाः पूर्णां सर्वत्र होमयेत्
प्रतिमास्ताः समुत्थाप्य त्यक्त्वा वस्त्रादिकं ततः ३३
रथादिषु समारोप्य कृत्वा धाम्नि प्रदक्षिणम्
गर्भगेहं प्रविश्याथ रत्नादीनि च पूर्ववत् ३४
विन्यस्य स्थापयेत्तत्र प्रतिमास्ताः क्रमेण वै
भिन्नरूपास्त्वथैकत्र मध्ये दक्षिणवामयोः ३५

तत्तन्मूलं समुच्चार्य शिरः संस्थापकः स्पृशेत्
शिल्पिकर्मणि निर्वृत्ते तमुद्वास्य ततो गुरुः ३६
स्नात्वाचम्य ततः कृत्वा पुण्याहं तत्र धामनि
पञ्चगव्येन संस्नाप्य तत्तद्गायत्रिमन्त्रतः ३७
कुम्भान्सर्वान्समुत्थाप्य वहित्वांसे तथा गुरुः
मूर्तिपैः सह तद्धाम्नि कृत्वा धामप्रदक्षिणम् ३८
अन्तः प्रविश्य वेद्यग्रे स्थाप्य च स्थण्डिलोपरि
विन्यसेन्मन्त्ररूपं तु ध्यात्वा कुम्भांश्च देवताः ३९
तत्तत्कूर्चस्थितेनैव तोयेन प्रतिमाहृदि
ततोऽङ्गानि च तस्यास्तु यथास्थानं तु विन्यसेत् ४०
मातृकाश्च ततो न्यस्य ततश्च वृषमान्ययोः
मन्त्रं पूर्ववदाधाय ततश्च परितस्ततः ४१
अभिषिच्य तु तैः कुम्भैर्नैवेद्यान्तं समर्चयेत्
गौणप्रधानयोरेवमुक्तः साधारणो विधिः ४२
प्रधानेऽपि विशेषोऽयं कथ्यतेऽत्र जनार्दन
विद्युज्जिह्वां विशालाक्षीं दक्षिणेतरयोरपि ४३
पार्श्वयोस्तु प्रतिहारे रक्षार्थं पूर्ववन्न्यसेत्
करालीं कपिलाक्षीं च विमलां विभुजामपि ४४
भास्वरां विततां चैव कीकसां कद्रुमेव च
पूर्वादिषु घटेष्वष्टावष्टसु क्रमतो न्यसेत् ४५
काकामत्रे च तद्वेद्यां घटे विन्यस्य पूजयेत्
एवं कालेऽधिवास्यैताः शक्तीर्वाहनसंयुताः ४६
प्रतिष्ठानन्तरं वापि विन्यसेत्परितो गुरुः
एवं संस्थापयेज्ज्येष्ठां सद्योऽलक्ष्मीर्विमुञ्चति ४७

धनधान्यादिकं सर्वं पुत्रपौत्रादिकं तथा
वर्धते तस्य देवेश नात्र कार्या विचारणा ४८
इत्यजिताख्ये महातन्त्रे क्रियापादे ज्येष्ठास्थापनविधिर्द्विपञ्चाशः पटलः

## त्रिपञ्चाशः पटलः

## दुर्गास्थापनविधिः

दुर्गायाः स्थापनं वक्ष्ये तदुत्पत्तिपुरस्सरम्
तन्मन्त्रं च समासेन शृणु सर्वं सुरोत्तम १
पुरा कालीति सा दिष्टा मया रहसि मानिनी
चुकोपोमा वचो मह्यं प्रयुक्तं निन्दितं त्विति २
ततश्च सान्त्वनैश्चापि मदीयैर्नैष्यते शमम्
उवाचोमा महावर्णं मह्यमिच्छाम्यहेयवत् ३
इत्युक्तोऽहं तया तस्या वर्णं निर्मातुमुद्यतः
तनुस्तन्नेच्छती देवी तपसा तप्तुमुद्यता ४
तपस्तेपे ततस्तस्या उमायाः कमलासनः
अनुज्ञातो मया वर्णं दत्तवानिष्टमुत्तमम् ५
तदा ब्रह्माभ्यवोचत्तां यदि मुञ्चेस्तु शोभने
वर्णमेतज्जगन्मातर्जगद्रक्षार्थमव्यये ६
वर्णं तत्कोशवद्भित्वा त्वच्छक्त्या परया युताम्
विक्रमां हरिणा देवीं कौशिकीं हर मानयेः ७
इत्युक्ता सा तदा देवी ब्रह्मणा तदधात्करे
तस्माद्देवी च शक्तिं च स्वायुधानि बहूनि च ८
दत्त्वाचोद्भासिता सर्वशत्रूणां जयकाङ्क्षया

सा दुर्गा कौशिकी चराडी भवानी च निगद्यते ९
तदुत्पत्तिरिति प्रोक्ता मन्त्रं तस्या वदामि ते
पञ्चमस्य तृतीयं यत्पञ्चमस्वरसंयुतम् १०
बिन्दुनादसमायुक्तं दुर्गामूलमिति स्मृतम्
तारमादौ समुच्चार्य ततो मूलमुदीर्य च ११
दुर्गापदं चतुर्थ्यन्तमन्ते चापि नमःपदम्
संयोज्योच्चारयेन्मन्त्रं दौर्गं सिद्धं सनातनम् १२
दकारेणैव चाङ्गानि हृदयादीनि कल्पयेत्
कन्यारूपपदं पूर्वं चतुर्थ्यन्तं समुच्चरेत् १३
विद्महे च ततश्चोक्तं शूलहस्तापदं ततः
चतुर्थ्यन्तं समुच्चार्य धीमहीति पदं ततः १४
तन्नो दुर्गेत्यथोच्चार्य प्रचोदयात्तदनन्तरम्
गायत्रीयं भवेद्देव्या दुर्गाया मन्त्रमुत्तमम् १५
एवं मन्त्राः समुद्दिष्टाः प्रतिष्ठाविधिरुच्यते
लिङ्गस्थापनयोग्येषु स्थानेष्वपि शिवालये १६
ग्रामादावपि चोक्तेषु स्थानेष्वस्याः प्रकल्पयेत्
प्रासादं हि ततः पूर्वद्वारं भुक्तिप्रदं नृणाम् १७
मुक्तिदं पश्चिमद्वारं पूर्वद्वारं जयावहम्
तदग्रे मराटपं कुर्यात्पूर्ववत्पार्श्वयोस्तथा १८
तत्र वेद्यास्तु परितः कुराडानि परिकल्पयेत्
आशासु चतुरश्राणि विदिक्षु चतसृष्वपि १९
योन्याकाराणि कुराडानि पद्मं च त्वीशशक्रयोः
मध्यस्थाने ततस्तस्य मराटपस्य तु पूर्ववत् २०
संस्कारादि प्रयुञ्जीत नेत्रोन्मीलनमप्यतः

कुर्यात्तस्य विधिश्चापि वक्ष्यते क्रमतोऽधुना  २१
स्नानमण्टपमध्ये तु देवीमानीय कौशिकीम्
स्थण्डिले तत्र तां देवीं प्राङ्मुखां संनिवेशयेत्  २२
नेत्रोन्मीलनकर्माणि कारयेच्छिल्पिना तदा
हैमसूच्या ततश्चापि रेखालेखनपूर्वकम्  २३
साधिते पूर्ववच्चैव त्रिनेत्रेषु च तर्पयेत्
दूर्वया हैमया पूर्वं दक्षिणे मधु वामके  २४
पयश्चाथ ललाटस्थे लोचने मधु चैव हि
सूर्यसोमाग्निमन्त्रैस्तु तत्तत्स्थानेषु विन्यसेत्  २५
हिरण्यनखसंप्रोतैस्तर्जन्याद्यङ्गुलैस्त्रिभिः
ततस्तु दर्शयेद्विप्रान्गाश्च गायत्रिमुच्चरन्  २६
ततस्तां पञ्चगव्यैश्च पञ्चमृद्भिश्च शोधयेत्
तस्या गायत्रिमुच्चार्य गन्धोदेनाभिषेचयेत्  २७
पुण्याहं वाचयित्वात्र प्रोक्षयेद्ब्रह्मपञ्चकैः
ग्राम प्रदक्षिणं कृत्वा जलतीरं समानयेत्  २८
प्रतिमां कण्ठदघ्ने तु चले चैवाधिवासयेत्
तस्या बाह्ये तु विद्येशानष्टौ कुम्भांस्तु विन्यसेत्  २९
सप्तरात्रं पञ्चरात्रं त्रिरात्रं चैकरात्रकम्
जलादुत्तीर्य पूर्वेद्युः पञ्चगव्येन स्नापयेत्  ३०
ततः प्रवेश्य देवेशीं शयनं तत्र कल्पयेत्
वेदिमध्ये तु देवेश्याः शालिना विकिरेत्ततः  ३१
पञ्चभिः कम्बलैश्चैव शाल्या पर्युपविन्यसेत्
मूलमन्त्रेण देवेशीप्रतिमां कम्बलोपरि  ३२
वर्धन्यष्टकमादाय पूर्वादीशान्तकं न्यसेत्

वामादिशक्तयोऽष्टौ तु मनोन्मनीमीशदेशतः ३३
गन्धपुष्पादिभिश्चैव हविषा पूजयेत्ततः
ततो होमं प्रकुर्वीत लक्षणेन समन्वितम् ३४
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः
दुर्गाबीजेन मन्त्रेण ब्रह्मैरङ्गैश्च मन्त्रकैः ३५
होमं कुर्याद्विशेषेण यथाविभवविस्तरम्
समिदाज्यचरूँल्लाजान्सर्षपांश्च हुनेद्बुधः ३६
शतमर्धं तदर्धं वा पालाशी तु समिद्भवेत्
ततः प्रभाते विमले मुहूर्तं तु निरीक्षयेत् ३७
आचार्यपूजनं कृत्वा ऋत्विजः पूजयेत्ततः
प्रतिष्ठाकुम्भमादाय शिरसा धार्य बुद्धिमान् ३८
अन्तः प्रविश्य वेद्यग्रे स्थाप्य च स्थण्डिलोपरि
बेराग्रे विन्यसेत्कुम्भं प्रधानं चावृतैः सह ३९
ततश्च देशिको मन्त्री ध्यात्वा देवीं यथास्थिताम्
कुम्भस्थितां तु तां तेन कूम्भकूर्चयुतेन च ४०
अम्भसार्चाहृदि न्यासं कुर्यात्तन्मूलमुच्चरन्
अङ्गान्यङ्गेषु विन्यस्य गायत्रीं हृदये न्यसेत् ४१
मातृकां पूर्ववन्न्यस्य गन्धाद्यैरर्चयेत्ततः
अन्यैः कुम्भैश्च सर्वैस्तैरभिषिच्य क्रमेण वै ४२
तत्तन्मन्त्रं समुच्चार्य गन्धाद्यैः पुनरर्चयेत्
प्रभूतं तु हविर्दत्त्वा फलभक्ष्यादिसंयुतम् ४३
मुखवाससमायुक्तं ताम्बूलं च निवेदयेत्
गौणप्रधानयोरेवं प्रोक्तं सर्वं समं हरे ४४
प्रधाने तु विशेषोऽयं कथ्यतेऽद्य समासतः

उल्कामुखीं विजिह्वां च कल्पयेद्द्वारदेवते ४५
मृगेन्द्रं वाहनं तस्या अग्रतः परिकल्पयेत्
परितोऽष्टाविमास्तस्याः परिवाराः प्रकीर्तिताः ४६
अग्रे भूमिं समारभ्य ज्येष्ठां भूमिं तथैव च
मोटिं च मोहिनीं चैव प्रकृतिं विकृतिं तथा ४७
नियतिं च निवृत्तिं च सर्वास्ताः पूर्ववत्सुधीः
कलशेष्वधिवासाय स्थापयेत्स्थापकोत्तमः ४८
बाह्यस्थे च महापीठे स्थापयेत्पूतनागणम्
मन्त्रन्यासोत्तरे काले स्थापयेत्परिवारकम् ४९
त्रिसंध्यास्वर्चने काले परिवारांश्च पूजयेत्
वहन्नित्योत्सवं चैव त्रिसंध्यमपि कारयेत् ५०
एकाहं त्रियहं चापि भूताहं मुन्यहं तु वा
प्रतिसंवत्सरं कुर्याद्दौर्गे वा मधुमाधवे ५१
कृत्तिकान्तं तु विधिना कारयेच्च महोत्सवम्
एवं यः कुरुते मर्त्यः कौशिक्याः स्थापनं परम् ५२
आधिव्याधिविनिर्मुक्तः सर्वसंपत्समन्वितः
निर्मितं खलु वैरिञ्चं हत्वा तत्प्रत्यजायते ५३
सर्वदेवादिभिर्वन्द्यः स बलारिरिवापरः ५४

इत्यजिताख्ये महातन्त्रे क्रियापादे दुर्गास्थापनविधिस्त्रिपञ्चाशः पटलः

## चतुःपञ्चाशः पटलः

## सूर्यस्थापनविधिः

सूर्यस्य स्थापनं वक्ष्ये तस्योत्पत्तिपुरःसरम्

मन्त्रेण सह सर्वं तन्मत्तो निगदतः शृणु १
अष्टमूर्तेः शिवस्यैतन्मूर्तयोऽष्टौ प्रकीर्तिताः
सूर्याचन्द्रमसावात्मा महाभूतानि पञ्च च २
एतास्वष्टसु सूर्योऽयमग्रिमा मूर्तिरुच्यते
सूर्यमूर्त्या शिवो लोकान् सृजत्यवति दीप्तया ३
पुनः संहरतीशानस्तन्मूर्त्या स शिवस्य च
उत्पत्तिरेवमुक्ता च मन्त्रश्चाद्य निगद्यते ४
सान्तं यान्तसमायुक्तं षष्ठस्वरसमन्वितम्
बिन्दुनादयुतं चापि मूलं विद्याद्रवेरिति ५
तस्मादेव षडङ्गानि सान्तवह्नियुतानि च
हृदयं च शिरश्चैव शिखा कवचमेव च ६
अस्त्रं नेत्रं षडङ्गानि जातिषट्कयुतानि च
जायमाना भवेद्विद्या तस्यैवाद्या षडक्षरा ७
ह्रां ह्रीं स इति चोच्चार्य सूर्यायेति पदं ततः
सर्वरोगहरं विद्याज्जपतामिममुत्तमम् ८
पद्महस्ताय विद्महे रथारूढाय धीमहि
तन्नः सूर्यः प्रचोदयादिति पश्चाद्वदेत्सुधीः ९
इति गायत्रिरुद्दिष्टा सर्वशान्तिकरी तदा
एवं मन्त्राः समुद्दिष्टाः प्रतिष्ठाविधिरुच्यते १०
लिङ्गस्थापनयोग्यानि कथितान्यत्र यानि तु
तेषु सर्वेषु चास्यापि स्थापनं सर्वसिद्धिदम् ११
ग्रामादौ पूर्वदिग्भागे शैवे धाम्नि च गोचरे
प्रासादं पश्चिमद्वारं कृत्वा पूर्वविधानतः १२
तस्याग्रे पार्श्वयोर्वापि मण्टपे विधिना कृते

चतुरश्राणि कुण्डानि कृत्वा पूर्वादितः क्रमात् १३
शक्रशंकरयोर्मध्ये पङ्कजं स्यात्प्रधानकम्
पञ्चहोमविधाने तु कोणकुण्डानि वर्जयेत् १४
ऐशान्यां कल्पयेत्कुण्डं प्रधानं पद्ममेव तत्
मण्टपे पूर्ववत्सर्वं संस्कारादि प्रकल्पयेत् १५
तत्र वेद्यां समानीय प्रतिमां देशिकः सुधीः
षडक्षरेण संप्रोक्ष्य दृष्ट्युन्मीलनमारभेत् १६
नेत्रद्वययुते चक्षें मध्याह्ने तु सुनिर्मले
सुलग्ने कारयेत्कर्म शिल्पिना तद्यथोचितम् १७
स्वर्णसूच्या तथा पश्चाद्विलिखेदक्षिमण्डलम्
शिल्पिनं वस्त्रहेमाद्यवस्तुभिस्तु सुतोषयेत् १८
आचार्यो मन्त्रतस्तां च तोयेन क्षालयेत्सुधीः
षडक्षरेण मन्त्रेण ततस्तां प्रतिमां सुधीः १९
पश्चिमाभिमुखं न्यस्य कृत्वाग्रे स्थण्डिले ततः
मधुसर्पिःसुसंपूर्णं कांस्यं वा ताम्रजं तु वा २०
पात्रद्वयं समाधाय स्थण्डिले मूलमुच्चरन्
ततस्तु हेमकमलं विन्यस्याभ्यर्चयेद्धृदा २१
ततस्ते हैमया धीमान्दक्षिणेतरयोः क्रमात्
नेत्रयोर्नेत्रमन्त्रेण तर्पयेद्दूर्वया बुधः २२
वह्निचन्द्रमसोर्बीजं दक्षिणेतरयोः क्रमात्
तर्जन्यनामिकाभ्यां तु काञ्चनेन नखेन च २३
युक्ताभ्यां विन्यसेदक्ष्णोस्ततो यवनिकां तदा
संवर्ज्य दर्शयेद्धेनुं ब्राह्मणांश्च सुसंयतान् २४
गायत्रीमन्त्रमुच्चार्य ततो देवं रथादिषु

आरोप्य वस्त्रमालाद्यैः कृत्वालंकारमुत्तमम् २५
ग्रामादौ च समानीय प्रदक्षिणमतन्द्रितः
जलाशयसमीपाय नीत्वा तीरे निधाय च २६
पुण्याहं विधिवत्कृत्वा प्रोक्षयेद्ब्रह्मपञ्चकैः
अभिषिच्य च तोयेन षडक्षरमुदाहरन् २७
गायत्रीमुच्चरन्कूर्चवस्त्रमालाभिर्वेष्टयेत्
ततो जलाशयान्तस्तां पूर्ववच्छाययेच्छनैः २८
ततो दिक्षु दिशामीशान्सास्त्रान्संपूज्य देशिकः
तत्राथ पूर्ववन्नीत्वा कालं बेरं ततो जलात् २९
स्नानमण्टपमानीय तत्र विन्यस्य पूर्ववत्
वस्त्रकूर्चादिकं त्यक्त्वा पञ्चगव्याभिषेचनम् ३०
षडक्षरेण कृत्वा तु पञ्चमृद्भिश्च शोधयेत्
बहुशः शोधयित्वा तु गन्धोदेनाभिषेचयेत् ३१
ततश्च कृत्वा पुण्याहं बन्धयेत्कौतुकं हृदा
ततः कूर्चेन वस्त्रेण छादयेत्प्रतिमां ततः ३२
दत्त्वार्घ्यं चापि शिरसा मूलविद्यां समुच्चरन्
मण्टपे वेदिकायां तु विधिवत्स्थण्डिले कृते ३३
पूर्ववत्कल्पिते तल्पे सर्वातोद्यसमन्वितम्
आनीय प्रतिमां तत्र शाययेत्पूर्ववद्धृदा ३४
अतिरक्तेन सूक्ष्मेण वस्त्रेणाच्छादयेत्ततः
पूर्वोक्तलक्षणोपेतं हेमाम्बुजसमन्वितम् ३५
वस्त्रकूर्चसमायुक्तं कुम्भं सौरं शिरोऽन्तिके
संस्थाप्य परितश्चापि घटानष्टौ तथाविधान् ३६
विन्यस्याभ्यर्चयेन्मन्त्री तद्विधिः कथ्यतेऽधुना

दक्षिणे वेदिकायास्तु प्राङ्मुखो वाप्युदङ्मुखः ३७
उपविश्यासने धीमान्मूलविद्यां समुच्चरन्
प्राणायामत्रयं कृत्वा दहनप्लावनादिकम् ३८
भूतशुद्धिं च निर्वर्त्य करन्यासं तु कारयेत्
अङ्गानि हृदयादीनि न्यसेदङ्गुष्ठकादिषु ३९
अस्त्रं हस्ततले न्यस्य मूलं सर्वाङ्गुलीष्वपि
अङ्गेषु तत्तदङ्गानि कवचं वक्षसि न्यसेत् ४०
अस्त्रं दिक्षु च विन्यस्य प्रणवं मूर्ध्नि विन्यसेत्
मूलविद्याङ्गुले चैव पादयोस्तु षडक्षरम् ४१
ततः सहस्रकिरणं प्रभामण्डलमण्डितम्
पुण्डरीकस्थितं शान्तं रक्तवर्णं द्विलोचनम् ४२
रक्ताम्बरपरीधानं सर्वाभरणभूषितम्
पुण्डरीकद्वयव्यापि करपङ्केरुहद्वयम् ४३
ध्यात्वा सूर्यं तदा देवं मूलमन्त्रं समुच्चरन्
आवाहनादिभिः कुम्भे पूजयेद्दर्शयेत्ततः ४४
बिम्बमुद्रां च पद्मं च ततो दिक्षु समर्चयेत्
कुम्भेषु सोममङ्गारं बुधं देवगुरुं तथा ४५
शुक्रं शनैश्चरं चैव राहुं केतुं यथाक्रमम्
प्रागादिषु समन्ताच्च स्वनामपदमन्त्रकैः ४६
सर्वेषां च हविर्दत्त्वा ततो होमं समारभेत्
कुण्डसंस्कारपूर्वाणि कृत्वा कर्माणि देशिकः ४७
साधकैर्होतृभिः सार्धं प्रधाने सूर्यमर्चयेत्
अन्येष्वष्टसु कुण्डेषु सोमादींश्च क्रमान्न्यसेत् ४८
समिदाज्यचरूँल्लाजान् यवसर्षपकांस्तिलान्

साङ्गेन मूलमन्त्रेण कुण्डे च जुहुयात्सुधीः ४९
शतमष्टोत्तरं वापि तदर्धं वा तदर्धकम्
प्लक्षोदुम्बरमश्वत्थवटौ पूर्वादितः क्रमात् ५०
पलाशं खदिरं बिल्वमपामार्गं विदिक्षु च
प्रधानस्यार्कमेवोक्तं होमकर्म निवेदयेत् ५१
सर्वद्रव्यावसाने तु सर्वकुण्डेषु देवप
षड्वर्णेन च गायत्र्या जुहुयात्सर्पिषा तदा ५२
द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं समाहितः
तत्तदङ्गं समुच्चार्य तत्तदङ्गेषु संस्पृशेत् ५३
देशिकेनैव होतारः स्पृशेयुस्ते च पूर्वकम्
साधकाभावतः प्रोक्ता अष्टौ चत्वार एव च ५४
होमकाले चतुर्दिक्षु कुर्यादध्ययनं द्विजैः
ऋग्यजुस्सामाथर्वैस्तु प्रागादिषु यथाक्रमम् ५५
अघोरास्त्रं जपेदेकः शांकरं देशमाश्रितः
अधिवासक्रियामेवं रात्रौ कृत्वा समाहितः ५६
आचार्यो मूर्तिपैः सार्धं प्रातरुत्थाय शान्तधीः
नित्यकर्म समाप्याथ मण्टपं संप्रविश्य च ५७
कृतमन्त्रतनुः पश्चात् सूर्यस्यार्घ्यं प्रदापयेत्
अर्घ्यदानमथो वक्ष्ये तच्छृणु त्वं समाहितः ५८
प्रासादाग्रेऽथवा तस्य पार्श्वयोरुभयोरपि
गोमयेनोपलिप्याथ सुवृत्तं स्थण्डिलं क्रमात् ५९
षडक्षरेण मन्त्रेण प्रोक्षयेत्स्थण्डिलं ततः
तत्र ताम्रमयं पात्रं द्वित्रैकप्रस्थपूरितम् ६०
श्रेष्ठमध्यकनिष्ठं तु गन्धोदेनाभिपूरयेत्

ततश्च यवसिद्धार्थं साक्षतं रक्तचन्दनम्  ६१
तत्र मूलेन विन्यस्य पात्रे पद्मं च विन्यसेत्
तदुद्धृत्यात्र पाद्यां तु विन्यस्याथाभिमन्त्रयेत्  ६२
साङ्गेन मूलमन्त्रेण सुरभिं तत्र दर्शयेत्
ततश्चोदयमायान्तं साक्षाद्देवं दिवाकरम्  ६३
गन्धपुष्पादिभिः पूज्य षड्वर्णेन ततः सुधीः
जानुभ्यामवनौ स्थित्वा पूर्वाभिमुख एव च  ६४
अर्घ्यपात्रं तदुद्धृत्य मस्तकोपरि हेतिना
प्रणवं मूलमन्त्रं च षडक्षरमनुक्रमात्  ६५
उच्चार्य दद्यात्सूर्याय दत्त्वा पाद्यं भुवि क्षिपेत्
अधोमुखं ततो देवं प्रणम्य प्रार्थयेद्रविम्  ६६
देवदेव त्रिधामेश जगत्प्रथममङ्गल
तिष्ठात्र स्थापिते भक्त्या मया सूर्य जगत्पते  ६७
इति संप्रार्थ्य देवेशं परमान्नं घृतप्लुतम्
मधुमण्डघृतोपेतं सूर्यायाथ निवेदयेत्  ६८
ततश्च धौतपादस्सन्समाचम्य यथाविधि
प्रविश्य मण्डपे देवान्समभ्यर्च्य घटस्थितान्  ६९
पूर्णाहुतिं च सर्वत्र मूलमन्त्रेण दापयेत्
सुमुहूर्ते सुलग्नेऽथ देवमुद्धृत्य भास्करम्  ७०
वस्त्रकूर्चादिकं त्यक्त्वा गायत्रीमन्त्रमुच्चरन्
रथादिषु समारोप्य कृत्वा धाम्नि प्रदक्षिणम्  ७१
प्रविश्य भवनं तत्र शिल्पिना सह देशिकः
स्थापयेद्विधिवन्नयस्य रत्नान्येवावटे ततः  ७२
स्पृशन्मूलं समुच्चार्य प्रतिमायाः शिरस्तथा

गर्भे ब्रह्मपदे प्रोक्तं स्थापनं मध्यमेऽथवा ७३
दैवमानुषयोर्वापि सर्वसिद्धिकरं नृणाम्
श्लिष्टं दृढतरं रम्यं निश्चलं स्थाप्य देवताम् ७४
शिल्पिकर्मणि निर्वृत्ते सत्कारेण विसर्जयेत्
स्नात्वाचम्य वसन्वासो नवरत्नं तथैव च ७५
उष्णीषं चोत्तरीयं च कृत्वा पञ्चाङ्गभूषणैः
भूषितश्च तथा गर्भे कृत्वा पुण्याहमुत्तमम् ७६
पञ्चमृत्पञ्चगव्यैश्च शुद्धिं देवे समाचरेत्
गायत्रीमन्त्रमुच्चार्य गन्धोदेनाभिषेचयेत् ७७
ततो मण्टपमाविश्य घटानुद्धृत्य मूर्तिपैः
सर्वातोद्यसमायुक्तं गीतनृत्तसमन्वितम् ७८
कृत्वा प्रदक्षिणं धाम्नि प्रविश्य भवनं ततः
देवाग्रे स्थण्डिले कुम्भान्विन्यसेत्पूर्ववत्सुधीः ७९
तत्राभ्यर्च्य घटे भानुं मध्येऽन्येषु ग्रहानपि
ध्यात्वा पद्मस्थितं देवं पूर्ववत्प्रतिमाहृदि ८०
मूलमन्त्रं समुच्चार्य न्यसेत्कूर्चस्त्रुताम्भसा
ततश्च ग्रहकुम्भस्थसोमादींश्च तथा ग्रहान् ८१
अग्रादारभ्य विन्यस्य ततस्तैरभिषेचयेत्
प्रणवं मूर्ध्नि विन्यस्य मूलमन्त्रं हृदि न्यसेत् ८२
षड्वर्णं नाभिदेशे तु गायत्रीं पादयोर्न्यसेत्
अङ्गेष्वङ्गानि विन्यस्य कवचं वक्षसि न्यसेत् ८३
अस्त्रं हस्तप्रदेशे तु मातृकाश्च यथा पुरा
विन्यस्याथ च गायत्र्या गन्धोदेनाभिषेचयेत् ८४
दत्त्वा पाद्यं ततो मन्त्री दत्त्वा चाचमनीयकम्

हृदयेनैव मन्त्रेण ततोऽर्घ्यं चापि मूर्धनि ८५
मूलेन दत्त्वा मार्ताण्डं रक्तचन्दनवारिणा
काश्मीररोचनायुक्तं समालिप्यांशुकेन च ८६
रक्तेन रक्तपद्मैश्च समलंकृत्य तैजसम्
संपूज्य गन्धपुष्पाद्यैर्मूलमन्त्रं समुच्चरन् ८७
सोमादींश्च यजेत्तद्वद्देवाग्रात्परितः स्थितान्
पायसं च ततो दद्यात्ताम्बूलं च निवेदयेत् ८८
एवं कर्म समाख्यातं स्वतन्त्रपरतन्त्रयोः
यथाक्रममथो वक्ष्ये स्वतन्त्रस्याधिकं विधिम् ८९
दक्षिणेतरयोस्तस्य पार्श्वयोस्तु जनार्दन
उषां च प्रत्युषां चैव कृत्वा चैकासनस्थिताम् ९०
करण्डमकुटोपेतां सर्वाभरणभूषिताम्
द्विनेत्रां द्विभुजां चैव हेमवर्णां धृताम्बुजाम् ९१
नेत्रोन्मीलनकर्मादि सर्वकार्यं सहैव तु
अधिवासे तयोः कुम्भौ पार्श्वयोरपि विन्यसेत् ९२
प्रधानकुण्डे होमं च तयोर्द्रव्यैश्च तैरपि
स्वनामपदमन्त्राभ्यां कुर्यादत्रोक्तसंख्यया ९३
मन्त्रन्यासं च ताभ्यां तु देवस्यानु प्रकल्पयेत्
एवं वै शक्तिका वापि स्थापयेत्स्वस्वमन्त्रकैः ९४
द्वाराध्यक्षौ च कर्तव्यौ दक्षिणेतरयोरपि
उग्रप्रशान्तनामानौ द्वारस्य परिकल्पयेत् ९५
तयोः कुम्भौ तथा स्थाने वेदिकापार्श्वयोर्न्यसेत्
अग्रेऽरुणं तथा स्थाप्य वाजिनं तद्बहिः क्रमात् ९६
लोकपालान्यथास्थानं कुम्भस्थान्विन्यसेत्क्रमात्

परिवारांश्च सर्वांस्तानधिवासे सहैव तु ९७
मन्त्रन्यासावसाने तु यथास्थानं प्रयोजयेत्
इति यः कारयेन्मर्त्यः सवितुः स्थापनं परम् ९८
आयुरारोग्यमाप्नोति पुत्रानिष्टांस्तथैव च
कामान्कामयते यो वै स तान्सर्वानवाप्य च ९९
देहत्यागोत्तरे काले भासते चापि सूर्यवत् १००

इत्यजिताख्ये महातन्त्रे क्रियापादे सूर्यस्थापनविधिश्चतुःपञ्चाशः पटलः

अजितागमः

क्रियापादः

पञ्चपञ्चाशः पटलः

षोडशगणपतिस्थापनविधिः

गजाननकटद्वंद्वनिःसृता मदनिर्झरी
प्रक्षालयतु नः क्षिप्रं विघ्नसङ्घातकर्दमम् १
धर्मश्चार्थश्च कामश्च नराणां येन विद्यते
स्तोत्रं तद्विघ्नराजस्य कथ्यते षोडशात्मनः २
करस्थकदलीचूतपनसेक्षुकमोदकम्
बालसूर्यप्रभं वन्दे देवं बालगणाधिपम् ३
नालिकेराम्रकदलीगुलपायसधारिणम्
भजे शशाङ्कसङ्काशं देवं भक्तगणाधिपम् ४
वेतालशक्तिशरकार्मुकशङ्खचक्र-
खट्वाङ्गमुद्गरगदाङ्कुशनागपाशैः
शूलं च कुन्तपरशुध्वजमुद्वहन्तं

वीरं गणेशमरुणं सततं स्मरामि ५
आलिङ्ग्य देवीं हरितां निषणणां परस्परस्पृष्टकटीनिवेशाम्
संध्यारुणं पाशसृणी वहन्तं भयापहं शक्तिगणेशमीडे ६
यः पुस्तकाक्षगुणदण्डकमण्डलुश्रीविद्योतमानकरभूषणमिन्दुवर्णम्
स्तम्बेरमाननचतुष्टयशोभमानमङ्गं स्मरेद्द्विधिगणाधिपतेः स धन्यः ७
पक्वचूतफलकल्पमञ्जरीमिक्षुदण्डतिलमोदकं वहन्
राजते परशुहस्त ते नमः श्रीसमृद्धिसहितश्च पिङ्गलः ८
नीलाब्जं दाडिमं वीणाशालिपुञ्जाक्षसूत्रकम्
दधदुच्छिष्टनामा तु गणेशः पातु संनतः ९
पाशाङ्कुशस्वदन्ताम्रफलवानाखुवाहनः
विघ्नं निहन्तु नः सर्वं रक्तवर्णो विनायकः १०
दन्तकल्पलतापाशरत्नकुम्भाङ्कुशोज्ज्वलम्
बन्धूककमनीयाङ्गं ध्यायेत्क्षिप्रविनायकम् ११
अभयवरदहस्तः पाशदन्ताक्षमालापरशुसृणित्रिशीर्षं मुद्गरं मोदकं च
दधदधिगतसिंहः पञ्चमातङ्गवक्त्रो गणपतिरथ गौरः पातु हेरम्बनामा
१२
बिभ्राणः शुकबीजपूरकमलमाणिक्यकुम्भाङ्कुशान्
पाशं कल्पलतां च पाणिकलशं स्रोतः सुधानिर्झरम्
श्यामेनात्तसरोरुहेण सहितो देवीद्वयेनान्तिके
गौराङ्गो वरदानहस्तकमलो लक्ष्मीगणेशोऽवतात् १३
शङ्खेक्षुचापकुसुमेषुकुठारपाशचक्राङ्कुशैः कलममञ्जरिकासनाथैः
पाणिस्थितैः परिसमाहितभूषणश्रीर्विघ्नेश्वरो विजयते तपनीयगौरः
१४
पाशाङ्कुशापूपकुठारदन्तचञ्चत्करं क्लृप्तवराङ्गुलीयकम्

पीतप्रभं कल्पतरोरधःस्थं भजामि नृत्तैकपदं गरोशम् १५
कल्हाराम्बुजबीजपूरकगदादन्तेक्षुबाणैः समं
बिभ्राणो मणिकुम्भशालिकणिशौ पाशं च चक्रान्वितम्
गौराङ्ग्या रुचिरारविन्दयुतया देव्या समालिङ्गितः
शोणाङ्गः शुभमातनोतु भवतां नित्यं गरोशो महान् १६
कल्हारशालिकणिशेषुपरश्वधास्त्रदन्तप्ररोहफलभृत्कनकोज्ज्वलाङ्गः
आलिङ्गनोद्यतकरो हरिताङ्गयष्ट्या देव्या दिशत्वभयमूर्ध्वगरोश्वरस्ते
१७
पाशाङ्कुशोक्षुचषकेषुसरोजदन्तशाल्यग्ररत्नकलशाभरणाभिरामम्
पार्श्वे सदारयुगलं कनकाभमीडे हारिद्रकुञ्जरनिभं करुणानिवासम्
१८
इति विरचितमिमं गणाधिराजस्तवमनुत्तममादरेण नित्यम्
स्मरति पठति यः शृणोति वापि जगति तस्य न किञ्चिदप्यवश्यम्
१९

इत्यजिताख्ये महातन्त्रे क्रियापादे षोडशगणपतिस्थापनविधिः
पञ्चपञ्चाशः पटलः

## षट्पञ्चाशः पटलः
## क्षेत्रपालस्थापनविधिः

प्रतिष्ठां क्षेत्रपालस्य तदुत्पत्तिपुरःसरम्
मन्त्रेण सह वक्ष्यामि समासाच्छृणु देवप १
पुरा क्षेत्राणि लोकेऽस्मिन्दिवि नागास्पदेऽपि च
दुष्टग्रहैः पीडितानि ब्रह्मा तत्क्षेमकाम्यया २
भवं वीक्ष्याह ते युक्तं क्षेत्राणां पालको भव

श्रुत्वा वाक्यमिदं तस्य क्षेत्राणां पालकोऽभवत्  ३
बालरूपं समास्थाय नग्नमष्टभुजान्वितम्
श्वानवाहं सुदंष्ट्रं च त्रिनेत्रं कुटिलाननम्  ४
योगक्षेमस्तु सर्वेषां क्षेत्राणां मयि पालके
सर्वदा वर्तते तस्मात्क्षेत्रपालोऽहमेव तु  ५
इदं रूपं तदीयं तु दृष्ट्वा दुष्टग्रहास्तु ये
प्रदुद्रुवुश्च क्षेत्रेभ्यो भयभीताः समन्ततः  ६
मन्त्रस्य बीजं त्वं विद्धि कूटमायाबलान्वितम्
बिन्दुनादसमायुक्तं मन्त्राणामुत्तमोत्तमम्  ७
मूलमङ्गानि चप्यस्य क्षकारेणैव कल्पयेत्
क्षकारः कषयोर्योगात्कूटाक्षरमिति स्मृतम्  ८
श्वानवाहाय विद्महे तीक्ष्णदंष्ट्राय धीमहि
तन्नो रुद्रः प्रचोदयादिति पश्चाद्वदेत्सुधीः  ९
गायत्री चेयमस्य स्यात्प्रतिष्ठाविधिरुच्यते
लिङ्गस्थापनयोग्येषु स्थापयेदेनमच्युत  १०
ग्रामादिषु चतुर्दिक्षु ग्रामाभिमुखमेव वा
उदग्द्वारे तु धाम्नस्तन्नैर्ऋते क्षेत्रपालकः  ११
दक्षिणद्वारके वायौ मुखमण्टपसंयुते
स्थापयेत्क्षेत्रपालं तद्धाम्नोऽग्रे वाथ पार्श्वयोः  १२
ईशपावकयोर्वापि कृत्वा देशेऽथ मण्टपम्
तत्र वेद्यास्तु परितः कुण्डानि परिकल्पयेत्  १३
आशासु चतुरश्राणि वृत्तानि स्युर्विदिक्षु च
पद्मं प्रधानकुण्डं स्यात्पञ्चहोमविधावपि  १४
वृत्तं हित्वा च पद्मं स्यात्तद्दिशान्यत्तु कल्पयेत्

संस्कारादीनि सर्वाणि कृत्वा तत्रैव मराटपे १५
प्रतिमां लन्नणोपेतां स्नानमराटपमध्यमम्
नेत्रोन्मीलनकर्माणि कारयेच्छिल्पिना बुधः १६
हेमसूच्या ततश्चापि देवाग्रे स्थरिडले कृते
मध्वाज्यपयसां पात्रं पृथगेव समाचरेत् १७
पात्रं तु ताम्रजं शस्तं तेषु त्रिष्वपि हेमजम्
कमलं विन्यसेदस्त्रमन्त्रमुच्चार्य देशिकः १८
प्रोन्नयित्वा हृदा तानि मुद्रयेद्धेनुमुद्रया
कृत्वा यवनिकां तत्र हैमया दूर्वया ततः १९
दन्निणेतरयोश्चैव नेत्रयोर्मधुसर्पिषी
नेत्रमन्त्रं समुच्चार्य तर्पयेदूर्ध्वलोचने २०
पयसा तर्पयेत्तद्वत् ततो हैमनखान्वितैः
तर्जन्यादित्रिभिः पश्चादङ्गुलैर्विन्यसेदथ २१
नयनाख्यं ततस्तां च पञ्चमृत्पञ्चगव्यकैः
शोधयित्वा हृदास्त्रेण गन्धतोयेन सेचयेत् २२
ततो यवनिकापाये ब्राह्मणान् गां च दर्शयेत्
प्रतिमां भूषितां सर्वै रथाद्येनाथवा नयेत् २३
जलतीरे ततस्तत्र प्रतिमां स्थाप्य मन्त्रवित्
पुरायाहं वाचयित्वा तु प्रोन्दय च ब्रह्मपञ्चकैः २४
ततोऽभिषिच्य कूर्चेन वस्त्रेणापि च वेष्टयेत्
जलमध्ये ततस्तां च फलकायां च शाययेत् २५
प्राक्शिरश्चोर्ध्ववक्त्रं च परितो दिक्पतीन्नयसेत्
ततो नीत्वा च तत्रापि कालं पूर्वोक्तमानयेत् २६
जलादुत्थाप्य तं देवं स्नानमराटपमध्यमम्

तत्र संस्थाप्य वस्त्रादीनपनीयाथ मन्त्रवित् २७
अर्घ्यं दत्त्वा हृदा मूर्ध्नि कृत्वा शुद्धिं पुनः पुनः
गन्धतोयेन तन्मूलमुच्चरन्नभिषेचयेत् २८
ततः पुण्याहमप्यत्र वाचयित्वा समाहितः
सर्वात्मनाथ सम्प्रोक्ष्य बन्धयेत्कौतुकं बुधः २९
ततः कूर्चेन वस्त्रेण सितेनापि च वेष्टयेत्
अर्घ्यं दत्त्वा ततश्चापि मूर्ध्नि देवस्य मन्त्रवित् ३०
मण्डपे वेदिकायां च स्थण्डिले विधिवत्कृते
शयने मन्त्रयन्मूलं बेरमानीय शाययेत् ३१
प्राक्शिरश्चोर्ध्ववक्त्रं तं रक्तवस्त्रेण वेष्टयेत्
ततः प्रधानं कलशं सर्वलक्षणलक्षितम् ३२
गन्धोदपूरितं हेमशूलरत्नसमन्वितम्
वस्त्रकूर्चसमायुक्तं पिधानेन पिधाय च ३३
स्थापयेद्धेतिमुच्चार्य शङ्खदुन्दुभिनिस्वनैः
सर्वातोद्यसमयुक्तं प्रतिमायाः शिरोऽन्तिके ३४
परितोऽष्टौ न्यसेन्मन्त्री कलशा नर्चयेत्क्रमात्
अङ्गन्यासादिकं सर्वं पूर्ववत्परिकल्पयेत् ३५
क्षेत्रपालं ततो ध्यायेच्छ्यामवर्णं त्रिलोचनम्
ऊर्ध्वकेशं सुदंष्ट्रं च भ्रुकुटीकुटिलाननम् ३६
पद्मपीठे स्थिताङ्घ्रिं च सर्पमेखलया युतम्
क्षेपोत्तुङ्गमतिक्रुद्धं क्षुद्रघण्टामयीं तथा ३७
करोटिकामयीं चापि मालामागुल्फलम्बिनीम्
दधानमुरगं बद्धं भूषितं चन्द्ररेखया ३८
दक्षिणे शूलडमरुखड्गनागेषु संयुतैः

वामे कपालं घराटास्त्रचर्मचापसमायुतैः ३९
अष्टाभिश्च करैर्युक्तं नीलमेघसमद्युतिम्
चतुर्भुजं वा तं ध्यायेद्दक्षिणेतरयोरपि ४०
शूलं डमरुकं चैव कपालं पाशमेव च
दधानं भूषणैरन्यैः पूर्ववत्तं प्रकल्पयेत् ४१
यथा बहिः स्थितं रूपमेवं कुम्भे तु भावयेत्
ततो मूलं समुच्चार्य कृत्वा पुष्पाञ्जलिं सुधीः ४२
आवाहनादिकं कृत्वा गन्धाद्यैः पूजयेद्धृदा
परितः स्थापिते चाथ पूजार्थं कलशाष्टके ४३
भवादीनर्चयेत्सर्वान् स्वनामपदमन्त्रकैः
ततो होमं प्रकुर्वीत कुराडेषु परितः क्रमात् ४४
कुराडसंस्कारपूर्वं तु वह्निसंस्थापनं तथा
कुराडेषु पूर्ववद्देवान्संस्थाप्य चार्चयेत्ततः ४५
युक्तो वाहादिभिर्मन्त्री होमं सर्वत्र कारयेत्
समिदाज्यचरूणां तु तिलसर्षपयोस्तथा ४६
मुद्गमाषयवानां च प्रत्येकं तु शताहुतीः
तदर्धं वा क्रमान्मूलमन्त्राङ्गैश्च यथाक्रमम् ४७
गायत्र्या सह कुर्यात्तु प्रतिद्रव्यं तु सर्पिषा
हुत्वा व्याहृतिमन्त्रेण देशिको होतृभिः सह ४८
तत्तदङ्गं स्पृशेन्मन्त्री बेरस्य पुष्पपाणिना
सर्वद्रव्यावसाने तु कुराडेशानां दशाहुतीः ४९
सर्पिषा जुहुयात्पश्चात्परिषिच्य समापयेत्
ततो हविश्च देवानां कुम्भस्थानां प्रदापयेत् ५०
ताम्बूलं च ततो दत्त्वा नीत्वा रात्रिं तु देशिकः

प्रभाते कृतनित्यस्तु मण्डपं संप्रविश्य च ५१
मन्त्रात्मिकां तनुं कृत्वा यष्ट्वा देवांश्च पूर्ववत्
सर्वकुण्डेषु संपूज्य देवान् व्याहृतिपूर्वकम् ५२
स्रुचा पूर्णाहुतिं दद्यान्मूलविद्यां समुच्चरन्
परिषिच्य ततो देवान्कुण्डेऽभ्यर्च्य विसर्जयेत् ५३
परिधीन्विष्टरांश्चैव संप्रोक्ष्याग्नौ तु निक्षिपेत्
ततो गर्भगृहं गत्वा ब्राह्मे दिव्येऽथवा पदे ५४
स्थाप्या धारशिलां तत्र रत्नादि विधिवन्न्यसेत्
ततो मण्डपमासाद्य बेरमुद्धृत्य मूलतः ५५
वस्त्रादिकं समुत्सृज्य दत्त्वार्घ्यं शिरसि क्रमात्
रथादिषु समारोप्य कृत्वा धाम्नि प्रदक्षिणम् ५६
नीत्वा गर्भगृहं तत्र स्थापयेत्संस्पृशञ्छिरः
मूलविद्यां गृणन्मन्त्री शिल्पिना सह दैवते ५७
विशेषतस्तु पीठस्य कुर्यात्सन्धानमुत्तमम्
शिल्पिकर्मणि निर्वृत्ते तमुद्वास्य ससत्कृतिम् ५८
स्नात्वा विद्यात्मकं देहं कृत्वा पुण्याहमत्र तु
गर्भगेहे ततो देवं पञ्चमृत्पञ्चगव्यकैः ५९
शोधयित्वा हृदा मन्त्री गन्धोदेनाभिषेचयेत्
ततस्तान्मण्डपात् कुम्भान्यथापूर्वं समानयेत् ६०
बेराग्रे स्थण्डिले तांश्च यथापूर्वं तु विन्यसेत्
ततोदङ्मुखमाविश्य पूर्ववत्सकलीकृतः ६१
सोष्णीषः सोत्तरीयश्च बद्धपञ्चाङ्गभूषणः
ध्यात्वा देवं तु कुम्भस्थं यथापूर्वं तु देशिकः ६२
मूलमन्त्रं समुच्चार्य ततः कूर्चसृताम्भसा

प्रतिमाहृदि कुम्भस्थदेवं विन्यस्य पूजयेत् ६३
योजयित्वा ह्वकारेण विनियोगेषु योजयेत्
अभिषेकं ततः कृत्वा ब्राह्मणान् भोजयेत्ततः ६४
आचार्यं पूजयेच्चैव दक्षिणां दापयेत्ततः
एवं यः कुरुते चैव स राजा विजयी भवेत् ६५
इत्यजिताख्ये महातन्त्रे क्रियापादे क्षेत्रपालस्थापनविधिः षट्पञ्चाशः पटलः

सप्तपञ्चाशः पटलः
परिवारस्थापनविधिः

अथान्यपरिवाराणां द्वारवक्त्राज्जनार्दन
पूजार्थं स्थापनं यत्स्यात्तद्विशिष्य वदामि ते १
तत्तद्धामाग्रदेशे तु पार्श्वयोरुभयोस्तु वा
पञ्चहस्तं चतुर्गात्रं कृत्वा मण्डपमत्र वै २
मध्ये च वेदिकां तत्र कारयेत्षोडशांशकैः
तालमात्रसमुत्सेधां दर्पणोदरसंनिभाम् ३
गोमयेनोपलिप्याथ वितानं प्रतनेत्ततः
दर्भमाला ध्वजांश्चापि मुक्तादामसमन्वितम् ४
तोरणं च चतुर्दिक्षु न्यस्त्वा पुण्याहमाचरेत्
ततो बेरस्य कुर्वीत नेत्रोन्मीलनकर्म च ५
तत्तन्नेत्रं समुन्मील्य बेरं गव्यादिभिस्ततः
शुद्धिं कृत्वा जले चापि तत्तद्धृदयमुच्चरन् ६
अधिवास्य यथापूर्वं ततो बेरं समानयेत्
मण्डपस्योत्तरे भागे फलकोपरि विन्यसेत् ७

ततोऽभिषिच्य गन्धोदैः कृत्वा कौतुकबन्धनम्
तत्तन्मूलेन मन्त्रेण ततो वस्त्रादिना पुनः ८
आवेष्ट्य प्रतिमां पश्चाद्वेदिकोपरि निर्मिते
स्थण्डिले पूर्ववत्कृत्वा शयनं तत्र शाययेत् ९
तत्तद्धृदयमुच्चार्य प्रतिमां तां यथा पुरा
तत्तच्छिरोऽन्तिके तस्याः कुम्भं पूर्वोक्तलक्षणम् १०
गन्धोदपूरितं हेमपद्मयुक्तं सकूर्चकम्
सापिधानं सवस्त्रं च न्यस्त्वा मूलेन पूजयेत् ११
यथा रूपं तथा ध्यायेत्प्रतिमायास्तु कुम्भके
तथाष्टौ कलशान्दिक्षु न्यस्त्वा पूर्वोक्तलक्षणान् १२
धर्मादीनप्यधर्मादीन् दिग्विदिक्षु समर्चयेत्
पाद्यान्नैवेद्यपर्यन्तैः ततो होमं समाचरेत् १३
चतुरश्रेषु कुण्डेषु चतुर्दिक्षु विदिक्ष्वपि
शाङ्करे तु प्रधानं स्याद्वृत्तकुण्डं तथैव हि १४
विदिक्कुण्डपरित्यागे पञ्चहोमविधिर्भवेत्
एकहोम विधाने तु प्राच्यामेव प्रकल्पयेत् १५
सर्वत्र स्थण्डिले वापि सैकते होममाचरेत्
कुण्डसंस्कारपूर्वाणि यथापूर्वं प्रकल्पयेत् १६
यथोक्तविधिना चाग्निं संपाद्य पूजयेत्क्रमात्
प्रधानदेवतास्तस्मिन्स्थाप्य तास्तु समर्चयेत् १७
धर्माधर्मादिदेवांश्च विधिना पूजयेत्क्रमात्
समिदाज्यचरूणां तु तिलसर्षपयोस्तथा १८
यववेणवोश्च होतव्या प्रत्येकं तु शताहुतिः
प्लक्षोदुम्बरकाश्वत्थवटजा ब्रह्मवृक्षजाः १९

अङ्गैर्मूलादिभिर्मन्त्रैः समिदादि यथाक्रमम्
देशिको होतृभिः सार्धं होमयेद् द्रव्यसंचयम् २०
प्रतिद्रव्यावसाने तु हृदयादीनि संस्पृशेत्
मूलेनापि च हृद्देशं धर्मादीनां ततः सुधीः २१
सर्पिषैवाहुतीः सप्त प्रत्येकं जुहुयात्ततः
अधर्मादिचतुर्णां तु प्रधाने तत्र होमयेत् २२
एवं कृत्वा निशायां तु देशिको मूर्तिपैः सह
प्रभाते कृतनित्यस्तु मराडपं संप्रविश्य च २३
कृत्वा मन्त्रमयं देहं तत्तन्मूलाङ्गमन्त्रकैः
बेरं च पूजयित्वा तु तेषु कुम्भेषु पूजयेत् २४
पूर्णाहुतिं तु सर्वत्र तत्तन्मूलेन दापयेत्
ततो बेरं समाहृत्य त्यक्त्वा कूर्चं सवस्त्रकम् २५
रथादिषु समारोप्य कृत्वा धाम्नि प्रदक्षिणम्
प्रविश्य धाम तत्रैव रत्नहेमादिसंयुते २६
स्थापयेदवटे बेरं शिल्पिना मूलमुच्चरन्
ततः स्नात्वा समाचान्तः कृत्वा नित्यक्रियः सुधीः २७
पञ्चगव्येन तद्बेरमभिषिच्यास्त्रमन्त्रतः
गन्धतोयेन गायत्र्या ततश्चाप्यभिषेचयेत् २८
पुरायाहं तत्र कृत्वा च प्रोक्षयित्वास्त्रमुच्चरन्
ततः कुम्भान्समुद्धृत्य कृत्वा धामप्रदक्षिणम् २९
प्रविश्य गर्भगेहं तु देवाग्रे स्थरिडले कृते
यथास्थानं तु विन्यस्य पूजयित्वा च पूर्ववत् ३०
देवतां मन्त्ररूपां तां कुम्भस्थां मूलमन्त्रतः
कूर्चाग्रयोः सृतेनैव तोयेन प्रतिमाहृदि ३१

विन्यसेत्तेन तोयेन तत्तदस्त्रं समुच्चरन्
अभिषिच्य ततोऽन्यांश्च धर्मादीन्परितस्तथा  ३२
न्यस्त्वा तैश्च ततो बेरमभिषिच्य यथाक्रमम्
तत्तदङ्गानि चाङ्गेषु न्यस्त्वा मूलं हृदि न्यसेत्  ३३
अवर्गं मूर्ध्नि विन्यस्य कवर्गं च मुखे न्यसेत्
चवर्गं वक्षसि न्यस्त्वा कुक्षौ चापि टवर्गकम्  ३४
तवर्गं च पवर्गं च हस्तयोरुभयोर्न्यसेत्
यवर्गं च शवर्गं च पादयोरुभयोस्तथा  ३५
हवर्गं पृष्ठदेशे तु विन्यस्यैवं तु मातृकाः
अभिषिच्य ततो बेरं गन्धपुष्पादिभिर्यजेत्  ३६
प्रभूतं च हविर्दद्यात्ताम्बूलं च प्रदापयेत्
एवं संस्थापनं प्रोक्तं साधारणमिदं भवेत्  ३७
अनुक्तानां तु सर्वेषां पीठाकारस्तु कथ्यते
देवतास्थापनं चैव समासाच्छृणु देवप  ३८
यस्य देवस्य यत्पीठं कल्पितं विधिना भवेत्
शिलादिभिस्तु तत्पार्श्वे पूर्वे वाप्युत्तरेऽपि वा  ३९
शिल्पिकर्मणि निर्वृत्ते शिल्पिनं तु विसर्जयेत्
प्रपां तत्र वितानं च कृत्वा तद्देशमप्यथ  ४०
गोमयेनोपलिप्यात्र पुण्याहं वाचयेत्ततः
स्थण्डिलं शालिभिः कृत्वा तत्र पद्मं समालिखेत्  ४१
कर्णिकायां ततः कुम्भं गन्धोदपरिपूरितम्
पूर्वोक्तलक्षणोपेतं विन्यसेद्वस्त्रवेष्टितम्  ४२
तत्र कुम्भे तु तद्देवं ध्यात्वावाह्य समर्चयेत्
ततो होमं प्रकुर्वीत पीठकुम्भान्तरालके  ४३

कुराडे वा स्थरिडले वापि वह्निं संपूज्य पूर्ववत्
समिदाज्यचरूणां तु प्रत्येकं च शताहुतिम् ४४
तदर्धं वा तदर्धं वा तत्तन्मूलेन होमयेत्
तत्तदङ्गैस्तथाज्येन प्रत्येकं तु दशाहुतिम् ४५
होमयेदथ सर्वान्ते पीठं सर्वात्मना स्पृशेत्
एवं रात्रौ क्रियां कृत्वा प्रभाते होतृभिः सह ४६
कृतनित्यक्रियो मन्त्री कृत्वा मन्त्रात्मिकां तनुम्
कुम्भस्थं देवमभ्यर्च्य पूर्णां मूलेन होमयेत् ४७
ततः कुम्भस्थितं देवं पूर्ववत्पीठके न्यसेत्
कुम्भाद्भिर्वेदघोषाद्यैर्मूलमन्त्रं समुच्चरन् ४८
अभिषिच्य ततः पीठे संपूज्यात्रैव देवताम्
हविर्निवेदयित्वाथ ताम्बूलं च निवेदयेत् ४९
प्रतिष्ठा विधानं पीठानामेवमुक्तं समासतः
महापीठस्य वक्ष्यामि प्रतिष्ठां तु जनार्दन ५०
महापीठविधौ प्रोक्तं बाह्यमाभ्यन्तरं त्विति
तयोरग्रे प्रपां कृत्वा पार्श्वयोस्तत्र वेदिकाम् ५१
पञ्चहस्तमितां वापि तत्र कुराडानि कल्पयेत्
चतुरश्राणि सर्वत्र शाङ्करे वृत्तमेव च ५२
एकहोमविधाने तु प्राच्यां कुराडं प्रकल्पयेत्
गोमयेन समालिप्य पुरायाहं कारयेत्ततः ५३
ततोऽधिवासनं कुर्याद्बाह्याभ्यन्तरयोरपि
उभयोरुच्यते तत्र वेदिकायां विधानतः ५४
स्थरिडलं शालिभिः कृत्वा पद्ममष्टदलं लिखेत्
तत्र मध्ये न्यसेत्कुम्भं सितसूत्रविचित्रितम् ५५

गन्धोदपूरितं चापि सहिरण्यं सकूर्चकम्
सापिधानं सवस्त्रं च पूर्वोक्तलक्षणान्वितम्  ५६
तथाष्टौ परितो वीक्ष्य दृशा दिक्षु च देशिकः
पूर्वादिषु दलेष्वेते स्थापनीया यथाक्रमम्  ५७
पूर्ववद्गन्धतोयाद्यैस्तत्तत्कुम्भं च पूरयेत्
ततश्चावाहनाद्यैश्च देवांस्तेषु समर्चयेत्  ५८
आभ्यन्तरस्य पीठस्य मध्ये तत्कर्णिकोपरि
संस्थितश्चण्डरुद्राख्यो गणेशः परितः क्रमात्  ५९
पूर्वादिषु दलेष्वेनं मूलमन्त्रेण पूजयेत्
गुलान्नं परमान्नं च शुद्धान्नं च निवेदयेत्
ताम्बूलं मुखवासेन दद्याद्वै मूलविद्यया  ६०
इत्यजिताख्ये महातन्त्रे क्रियापादे परिवारस्थापनविधिः सप्तपञ्चाशः पटलः

## अष्टपञ्चाशः पटलः

## विष्णुस्थापनविधिः

देवदेवं प्रणम्यादौ पृच्छति स्म जनार्दनः
संस्थापनं कथं विष्णोस्तत्सर्वं ब्रूहि मे प्रभो  १
विष्णोः संस्थापनं वक्ष्ये समासेन जनार्दन
विष्णुं चतुर्भुजं शान्तं वनमालाधरं तथा  २
किरीटमकुटोपेतं श्यामवर्णं द्विनेत्रकम्
शङ्खचक्रधरं चैव श्रीवत्साङ्कितवक्षसम्  ३
दण्डाभयधरं देवं पीताम्बरसमन्वितम्
सुखासीनं स्थितं वापि धरण्या च श्रिया युतम्  ४

शयानं वापि तद्रूपं कल्पयेत्कल्पवित्तमः
नृसिंहरूपं वा कुर्याच्छङ्खचक्रधरं तथा ५
कुक्कुटासनमासीनमात्तपर्यङ्कबन्धनम्
जानुद्वयोपरिन्यस्तकूर्परद्वयमुज्ज्वलम् ६
स्थापयेत्तत्र देवांश्च स्थापनोक्तक्रमेण तु
नेत्रोन्मीलनपूर्वं तु तदीयैरणुभिः क्रमात् ७
नृसिंहरूपस्याप्येवं स्थापनं परिकीर्तितम्
एवं यः कारयेन्मर्त्यो विष्णुसंस्थापनं परम्
इह लोके सुखं प्राप्य स याति परमां गतिम् ८

इत्यजिताख्ये महातन्त्रे क्रियापादे विष्णुस्थापनविधिरष्टपञ्चाशः पटलः

## एकोनषष्टितमः पटलः

## सरस्वतीस्थापनविधिः

स्थापनं तु सरस्वत्याः समासाच्छृणु सांप्रतम्
ग्रामादीनां तु मध्ये तां पूर्वपश्चिमयोस्तु वा १
ग्रामाद्यभिमुखां देवीं स्थापयेज्ज्ञानसिद्धये
शिवालयेषु सौम्ये वा वारुणे पावकेऽपि वा २
ग्रामादौ प्राङ्मुखा देवी मध्यस्था स्याच्छिवालये
मूलाभिमुखमेवोक्तं नागरं द्राविडं तु वा ३
श्वेतां श्वेताम्बुजासीनामेकवक्त्रं चतुर्भुजाम्
संदंशमक्षमालां च दक्षिणे तु तथेतरे ४
दधतीं तां सुरेशानीं पुस्तकं च कमण्डलुम्
शुक्लाम्बरधरां देवीं शुक्लमाल्यानुलेपनाम् ५

त्रिनेत्रां चारुवदनां सर्वाभरणभूषिताम्
मृदा वा निर्मितां देवीं स्थापयेत्सर्वसिद्धये ६
तस्याः संस्थापनार्थं तु मण्डपं कारयेत्ततः
पूर्वोक्तलक्षणोपेतं तत्र कुण्डानि कल्पयेत् ७
योन्याकाराणि सर्वाणि चतसृष्वपि देशिकः
शांकरे वृत्तकुण्डं तु प्रधानं परिकल्पयेत् ८
गोमयेनोपलिप्याथ मण्डपं कुण्डवेदियुक्
आनीय प्रतिमां तत्र कल्पिते स्नानमण्डपे ९
उन्मीलनं तु नेत्राणां कुर्यान्मन्त्री यथा पुरा
प्रतिमायास्ततः शुद्धिर्जले चाप्यधिवासनम् १०
पूर्ववत्कारयित्वाथ स्नानमण्डपमध्यमे
वेदिकायां ततोऽर्चां तामानीय स्थाप्य मन्त्रवित् ११
वस्त्रकूर्चादिकं त्यक्त्वा गन्धतोयेन वर्मणा
अभिषिच्य ततो देवीं चन्दनेनोपलिप्य च १२
कौतुकं बन्धयेद्धस्ते दक्षिणे हेतिमुच्चरन्
पूर्ववद्वस्त्रकूर्चाभ्यां वेष्टयित्वा च वर्मणा १३
शिरस्यर्घ्यं तु दत्त्वास्या वेदादीन्समुदीरयन्
मण्डपस्याथ संस्कारमलंकारादिकं तथा १४
यथापूर्वं तु निर्वृत्य स्थण्डिले परिकल्पिते
शयने वेदिकामध्ये सर्वातोद्यसमन्वितम् १५
आनीयार्चां ततश्चापि शाययेन्मूलविद्यया
प्राक्शिरश्चोर्ध्ववक्त्रां तां छादयेद्रक्तवाससा १६
कवचेन ततः कुम्भान्पूर्ववत्साधयेच्छुभान्
देव्याः शिरोन्तिके तेषु प्रधानकलशं न्यसेत् १७

परितः कलशानष्टौ संस्थाप्य चार्चयेत्सुधीः
मध्ये सरस्वतीं ध्यात्वा कृत्वा विद्यातनुं तदा १८
आवाहनादिभिर्देवीं मूलमन्त्रं समुच्चरन्
यथोक्तविधिनाभ्यर्च्य परितः कलशेष्वपि १९
श्रियं शशीमुषेन्द्राण्यौ महादिक्षु समर्चयेत्
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं तथैव च २०
विदिक्षु च स मावाह्य प्रणवेन समर्चयेत्
ततश्च होमं कुर्वीत साधकैः सह देशिकः २१
विधिनाग्निं समाधाय कुण्डेष्वपि च पञ्चसु
प्रधाने देवीमभ्यर्च्य शेषेष्वपि यथाक्रमम् २२
कमलादीः समाराध्य होमयेद्द्रव्यसंचयम्
समिदाज्यचरूँल्लाजान्यववेणुतिलान्क्रमात् २३
प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादिषु क्रमात्
पलाशस्तु प्रधाने स्यात्समिद्धोमं समाचरेत् २४
अधिपानां च सर्वेषां प्रत्येकं तु शताहुतीः
होमयेत्सर्पिषा तेन साममन्त्रेण साधकैः २५
पूर्ववदाहुतीर्हुत्वा परिषिच्य समापयेत्
तस्मिन्काले चतुर्दिक्षु ऋगाद्यध्ययनं भवेत् २६
शांकरेऽस्त्रजपं कुर्यात्सर्वातोद्यसमन्वितम्
ततः कुम्भस्थदेवीनां हविर्दद्याद्यथाक्रमम् २७
एवं कृत्वा निशायां तु प्रभाते सुमुहूर्तके
कृतनित्यक्रियो गत्वा मण्डपं होतृभिः सह २८
देवीनामर्चनं कृत्वा पूर्णां मूलेन दापयेत्
ततो देवीं समुद्धृत्य कूर्चवस्त्रं व्यपोह्य च २९

रथादिषु समारोप्य कृत्वा धामप्रदक्षिणम्
अन्तः प्रविश्य गर्भस्थे दैविके मानुषेऽपि वा ३०
पदे संस्थापयेद्विद्वानवटे रत्नसंयुते
पूर्ववत्कल्पिते मन्त्री मूलविद्यां समुच्चरन् ३१
स्थापयेद्वा पीठमपि कृत्वा संधिं विधानतः
उद्वास्य शिल्पिनं पश्चात्स्नात्वाचम्य यथाविधि ३२
प्रविश्य गर्भगेहान्तः प्रतिमाशुद्धिमाचरेत्
पुण्याहं च ततः कृत्वा कुम्भानुद्धृत्य वाहकैः ३३
देशिको होतृभिः सार्धं कृत्वा धामप्रदक्षिणम्
अन्तः प्रविश्य देव्यग्रे स्थण्डिले विन्यसेत्सुधीः ३४
सुप्रसन्नः प्रशान्तात्मा कृतविद्यातनुस्तदा
मन्त्रन्यासं तु कुर्वीत पूर्ववन्मूलविद्यया ३५
अभिषेकं ततः कुर्यात्प्रागादिकुम्भतोयकैः
मूलाङ्गमातृकान्यासं पूर्ववत्सर्वमाचरेत् ३६
मालाभरणवस्त्राद्यैः कृत्वालंकारमुत्तमम्
अभ्यर्च्य देवीं गन्धाद्यैः परमान्नं निवेदयेत् ३७
प्रभूतव्यञ्जनोपेतं फलभक्ष्यं निवेदयेत्
ताम्बूलं मुखवासं च ततो दद्यादतन्द्रितः ३८
ततः पुस्तकरूपेण लिखितं तु शिवागमम्
पुराणाद्यं च वेदाङ्गं पट्टवस्त्रैः समावृतम् ३९
देव्यास्तु वामपार्श्वे तु विद्यापीठे च विन्यसेत्
प्रत्यहं पूजयेद्देवीं पुस्तकं चापि मन्त्रवित् ४०
गुणप्रधानयोरेवं समानं सर्वथोदितम्
प्रधाने तु विशेषोऽयं कथ्यते मधुसूदन ४१

पश्यन्ती मध्यमा चैव प्रतीहारस्य देवते
श्वेतवर्णे द्विनेत्रे च द्विभुजे वा चतुर्भुजे ४२
वाहनं तु भवेद्धंसः परिवारतथोच्यते
कमलादयः शक्तयोऽस्याः पूर्वादिषु च संस्थिताः ४३
पूर्वोदिता देवतास्तु संस्थाप्य पूजयेत्सुधीः
अधिवासादिकं तासां पूर्ववत्कारयेद्गुरुः ४४
नृत्तगीतादिवाद्यैश्च सर्ववेदस्वनैर्युतम्
एवं यः कुरुते मर्त्यो देव्याः स्थापनमुत्तमम् ४५
विद्यार्थी लभते विद्यां भोगार्थी भोगमाप्नुयात्
मोक्षार्थी लभते मुक्तिं नात्र कार्या विचारणा ४६

इत्यजिताख्ये महातन्त्रे क्रियापादे सरस्वतीस्थापनविधिः
एकोनषष्टितमः पटलः

षष्टितमः पटलः
त्रिशूलादिस्थापनविधिः
त्रिशूललक्षणम्

तन्मध्ये पद्ममंशाभ्यां साष्टपत्रं सकर्णिकम्
सवृत्तं तत्प्रकर्तव्यं शेषं युक्त्या प्रकल्पयेत् १
यथाविधि त्रिशूलस्य दण्डं सम्यक् प्रकल्पयेत्
तत्तारादधिके तारे युगांशेऽग्र्यंशतो भवेत् २
ऊर्ध्वं वायुप्रवेशाय दारुदण्डस्य कल्पनम्
पञ्चाङ्गुलप्रमाणेन विवरं गोलके भवेत् ३
साम्बिका वा स्थिता रम्या सर्वाभरणभूषिता
पालिकोपरि कोणेषु कारयेद्वा वृषेश्वरम् ४

कुर्याच्छूलमुखे कुम्भे टङ्कास्यं संप्रयोजयेत्
एवं लक्षणमुद्दिष्टं प्रतिष्ठाविधिरुच्यते ५
हर्म्याग्रे मण्डपं कृत्वा पूर्ववल्लक्षणान्वितम्
कुण्डानि परितस्तस्य प्रागादिषु यथाक्रमम् ६
चतुरश्रं धनुर्वृत्तं त्रिकोणं शाङ्करे तथा
पद्मकुण्डं तत्र मध्ये वेदीकल्पनपूर्वकम् ७
स्थण्डिलं च ततः कृत्वा स्नानमण्डपमत्र च
तत्र शूलं समानीय नेत्रोन्मीलनमाचरेत् ८
सबेरं चेत्पुरोक्तेन विधिना देशिकोत्तमः
स्थण्डिले च लिखेन्मध्ये पद्ममष्टदलान्वितम् ९
तत्र मध्वादि विधिवद्धेरनेत्रेषु तर्पयेत्
शूलान्वितं तु तत्कृत्वा पञ्चमृत्पञ्चगव्यकैः १०
ग्रामप्रदक्षिणं चादौ कृत्वालं कारसंयुतम्
जलतीरं समानीय पुण्याहं तत्र कारयेत् ११
तत्राभिषिच्य शूलाग्रं सकूर्चं वेष्टयेत्ततः
वाससा च नवेनैव प्राक्शिरोश्चोर्ध्ववक्त्रकम् १२
शाययेत्फलकायां तु परितोऽस्त्राणि चार्चयेत्
वज्रादीनि ततो मन्त्री नीत्वा कालं तु पूर्ववत् १३
उद्धृत्याथ जलात्तस्मात् स्नानमण्डपमानयेत्
तन्मध्ये वेदिकायां तु शूलं तु प्राङ्मुखं न्यसेत् १४
ततः कूर्चं सवस्त्रं च व्यपोह्य परिशोधयेत्
पञ्चमृद्भिस्ततः पञ्चगव्येनाप्यभिषेचयेत् १५
ब्रह्मपञ्चकमुच्चार्य गन्धोदेनैव देशिकः
ततः प्रतिसरं बद्ध्वा पूर्ववत्कूर्चसंयुतम् १६

आवेष्ट्याहतवस्त्रेण सदण्डं हेतिमुच्चरन्
मण्डपे वेदिकामध्ये स्थण्डिले परिकल्पिते १७
शयने पूर्ववत् क्लृप्ते सर्वातोद्यसमन्वितम्
शाययेत्प्राक्छिरश्चोर्ध्ववक्त्रमस्त्रं विचक्षणः १८
तदूर्ध्वे पुष्पमादाय छादयित्वाथ वाससा
रक्तेनास्त्रं समुच्चार्य ततः कुम्भांस्तु विन्यसेत् १९
पूर्वोक्तलक्षणोपेतान्गन्धवारिसुपूरितान्
सकूर्चान्सा पिधानांश्च वस्त्रेण परिवेष्टयेत् २०
वस्त्राग्रेषु त्रिशूलस्य नामोङ्कारेण कारयेत्
सौवर्णं मध्यमे शूलं दक्षिणे कनकाम्बुजम् २१
वामे चापि तथैवाब्जं विन्यसेत् कलशत्रये
तादृशान्कलशानष्टौ परितो दिक्षु विन्यसेत् २२
पुण्याहं वाचयित्वा तु पूजयेद्देवताः क्रमात्
मध्ये महेश्वरं देवं दक्षिणेतरपार्श्वयोः २३
ब्रह्मविष्णू च संपूज्य कलशेषु ततः क्रमात्
लोकपालान्यथास्थानं गन्धाद्यैरर्चयेत्क्रमात् २४
ततो होमं प्रकुर्वीत तद्विधानमथोच्यते
आधाय विधिनैवाग्निं सर्वकुण्डेषु मन्त्रवित् २५
ब्रह्मविष्णुमहेशांस्तु प्रधानेऽस्मिन्समर्चयेत्
प्राक्कुण्डे तु भवानीं च दक्षिणे विघ्ननायकम् २६
पश्चिमे षण्मुखं भानुमुत्तरे च यजेत्क्रमात्
समिदाज्यचरूँल्लाजांस्तिलसर्षपकान्यवान् २७
प्रतिकुण्डं तु होतव्यं मूलाङ्गैश्च यथाक्रमात्
प्रत्येकं शतमर्धं वा तदर्धं वाहुतिर्भवेत् २८

होमकाले चतुर्दिक्षु ऋगाद्यध्ययनं भवेत्
ब्रह्मविष्णवोश्च सर्वत्र घृतेनैव शताहुतिम्  २९
हुत्वा गौर्याश्च पश्चात्तु गजास्यगुहयोरपि
भास्करस्य च चण्डस्य दिक्पालनां तथैव च  ३०
पञ्चपञ्चाहुतीर्हुत्वा सर्वेषां च पृथक् पृथक्
सर्वकुण्डेषु मन्त्रज्ञो होमकाले स्पृशेत्क्रमात्  ३१
सर्वद्रव्यावसाने तु मध्यमे चैव दक्षिणे
वामे चैव क्रमान्मन्त्रैस्तत्तत्पत्रपरात्मकैः  ३२
पालिकां च ततः कुम्भं दण्डाग्रं दण्डमध्यमम्
दण्डमूलं ततः पीठकर्णिकादिदलेषु च  ३३
सर्वत्रापि त्रिशूलस्य क्रमेणैवाथ संस्पृशेत्
सर्वकुण्डेषु तां मूर्तिमर्चयित्वा च पावकम्  ३४
परिषिच्याथ होमं तु समाप्यैव हविः क्रमात्
कुम्भस्थानां तु देवानां दद्यात्तत्तद्धृदा सुधीः  ३५
नीत्वा शेषं ततो रात्रेः प्रभाते होतृभिः सह
कृतकृत्यक्रियो मन्त्री मण्डपं संप्रविश्य च  ३६
देवं पूर्ववदभ्यर्च्य सुमुहूर्ते सुलग्नके
पूर्णाहुतिं प्रदत्त्वा तु ह्यघोरास्त्रं समुच्चरन्  ३७
सर्वेष्वपि च कुण्डेषु व्याहृत्यन्ते तु देशिकः
ततः शूलं समुद्धृत्य शिवास्त्रेण समाहितः  ३८
स्नानवेद्यां तु विन्यस्य वस्त्रकूर्चादिकं त्यजेत्
पञ्चगव्येन संस्नाप्य गन्धोदेन सुसेचयेत्  ३९
कुम्भानुद्धृत्य तान्सर्वाञ्शूलाग्रे तु यथापुरा
विन्यस्य स्थण्डिले धीमान्कृतविद्यातनुस्ततः  ४०

मध्यकुम्भे महेशं तु ध्यात्वा मन्त्रतनुस्तदा
तस्य मूलं समुच्चार्य तोयेन प्रतिमाहृदि ४१
मध्यपत्रस्य मध्ये च पूर्ववद्विन्यसेत्सुधीः
ब्रह्माणं दक्षिणे पत्रे वामपत्रे च केशवम् ४२
तत्तत्कुम्भान्क्रमान्नयस्य तैः क्रमादभिषेचयेत्
कुम्भैः प्रणवमुच्चार्य शेषैस्तु कलशैस्ततः ४३
अभिषिच्य तथा शूले मूलमन्त्रं तु विन्यसेत्
ईशविष्णुविरिञ्चानां मन्त्रं पत्रेषु विन्यसेत् ४४
पालिकायां न्यसेद्गौर्याः कुम्भे हस्तिमुखस्य च
दण्डाग्रे षण्मुखस्यापि दण्डमध्ये रवेस्तथा ४५
दण्डमूले शशाङ्कस्य चण्डस्य तदधःक्रमात्
पीठादिषु दिगीशानां दलेष्वथ च विन्यसेत् ४६
तत्तद्देवयुतं शूलं ब्रह्मपञ्चकमुच्चरन्
गन्धाम्बुनाभिषिच्याथ गन्धपुष्पादिभिर्यजेत् ४७
तस्यापि सर्वदेवानां हविर्दद्यात्क्रमेण तु
त्रिमूर्तीनां ततो दद्यात्ताम्बूलं मुखवासयुक् ४८
तत्तद्धृदयमन्त्रेण ततश्चाभरणादिभिः
पुष्पैः शूलमलङ्कृत्य सर्वदेवमयं ततः ४९
ग्रामादावुत्सवं कुर्यात्सर्वातोद्यसमन्वितम्
अचलस्य प्रतिष्ठायां रत्नन्यासं च कारयेत् ५०
वज्रादीनामथान्येषामायुधानां जनार्दन
स्वर्णादिनिर्मितानां तु प्रतिष्ठा वक्ष्यतेऽधुना ५१
वेद्यां तु स्थण्डिलं कृत्वा पद्ममालिख्य तत्र वै
मध्यमे कर्णिकायां तु विन्यसेत्कुम्भमेककम् ५२

ससूत्रं वस्त्रसंयुक्तं गन्धोदपरिपूरितम्
सहिरण्यं सकूर्चं च पिधानेन पिधाय च ५३
वज्रादिपद्मपर्यन्तान्यायुधानि दश क्रमात्
एवं स्थाने तु विन्यस्य प्रागादि परितः क्रमात् ५४
क्षालितानि ततः पश्चाद्गन्धेन प्रोक्षितानि च
अस्त्रादीन्यथ सर्वाणि स्वस्वमन्त्रेण पूजयेत् ५५
तत्तत्कुम्भेषु पुष्पाद्यैर्विधिवच्च यथाक्रमात्
ततो होमं तु कुर्वीत प्राच्यां दिशि समाहितः ५६
कुण्डे वा स्थण्डिले वापि विधिनाग्निं निवेश्य च
समिदाज्यचरूणां तु वज्रादिषु दशस्वपि ५७
विधानेनाहुतीनां तु प्रतिद्रव्यं दशार्धकम्
हुत्वाघोरास्त्रमन्त्रेण दत्त्वा पूर्णाहुतिं ततः ५८
कुम्भस्थकूर्चतोयेन मन्त्रान्विन्यस्य तेषु च
सर्वाण्यस्त्राणि वै तत्तत्कुम्भेनैवाभिषेचयेत् ५९
एवमस्त्राणि सर्वाणि यः सम्यक्स्थापयेन्नरः
विरोधिनः सर्वशत्रूञ्जित्वान्ते गणपो भवेत् ६०
इत्यजिताख्ये महातन्त्रे क्रियापादे त्रिशूलादिस्थापनविधिः षष्टितमः पटलः

## एकषष्टितमः पटलः
## विमानप्रतिष्ठाविधिः

अथ वक्ष्ये विमानस्य प्रतिष्ठां तामिमां शृणु
ये देवाः स्युर्विमानस्थास्तेषां तु क्रियतेऽधुना १
सा विमानप्रतिष्ठा स्यात्तद्विधानमथोच्यते

प्रासादस्य चतुर्दिक्षु शांकरे वापि मण्डपान् २
सप्तपञ्चत्रिभिर्हस्तैः कुर्याच्छ्रेष्ठादिकांस्तु तान्
विकारचरणोपेतांश्चतुर्गात्रयुतांस्तु वा ३
पङ्क्तित्रयसमोपेतांस्तन्मध्ये वेदिका भवेत्
सा विकाराङ्गुलोत्सेधा दर्पणोदरसन्निभा ४
नवभागैकभागा च मण्डपेषु पृथक् पृथक्
पूर्वे तु चतुरश्राणि चतुर्दिक्षु प्रकल्पयेत् ५
दक्षिणे मण्डपे चापि चतुर्दिक्षु समन्ततः
चापाकाराणि कुर्वीत वृत्तकुण्डानि पश्चिमे ६
षडश्राण्युत्तरे चापि तथा कुण्डानि कल्पयेत्
सर्वेषां शांकरे देशे प्रधानं पद्मकुण्डकम् ७
गोमयेनोपलिप्याथ भोजयित्वा द्विजांस्ततः
शुद्धिं कृत्वाथ पुण्याहं कृत्वा सर्वान्यथाविधि ८
कुण्डवेदिसमायुक्तान्सर्वांस्तान्मण्डपांस्ततः
वितानाद्यैरलंकृत्य वेदिकासु प्रकल्पयेत् ९
स्थण्डिलं विधिवत्तेषु पद्ममालिख्य तेषु च
शक्तिचक्रं समभ्यर्च्य वेदिकादिक्षु पूर्ववत् १०
देवान्सर्वान्समभ्यर्च्य कुम्भानथ समाहरेत्
द्रोणपूर्णान्घटान्पञ्च पूर्ववल्लक्षणान्वितान् ११
गन्धोदपूरितान्सर्वान् स्वर्णपुष्पसमन्वितान्
सकूर्चान्सापिधानांश्च नववस्त्रेण वेष्टितान् १२
पञ्चसंस्थापयेन्मध्ये वेदिकासु समाहितः
प्रत्येकमष्टौ परितस्तदर्धपरिमाणकान् १३
तादृशानथ कुम्भांस्तु विन्यसेद्दिग्दलेषु वा

एवं विन्यस्य कुम्भांस्तु पुण्याहं वाचयेत्ततः १४
ततः प्रासादमध्ये तु प्रोक्षयित्वा तदम्भसा
पञ्चगव्येन संप्रोक्ष्य ब्रह्मपञ्चकमुच्चरन् १५
पुण्याहं वाचयित्वान्ते कौतुकं बन्धयेत्सुधीः
स्थूप्यां पूर्वं शिवास्त्रेण ततश्चाग्रस्थितस्य तु १६
देवस्य तद्धृदा बद्ध्वा ततोऽन्येषामपि क्रमात्
गलस्थितानां देवानां प्रादक्षिण्यक्रमेण तु १७
स्वस्वहेतिं समुच्चार्य वृषाणामपि बन्धयेत्
दक्षिणे शृङ्गमूले तु ततः सर्वान्नवाम्बरैः १८
स्थूप्यादीन्वेष्टयेन्मन्त्री तत्तत्कवचमुच्चरन्
सर्वेषु कुशकूर्चं तु मालया सह बन्धयेत् १९
प्रणवं सुसमुच्चार्य ततः शिखरमंशुकैः
कण्ठं च प्रस्तरं पादमधिष्ठानं तथैव च २०
वस्त्रैरावेष्ट्य मन्त्रज्ञः सद्यादि ब्रह्मभिः क्रमात्
ततश्चान्तः प्रविश्यैवमभिषिच्य समाहितः २१
पञ्चगव्येन सर्वत्र प्रोक्षयेदस्त्रमन्त्रतः
ततः पाद्यादिभिर्देवं हविरन्तैः क्रमाद्यजेत् २२
ततो बहिर्विनिष्क्रम्य शांकरे मण्डपे गुरुः
होतृभिः सह मन्त्रज्ञैश्चतुर्भिः सह मण्टपम् २३
शिवास्त्रेण तु संप्रोक्ष्य कृतविद्यातनुर्गुरुः
पूजयेत्कुम्भगान्देवांस्तद्विधानमथोच्यते २४
स्कन्दस्य मण्टपे वेद्यां शिवकुम्भं तु मध्यमे
विन्यस्य तस्य मध्ये तु पञ्चरत्नं विशेषतः २५
ध्यात्वा सदाशिवं तस्मिञ्शिवकुम्भे तु विन्यसेत्

वर्धनीं तस्य वामे तु तस्यां हैमं विनिक्षिपेत्  २६
ध्यात्वा मनोन्मनीं तस्यां तन्मूलेन तु विन्यसेत्
स्कन्दकुम्भं न्यसेद्धीमाञ्शिवकुम्भस्य दक्षिणे  २७
पञ्चरत्नं क्षिपेत्तस्मिन्ध्यात्वा स्कन्दस्य रूपकम्
तन्मूलं तु न्यसेत्तस्मिन्गन्धपुष्पादिकं क्रमात्  २८
तत्तदीशानमन्त्रैश्च पूजयेत्तु विशेषतः
लिङ्गमुद्रां च पद्माख्यां शक्तिमुद्रां प्रदर्शयेत्  २९
अभितस्तु घटानष्टौ पूर्वाशादिषु विन्यसेत्
कुमारं षरामुखं चैव सुब्रह्मरायं सुराष्ट्रकम्  ३०
सेनापतिं सुरेशं च कार्तिकेयं गुहं क्रमात्
पूर्वादिषु घटेष्वेतान्न्यसेत्तद्बीजमन्त्रकैः  ३१
तत्तदीशानमन्त्रेण गन्धपुष्पादिभिर्यजेत्
ईशस्य मराटपे वेद्यां स्थरिडलोपरि मध्यमे  ३२
प्रधानकुम्भं न्यस्त्वा तु दक्षिणामूर्तिरूपकम्
ध्यात्वा महेशबीजं तु विन्यसेद्धटमध्यमे  ३३
परितोऽष्टघटेष्वेतान्भवादीन्पूर्वतो यजेत्
भवं शर्वं तथैशानं पशुपतिं रुद्रमेव च  ३४
उग्रं भीमं महादेवं यजेत्पूर्वादितः क्रमात्
विष्णुमराटपवेद्यां तु स्थरिडलोपरि मध्यमे  ३५
प्रधानकुम्भं न्यस्त्वा तु तन्मध्ये विष्णुरूपकम्
ध्यात्वा बीजं च विन्यस्य गन्धादिभिर्यजेद्धृदा  ३६
संकर्षणश्च प्रद्युम्नो वासुदेवोऽनिरुद्धकः
रामश्चैवाच्युतश्चैव नारसिंहश्च वामनः  ३७
क्रमेरौतांस्तथा सर्वानष्टकुम्भेषु पूजयेत्

ब्रह्ममण्टपके वेद्यां स्थण्डिलोपरि मध्यमे ३८
प्रधानकुम्भं विन्यस्य तन्मध्ये ब्रह्मरूपकम्
ध्यात्वा बीजं तु विन्यस्य पूजयेत्पुरुषेण तु ३९
त्रयीमयं च मूर्तिं च पद्माक्षं पद्मयोनिकम्
चतुर्मुखं च धातारं पितामहमजं तथा ४०
तत्तन्मन्त्रं क्रमान्न्यस्त्वा ईशानेनाभितो यजेत्
एवं संपूज्य देवांस्तान्गन्धाद्यैः स्वस्वनामभिः ४१
ऋगाद्यध्ययनं कुर्याच्चतुर्दिक्षु क्रमेण तु
देशिको मूर्तिपैः सार्धं होमकर्म समारभेत् ४२
चत्वारस्तु प्रधानास्ते होतारो नैव पुत्रकाः
मण्टपं प्रति चत्वारस्तैः तैः पूजां समारभेत् ४३
गलस्थितांस्तु तान्देवान् मध्यकुम्भेषु योजयेत्
अग्रेऽन्येषु च कुम्भेषु प्रागादिषु यथाक्रमम् ४४
ततः प्रधानकुण्डेषु प्रधानघटसंस्थितान्
देवानभ्यर्च्य सर्वत्र होमयेत्समिदादिभिः ४५
प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात्
पलाशस्तु प्रधाने स्यात्सर्वत्र समिदुच्यते ४६
होमकालेषु सर्वेषु मण्टपेषु ऋगादिभिः
चतुर्भिश्च चतुर्दिक्षु वेदैरध्ययनं भवेत् ४७
सर्वत्र शांकरे देशे भवेदस्त्रजपस्तदा
गुरुर्वृषेन्द्रमूलाङ्गैः प्रत्येकं तु शताहुतिः ४८
आज्येन होमयेदन्ते विद्याङ्गैश्च ततो गुरुः ४९

इत्यजिताख्ये महातन्त्रे क्रियापादे विमानस्थापनविधिः
एकषष्टितमः पटलः

## द्विषष्टितमः पटलः
## गोलकादिस्थापनविधिः

--- पृथक्पृथक्
मूलमन्त्रेण हुत्वाथ परिषिच्य च पूर्ववत् १
उद्वास्योद्धृत्य पश्चात्तु विन्यसेत्पूर्ववत्क्रमात्
तयोरग्रे घटान्सम्यक्स्थाप्य पूर्ववदेव तु २
पूजयित्वा न्यसेन्मन्त्रं पूर्ववच्चाभिषेचयेत्
लोकपालात्मकैः पश्चादभिषेको घटैर्भवेत् ३
ततश्च धर्मयज्ञाभ्यां हविर्दद्यात्स्वनामतः
सर्वातोद्यसमायुक्तं पादुके स्थण्डिलोपरि ४
न्यस्योद्धृत्य वहन्मूर्ध्ना धाम्नि कृत्वा प्रदक्षिणम्
अन्तःप्रविश्य देवाग्रे विन्यसेत्ते समाहितः ५
पादुकास्थापनं प्रोक्तं प्रोक्षणं मकुटादिषु
हेमरत्नादिसिद्धेषु प्रोच्यते देवसत्तम ६
देवाग्रे मण्डपं कृत्वा गोमयेनोपलिप्य तु
स्थण्डिलं विधिवत्कृत्वा मध्यमे विन्यसेत्ततः ७
प्रोक्षयेद्बहुरूपेण ततः संवत्सरात्मना
संस्पृशेन्मन्त्रवर्येण ततः प्राच्यां तु होमयेत् ८
सैकतस्थण्डिले वह्निं विधिनाधाय देशिकः
समिदाज्यचरूणां तु प्रत्येकं तु शताहुतिः ९
शिवास्त्रं क्षुरिकास्त्रं च तथा पाशुपतास्त्रकम्
मन्त्रत्रयं समुद्दिष्टं वेदेषु संहितादिषु १०
विहितेन च मन्त्रेण व्याहृत्यन्ते स्पृशेच्च तम्

पूर्णां सर्वात्मना हुत्वा होमकर्म समाप्य च  ११
सर्वातोद्यसमायुक्तं दापयेत्तु शिवस्य तु
गायत्रि या भूषणानि तथा सर्वात्मना यजेत्  १२
इत्यजिताख्ये महातन्त्रे क्रियापादे गोलकादिस्थापनविधिः
द्विषष्टितमः पटलः

त्रिषष्टितमः पटलः
भक्तप्रतिष्ठाविधिः
अच्युत उवाच
निखिलागमसमञ्चारिकारुण्यामृतसागर
प्रतिष्ठादिक्रमश्चैव सम्यगुक्तस्त्वयानघ  १
ज्ञात्वा ततः प्रहृष्टोऽस्मि सन्देहः कश्चिदस्ति मे
मद्भक्तिं कुरुते यस्तु सोऽहमेव न संशयः  २
वसेयं हृदये तस्य नित्यं सन्तुष्टमानसः
मदीयानां प्रतिष्ठादीन्ये कुर्वन्त्यतिभक्तितः  ३
मदीयास्तेऽपि कथ्यन्ते ब्रह्माद्यैर्निखिलैः सुरैः
आगस्तेषां प्रकुर्युर्ये हृदा वाचा तथैव च  ४
तेषां प्रसादलेशोऽपि जायते नात्र संशयः
तेषां प्रतिष्ठा कर्तव्या पूजनीयास्त एव मे  ५
एवमुक्तं त्वया पूर्वं भक्तानामिष्टदायक
कथं तर्हि प्रकर्तव्या प्रतिष्ठा च महात्मनाम्  ६
महेश्वर उवाच
साधु साधु महाप्राज्ञ यद्यदुक्तं त्वयाधुना
तत्सर्वं कथयाम्यद्य गोपनीयं जनार्दन  ७

अनादिशैवभेदेन शैवाः सप्तेत्युदाहृताः
शिवो ह्यनादिशैवः स्यादादिशैवः शिवद्विजः ८
महाशैवो द्विजः प्रोक्तः सर्वशास्त्रेषु संमतः
अनुशैवो बाहुजः स्यादार्याः प्रोक्तास्तथैव च ९
अवान्तरा जघन्याः स्युः प्रवराः पारशैवकाः
आन्तरालिकशैवास्तु तदन्ये मानवाः स्मृताः १०
अनादित्यं कथं तस्येत्युच्यते चेद् ब्रवीमि ते
आद्यन्तरहितत्वाच्च अनादिः शिव उच्यते ११
अनादिः शिव एव स्यात्सर्वदा सर्वथा नृणाम्
शिवद्विजानामादित्वं तस्मात्संभवति ध्रुवम् १२
शिवसृष्टेः संभवत्वादादिपूर्वः शिवद्विजः
सृष्ट्यारम्भे शिवस्यास्य जननादादिशैवकः १३
महापूर्वशिवत्वं हि कथं स्याच्च द्विजन्मनाम्
ब्रह्मणः सृष्टिजातत्वान्महाशैवः प्रकीर्तितः १४
क्षत्रियाणां च वैश्यानामानुशैवं कथं स्मृतम्
भूसुराचारकल्पत्वादनुशैवा इति स्मृताः १५
विराजश्चाथ वैश्याः स्युरनुशैवाः प्रभेदतः
अवान्तरत्वं शूद्राणामुक्तं स्यात्क्रमशो हरे १६
दीक्षाभिषेकयोग्यत्वाच्छैवावान्तरसंज्ञकाः
प्रवराणां कथं तेषां पारशैवत्वमुच्यते १७
विजातियोनिभेदत्वात्पारशैवा इति स्मृताः
तदन्यानां नराणां चाप्यन्तरालत्वमुच्यते १८
विजातीयानुयोनित्वात्तन्नाम समुदाहृतम्
प्रवराः पारशैवाः स्युस्तदन्ये चान्तरालिकाः १९

ब्राह्मणाः क्षत्रिया वैश्याः सच्छूद्रा भक्तिसंयुताः
वैदिकैस्तान्त्रिकैश्चाथ पूजनीया महात्मभिः २०
आदिशैवमहाशैवाः षट्कर्मसु नियन्त्रिताः
दीक्षाभिषेकपूजासु अधिकारो विशेषतः २१
परार्थयजने किंत्वधिकारी स्याच्छिवद्विजः
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः २२
चत्वारश्चाश्रमास्तेषां पुरुषार्थप्रदायकाः
अधिकारोऽनुशैवानामाश्रमाणां त्रयेऽपि च २३
सच्छूद्राणां तु सर्वेषामाश्रमद्वितयेऽपि च
अवान्तराणां शैवानां सच्छूद्रत्वमुदाहृतम् २४
आन्तरालिकशैवानां पाराणां क्रमतो हरे
सच्छूद्रत्वं ध्रुवं तेषां न भवेत्तु कदाचन २५
प्रवराः पारशैवाश्च आन्तरालिकशैवकाः
तेषामागमसिद्धान्ते सच्छूद्रत्वं न दृश्यते २६
अनुसंज्ञिकशैवास्तु सच्छूद्रावान्तराश्च ते
अनुष्ठानविशेषेण भिक्षुत्वं यान्ति शैवकम् २७
अन्येषु च प्रमाणेषु भिक्षुत्वमभिदृश्यते
भवानुरागहीनानां शैवाचारप्रवर्तिनाम् २८
योगाभ्यासपराणां तु समयाचारवर्तिनाम्
ब्राह्मणाः क्षत्रिया वैश्याः सच्छूद्रावान्तराश्च ये २९
नैष्ठिका यतिनश्चैव गृहस्था वनचारिणः
दीक्षाभिषेकयुक्ताश्च देशिकाज्ञानुसारिणः ३०
शिवालयप्रतिष्ठायां शिवधर्मविशेषतः
शिवशुश्रूषणं चैव द्विजानां परिपालनम् ३१

तटाकादिप्रखननं ग्रामाणामभिरक्षणम्
पुष्कलं चान्नदानं च शिवरात्रिव्रतादिकम् ३२
कुर्वन्ति मनसा भक्त्या कथ्यन्ते ते महात्मनः
ते मदीया इति ज्ञात्वा धीमान्निश्चितमानसः ३३
कुरुते पूजनं यस्तु गन्धपुष्पादिसंयुतम्
स एव मत्कृपापात्रं भवतीति न संशयः ३४
मदीयानां मृतानां च जीवितानां महात्मनाम्
आचार्यसेकयुक्तानां समयाचारवर्तिनाम् ३५
ज्ञानिनां योगिनां तेषां सिद्धमार्गप्रवर्तिनाम्
तेषां प्रतिकृतिं चाथ दिव्यलक्षणसंयुताम् ३६
दृषदा ताम्रलोहैश्च सुवर्णरजतैः शुभैः
पटीरदारुभिश्चैव कृत्वा सर्वार्थसिद्धये ३७
अरण्ये च नदीतीरे पुण्यक्षेत्रे सुशोभने
आगमोक्तविधानेन प्रतिष्ठां कारयेद्बुधः ३८
नित्यपूजादिकं कृत्वा चोत्सवादिकमाचरेत्
शिवालये विशेषेण शिवभक्तान्कृताञ्जलीन् ३९
सवालचामरकराँल्लिङ्गहस्तान्सलक्षणान्
बिम्बरूपान्विधायाथ महामण्टपदेशतः ४०
मणिमण्टपदेशे वा प्राकाराभ्यन्तरेषु वा
तस्मात्सर्वप्रयत्नेन प्रतिष्ठाप्य यथाविधि ४१
शिवागमविधानेन नित्यपूजां समाचरेत्
प्रतिष्ठितानां भक्तानामालये बिम्बरूपिणाम् ४२
नित्यं नैमित्तिकं काम्यमुत्सवं च समाचरेत्
मोहादज्ञानतो वापि उत्सवादीन्न कारयेत् ४३

स नरो निरयं याति यावदाचन्द्रतारकम्
समाधिभूमौ लिङ्गं च मनोज्ञं च सुलक्षणम् ४४
प्रतिष्ठाप्य यथान्यायं नित्यपूजादिकं चरेत्
शैवानां पारपूर्वाणामान्तरालिकसंज्ञिनाम् ४५
पूर्वोक्तविधिना तेषां प्रतिष्ठादीन्न कारयेत्
जातिसंकरतो यान्ति पूजार्हत्वं न ते पुनः ४६
भक्तिशुश्रूषणेनैव चाप्नुवन्ति परां गतिम्
जन्मान्तरे मृतास्तेऽपि सच्छूद्रत्वं व्रजन्ति हि ४७
मद्भक्तपूजनेनैव प्रतिष्ठा पूर्वकेण तु
अत्यन्तानन्दसंयुक्तस्तथा तृप्तिं व्रजाम्यहम् ४८
अनेकशिवरात्रौ तु भोग्यैः शुद्धोदकैरपि
एलालवङ्गसंयुक्तैश्चन्द्रचन्दनवासितैः ४९
बिल्वपुष्पाक्षतैश्चैव जातीपुन्नागचम्पकैः
मन्दारपारिजातैश्चाप्यन्नैः षड्रससंयुतैः ५०
अष्टाङ्गनतिभिश्चापि स्तोत्रैः श्रुत्यादिसंयुतैः
तत्तदीशैः पूजनैश्च यथा तृप्तिः प्रजायते ५१
मद्भक्तपूजनं यस्तु कुरुते मानवोत्तमः
अणिमाद्यष्टसिद्धिं च पुत्रपौत्रधनादिकम् ५२
स एव सर्वानाप्नोति मम लोके महीयते
बहुनोक्तेन किं देव स एवाहं न संशयः ५३

इत्यजिताख्ये महातन्त्रे क्रियापादे भक्तप्रतिष्ठाविधिः त्रिषष्टितमः पटलः

## चतुष्षष्टितमः पटलः

## नरप्रतिष्ठाविधिः

नरप्रतिष्ठां वक्ष्यामि समासाच्छृणु सांप्रतम्
मद्भक्तास्तु नरा लोके पूर्वोक्ताश्च निजैर्गणैः १
तेषां तु करणापाये कृत्वा प्रतिकृतिं बुधः
पूर्वोक्तलक्षणोपेतां तत्प्रतिष्ठां समारभेत् २
श्रेष्ठमध्यकनिष्ठांस्तु मुनिभूताग्निहस्तकैः
अधिवासाय कुर्वीत मण्डपं कुण्डवेदियुक् ३
विकारस्तम्भसंयुक्तं मण्डपं नवपदं भवेत्
तत्र मध्यपदे वेदिं विस्तारार्धसमुच्छ्रिताम् ४
तस्याश्च परितो दिक्षु कुण्डानि विधिना ततः
चत्वारि कारयित्वा तु मुष्टिमात्रप्रमाणतः ५
चतुरश्राणि सर्वाणि वृत्तमेकं तु शाङ्करे
गोमयेनोपलिप्याथ मण्डपं कुण्डवेदियुक् ६
पुण्याहं वाचयित्वा तु वितानादींस्तु बन्धयेत्
ततः प्रतिकृतिं तत्र समानीय तु मण्डपे ७
प्राङ्मुखं स्थण्डिले स्थाप्य नेत्रोन्मीलनमारभेत्
पद्मादिरेखाः सूच्या तु हैमया शिल्पिना ततः ८
कारयित्वा दृशोः पश्चाद्विन्यसेदमृताक्षरम्
सुवर्णनखयुक्ताभ्यामङ्गुलिभ्यां तु देशिकः ९
तर्जन्यनामिकाभ्यां तु दक्षिणेतरयोः क्रमात्
ततो गवां च धान्यानां दर्शनं विप्रकन्ययोः १०
ततः शुद्धिं तु कुर्वीत स्थण्डिलं विधिना ततः
तत्र पद्मं समालिख्य साष्टपत्रं सकर्णिकम् ११
तन्मध्ये शयनं चापि पूर्ववत्परिकल्पयेत्

शाययेत्प्रतिमां मन्त्री प्राक्शिरश्चोर्ध्ववक्त्रकम्  १२
वस्त्रं चास्त्रेण संछाद्य तस्य मूर्धनि चोत्तरे
प्रधानघटमेकं तु द्रोणपूर्णं मनोहरम्  १३
सितसूत्रविचित्रं च गन्धोदपरिपूरितम्
सहिरण्यं सवस्त्रं च सकूर्चं सापिधानकम्  १४
विन्यस्य परितो दिक्षु चतुरस्तादृशान्घटान्
विन्यस्य पूजयेन्मध्ये गन्धाद्यैस्तत्र चेतनम्  १५
प्रणवं पूर्वमुच्चार्य चात्मतत्त्वपदं ततः
चतुर्थ्यन्तं समायोज्य ततश्चापि नमस्कृतिम्  १६
चेतनस्य तु मन्त्रोऽयं स्थापनार्थमुदीरितः
अनेन मन्त्रवर्येण पूजयित्वा ततः क्रमात्  १७
प्रागादिषु मनो बुद्धिमहङ्कारं क्रमेण तु
चित्तं चापि यजेद्धीमान्नमस्कारान्तसंयुतम्  १८
चतुर्थ्यन्तैस्तु तन्मन्त्रैस्तारपूर्वैस्ततो हविः
सर्वेषां च क्रमाद्दत्वा होमकर्म समारभेत्  १९
कुण्डेषु वह्निमाधाय विधिना होतृभिः सह
प्राक्कुण्डे देशिको धीमान्द्रव्यैरेतैः क्रमेण तु  २०
समिदाज्यचरूँल्लाजांस्तिलांश्चाप्यात्मपूर्वकैः
मन्त्रैस्तु पञ्चभिः सर्वकुण्डेष्वपि च होमयेत्  २१
प्रत्येकं शतमर्धं वा प्रागादिषु समिद्भवेत्
प्लक्षोदुम्बरकाश्वत्थवटजा च ततः क्रमात्  २२
विद्याङ्गैः षड्भिराज्येन प्रत्येकं तु दशाहुतीः
जुहुयात्सर्वकुण्डेषु हृदादीनि च संस्पृशेत्  २३
प्रतिमायाः क्रमान्मन्त्रं प्रतिव्याहृत्यनन्तरम्

परिषिच्य ततो वह्निं सर्वकुण्डेषु रक्षयेत् २४
प्रभाते कृतनित्यस्तु होतृभिः सह देशिकः
प्रविश्य मण्डपं तत्र घटानर्चां च पूजयेत् २५
ततः सर्वेषु कुण्डेषु समिद्धे पावके ततः
सर्वात्महृदयेनैव कृत्वा पूर्णाहुतिं ततः २६
प्रतिमां तत उत्थाप्य त्यक्त्वा कूर्चं सवस्त्रकम्
स्नानवेद्यां तु विन्यस्य गन्धोदेनाभिषिच्य च २७
पञ्चब्रह्म समुच्चार्य ततस्तं घटपञ्चकम्
प्रतिमादिक्रमेणैव समुद्धृत्य प्रदक्षिणम् २८
प्रतिमां तामुपावृत्य घटान्वै स्थण्डिले तथा
यथापूर्वं तु विन्यस्य कृतविद्यातनुर्गुरुः २९
शिवाङ्गैर्ब्रह्मभिश्चैव ततः कुम्भेषु पूजयेत्
आत्मतत्त्वादिचित्तान्तान्गन्धपुष्पादिभिः क्रमात् ३०
ततः कूर्चसृतेनैव मन्त्रांस्तोयेन देशिकः
प्रतिमाहृदि विन्यस्य पञ्चकात्सुसमाहितः ३१
तैस्तोयैरभिषेकं च तैर्मन्त्रैः परिकल्पयेत्
तस्य मूर्ध्नि ततो धीमानीशानं मुद्रया न्यसेत् ३२
मुखे तत्पुरुषं चैव हृदयेऽघोरमेव च
गुह्ये वामं ततः सद्यं पादयोरुभयोरपि ३३
प्रणवेन शिरस्यर्घ्यं दत्त्वाङ्गानि यथाक्रमम्
हृत्पूर्वाणि न्यसेद्धीमान्पूर्वोक्तानि समाहितः ३४
ततस्तां वस्त्रमाल्याद्यैरलङ्कृत्य विशेषतः
सर्वातोद्यसमायुक्तं कृत्वा धामप्रदक्षिणम् ३५
शिवाग्रे स्थाप्य तन्मूर्ध्नि भस्म मूलेन दापयेत्

भक्तप्रतिकृतिर्या तु संस्थिता देवपार्श्वतः ३६
तस्यास्तु स्थापने कुर्यान्नयनोन्मीलनादिकम्
सर्वं सहैव होमे तु देवहोमादनन्तरम् ३७
तस्मिन्कुण्डे घृतेनैव प्रत्येकं तु दशाहुतीः
पूर्वोक्तैः पञ्चभिर्मन्त्रैर्जुहुयाच्छेषं समं भवेत् ३८
एवं यः कुरुते कर्ता सर्वान्कामानवाप्य सः
मोदते रुद्रसामीप्यं लब्ध्वान्ते रुद्रसद्मनि ३९
इत्यजिताख्ये महातन्त्रे क्रियापादे नरप्रतिष्ठाविधिः चतुष्षष्टितमः पटलः

## पञ्चषष्टितमः पटलः

## हर्म्यसम्प्रोक्षणविधिः

अतः परं प्रवक्ष्यामि हर्म्यसम्प्रोक्षणं परम्
आवर्तं चेत्यनावर्तं पुनरावर्तनं तथा १
अन्तरितं हि विज्ञेयं प्रोक्षणं तु चतुर्विधम्
सर्वपापविनाशेन सर्वप्राणिसुखावहम् २
न तिथिर्न च नक्षत्रं कालापनयनं विना
चतुर्मूर्त्यष्टमूर्त्योर्वा नासिकायास्तथैव च ३
वर्णभेदेऽन्यभेदे वा चूलिकायास्तथैव च
तत्र योग्यानि कर्माणि कारयेत्तु विचक्षणः ४
शिल्पिस्पर्शे तु षण्मासे सन्धानं चैव कारयेत्
अत ऊर्ध्वं न कर्तव्यं तदन्ते प्रोक्षणं गुरुः ५
मूर्तिः सन्धानयोग्या चेत्तरुणालयमुत्तमम्
आवाहनक्रमेणैव बालस्थानं प्रवेशयेत् ६

यथा सम्पूजयेद्देवं तथा कुम्भं सुपूजयेत्
विना नित्याग्निकार्येण नैवेद्यं दापयेद्बुधः ७
चण्डरुद्रो महावेगो विबुधोऽविह्वलोत्तमः
विश्वरूपो विशालाक्षो भूधरो मेघवाहनः ८
एतान्विमानपालांश्च पूर्वादिषु क्रमान्न्यसेत्
दिगीशप्रतिमाः कृत्वा निष्कार्धार्धतदर्धकैः ९
उमया सहितं पूर्वे दक्षिणे लकुलीश्वरम्
पश्चिमे तु गजारूढं कङ्कालं चोत्तरे तथा १०
पूर्वादिषु क्रमान्न्यस्य अर्चयेत्स्वस्वनामतः
हर्म्यबेरेण तद्देवान्नेत्रोन्मीलनकर्मणि ११
जलाधिवासं शयनं रक्षासूत्रं विना भवेत्
तन्मासे चैव कर्तव्यमुत्तमं तु विधीयते १२
अत ऊर्ध्वं च कर्माणि पुनरावाहनं कुरु
श्रेष्ठं च सौरमासे तु चान्द्रमासे तु मध्यमम् १३
मासद्वयं विमाने न मासषट्कं विधीयते
षण्मासान्ते च कर्तव्यं सम्प्रोक्षणमथाचरेत् १४
प्रासादस्य चतुर्दिक्षु अथवाप्यग्रकेऽपि वा
मण्टपं कल्पयेद्धीमान्पूर्वोक्तविधिना सह १५
पञ्चाग्निं वाथ एकाग्निं कुण्डे वा स्थण्डिलेऽपि वा
पर्यग्निकरणं कृत्वा वास्तुपूजां विचक्षणः १६
उमया सहितं चैव शवर्गान्तं समुच्चरन्
अभितः कलशानष्टौ विद्येशानां स्वनामतः १७
लकुलीशेन संयुक्तं सप्तवर्गतृतीयकम्
कलशानष्ट विन्यस्य पूर्वोक्तविधिना सह १८

पुरन्दरस्य देवस्य प्रथमस्य तृतीयकम्
तत्तकुम्भाष्टकं न्यस्य तत्तन्मन्त्रेण पूजयेत् १९
कङ्कालमूर्तेरेवं तु प्रथमं स्वरसंयुतम्
अष्टविद्येश्वरान् कुम्भे स्वस्वनाम्ना तु पूजयेत् २०
वेदिकापञ्चकुण्डेषु पूर्वोक्तविधिना सह
समिधा हृदयेनैव आज्यं घोरेण होमयेत् २१
चरुं हुत्वा विशेषेण बहुरूपेण मन्त्रतः
तिलमीशानमन्त्रेण हुत्वा मुद्गं तु नेत्रतः २२
पलाशसमिधा चैव द्रव्यान्ते व्याहृतीर्हुनेत्
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः २३
वेष्टनं रक्तवस्त्रेण स्थूप्यन्तं कल्पयेद्बुधः
पूर्वेद्युरधिवासः स्यात्प्रभाते प्रोक्षणं कुरु २४
पञ्चकुम्भान्समादाय धामप्रदक्षिणं गुरुः
तत्तत्कुम्भोदकेनैव तत्तन्मूर्तीस्सुयोजयेत् २५
मध्यकुम्भोदकेनैव स्थूप्यन्तं प्रोक्षयेद्बुधः
सुमुहूर्तेऽप्युक्तराशौ लग्नशुद्धिस्तथा भवेत् २६
तत्तत्स्थाने तु सम्प्रोक्ष्य तत्तत्कुम्भजलेन तु
प्रधानकुम्भोदेनैव दर्पणं चाभिषेचयेत् २७
बहुरूपेण मन्त्रेण प्रोक्षयेद्दोषशान्तये
गन्धपुष्पादिभिः पूज्य धूपदीपादि दापयेत् २८
मूललिङ्गे च हर्म्ये च नैवेद्यं दापयेद्बुधः
उपचाराणि सर्वाणि ताम्बूलादीनि दापयेत् २९
आचार्यदक्षिणां दद्याद्वस्त्रहेमाङ्गुलीयकैः
शक्त्या दानादिकं कृत्वा ब्राह्मणान्भोजयेत्ततः

इहैव धनवान् श्रीमान्देहान्ते मोक्षमाप्नुयात् ३०

इत्यजिताख्ये महातन्त्रे क्रियापादे हर्म्यसंप्रोक्षणविधिः पञ्चषष्टितमः पटलः

## षट्षष्टितमः पटलः

## वृषदानविधिः

वृषदानमथो वक्ष्ये सर्वकामार्थसाधनम्
दत्त्वा वृषं ककुद्मन्तं शिवस्य परमात्मनः १
सर्वयज्ञफलं प्राप्य शिवलोके महीयते
ब्राह्मणः कापिलं दद्याद्वृषं श्वेतमथापि वा २
क्षत्रियो रक्तवर्णं तु धूम्रवर्णं वणिक् तथा
शूद्रस्तु कृष्णं सर्वेषां कृष्णवर्णः शुभप्रदः ३
अरोगी हृष्टपुष्टाङ्गः पीनोन्नतककुत्तमः
नाङ्गहीनं न चैवोग्रं दद्याद् देवाय प्रीतये ४
उत्तरायणकाले तु माघमासविवर्जिते
शुभवारसमायुक्ते शुक्लपक्षे ददेद्वृषम् ५
दिवसे पुण्यलग्ने तु तद्विधानमथोच्यते
शिवक्षेत्रसमीपे तु स्नापयित्वा वृषं ततः ६
सितेन वाससा कण्ठे बद्ध्वानीय शिवास्त्रतः
शिवगायत्रिमन्त्रेण प्रोक्षयित्वा वृषं ततः ७
यज्ञवृक्षसमुद्भूते स्तम्भे तं बन्धयेद्वृदा
चतुस्तालसमुत्सेधे षोडशाङ्गुलनाहके ८
देवाग्रे दक्षिणे वाथ स्थापिते सुदृढं यथा
तस्य तत्रामिता दूर्वा दद्याद्गायत्रिया तदा ९

ततस्तस्य खुरौ शृङ्गे कल्पयेत्स्वर्णवेष्टितौ
लम्बयेच्च ततोऽस्त्रेण घण्टां कण्ठे च चामरम्  १०
पृष्ठे च कुथमाधाय तनुत्राणेन वस्त्रजम्
तं बद्ध्वा वस्त्रयुग्मेन सितेनास्त्रं समुच्चरन्  ११
वृषेन्द्रमूर्ध्नि तन्मूलमन्त्रेणार्घ्यं तु विन्यसेत्
चतुरश्रे तु देवाग्रे कुण्डे वा स्थण्डिलेऽपि वा  १२
विधिनाग्निं समाधाय समिदाज्यचरूंन्क्रमात्
माषंमुद्गकुलुत्थांश्च दूर्वांश्चापि समूलकैः  १३
अङ्गैः षड्भिर्वृषेन्द्रस्य जुहुयात्तदनन्तरम्
ततश्च वृषगायत्र्या तं स्पृष्ट्वा तु दशाहुतीः  १४
वृषेन्द्रं जुहुयात्पश्चात्पूर्णां मूलेन होमयेत्
ततो देवं तु संस्नाप्य सहस्रादिषु सम्भवैः  १५
कलशैरथ सम्पूज्य विशेषादर्चयेच्छिवम्
ततो वृषप्रदाने तु कारयित्वा प्रदक्षिणम्  १६
वृषेण सह देवाग्रे स्थापयित्वा च तौ तदा
जपेन्मन्त्रमिमं मन्त्री देवस्य पुरतः स्थितः  १७
ककुद्मन्तममुं देवं समुत्सृष्टमनेन तु
त्वदर्थं प्रतिगृह्यैनमनुगृह्णीषु सर्वदा  १८
एवमुच्चार्य मन्त्रज्ञोऽप्युत्सृजेति प्रदापयेत्
उत्सृष्टे तु वृषे तस्मिन्देशिकं वृषदोऽर्चयेत्  १९
इत्यजिताख्ये महातन्त्रे क्रियापादे वृषदानविधिः षट्षष्टितमः पटलः

सप्तषष्टितमः पटलः

## प्रदक्षिणनमस्कारविधिः

प्रदक्षिणनमस्कारविधिं वक्ष्ये समासतः
तयोः प्रदक्षिणं तावत्त्रिविधं परिकीर्तितम् १
आद्यं प्रदक्षिणाख्यं स्याद्देवाय परिकल्पितम्
सव्यापसव्यमन्यच्च सर्वाङ्गैः स्यात्तृतीयकम् २
तेषु प्रदक्षिणं त्वाद्यं प्रादक्षिण्येन कल्पितम्
सव्यापसव्यतः सोमसूत्रालङ्घनतः कृतम् ३
सव्यापसव्यमित्युक्तं दीक्षितानां तु तद्भवेत्
अङ्गप्रदक्षिणं यत्तत्सर्वाङ्गैः परिकल्पितम् ४
एकत्रिपञ्चसप्ताद्यैः कारयेदोजसंख्यया
एकविंशतिसंख्याभिरुत्तमं तु प्रदक्षिणम् ५
तिथिसंख्याकृतं मध्यमधमं मुनिसंख्यया
पञ्चसंख्याकृतं यत्तदधमे मध्यमं भवेत् ६
अधमाधममेवोक्तं गुणसंख्याकृतं तु यत्
तस्मादप्यवरं प्रोक्तं कृतमेकं प्रदक्षिणम् ७
प्रदक्षिणप्रयोगे तु मृदुगत्या समाहितः
दृष्ट्वा पूर्वं पदं न्यस्य हित्वा चान्याभिभाषणम् ८
वेदमन्त्रं स्त्वं वापि गृणन्नेव समाचरेत्
सर्वेषां योग्यमाद्यं स्याच्छिवाय परिकल्पितम् ९
सव्यापसव्यमार्गेण पूजान्ते तु प्रदक्षिणम्
गर्भे गेहेऽर्चकस्योक्तं दीक्षितस्यैव बाह्यके १०
प्रदक्षिणं नृणां नोक्तमन्तर्मण्डलके सदा
अङ्गप्रदक्षिणं कुर्वन्कृत्वा भूमौ निजां तनुम् ११
दण्डवद्बाहुयुग्मेन सह बद्ध्वा ततोऽञ्जलिम्

कृत्वा दण्डनमस्कारं शिवाग्रे तु सकृन्नरः १२
प्रदक्षिणं तथा कुर्यादेकं वा त्रयमेव वा
पञ्च वा सप्त वा चैव सर्वपापनिवृत्तये १३
कृत्वा पुनस्तथाग्रे तु नमस्कारं च भक्तितः
उत्थाय प्रणतिं भूयो भूयः कृत्वा समापयेत् १४
कृत्वा प्रदक्षिणं भक्त्या शिवस्यैकं समाहितः
अश्वमेधस्य यज्ञस्य सुखेन लभते फलम् १५
अन्तर्हारकृते प्रोक्तं फलमेतत्प्रदक्षिणे
त्रिगुणं मध्यहारे तु मर्यादायां चतुर्गुणम् १६
महामर्यादिके चैव कृतं पञ्चगुणं भवेत्
क्षेत्रावधिकृतं बाह्ये भवेच्छतगुणं नृणाम् १७
एवं प्रदक्षिणं कुर्यात् नमस्कारमथोच्यते
अष्टाङ्गमथ पञ्चाङ्गमेकाङ्गं त्रिविधं भवेत् १८
तेष्वष्टाङ्गमिदं विद्धि भूपृष्ठे दण्डवत्तनुम्
कृत्वा बद्ध्वाञ्जलिं तत्र कराभ्यां प्रणमेत्पुरा १९
शिरसा च ततः श्रोत्रनेत्रभ्रूहनुयुग्मकैः
दोर्भ्यां हृद्देशतश्चापि भवेदष्टाङ्गमुत्तमम् २०
पञ्चाङ्गमुच्यते तत्राप्यञ्जलिं प्रथमं ततः
द्वितीयं शिरसा प्रोक्तं तृतीयं श्रोत्रयुग्मकम् २१
चतुर्थं चाङ्गयुग्मेन हृद्देशेनापि पञ्चमम्
एवं पञ्चाङ्गमुद्दिष्टमथ चैकाङ्गमुच्यते २२
एकाङ्गं तु नमस्कारं शिरसैव कृतं भवेत्
भक्त्या कृत्वा नमस्कारं शिवस्याग्रे सकृन्नरः २३
अश्वमेधस्य यज्ञस्य लभते फलमुत्तमम्

पञ्चाङ्गे त्रिगुणं प्रोक्तमष्टाङ्गेऽष्टगुणं भवेत् २४
शिवमुद्दिश्य यद्दत्तं कृतं वा कर्म यद्भवेत्
भक्त्या कृतं च तत्सर्वमनन्तगुणमुच्यते २५
भक्तिहीनैर्नरैः शाठ्यादपि वा या शिवे कृता
नमस्क्रिया सकृद्वापि सर्वपापहरी भवेत् २६
तस्मान्नित्यं सकृद्भक्त्या यो लिङ्गं प्रणमेन्नरः
सर्वान्कामानवाप्यासौ शिवेन सह मोदते २७
अष्टम्यां च चतुर्दश्यां पञ्चदश्यां त्रिजन्मनि
आर्द्रायामर्कवारे च करणे विष्टिसंज्ञके २८
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः
संक्रमे चोत्सवे चैव स्नात्वा कृत्वा प्रदक्षिणम् २९
प्रणमेद्यः शिवं भक्त्या सर्वकामानवाप्य सः
लभेच्छतगुणं पुण्यं केवलं नात्र संशयः ३०
मानुषस्य तु लिङ्गस्य फलमुक्तं प्रदक्षिणे
नमस्कारेण तस्माद्वै द्विगुणं चार्षके भवेत् ३१
त्रिगुणं दैविके लिङ्गे फलं गाणेश्वरे च तत्
चतुर्गुणं समुद्दिष्टं फलं पञ्चगुणं भवेत् ३२
स्वयंभूतस्य लिङ्गस्य तथा संस्पर्शने शतम्
प्रवासी पथि कृत्वा तु शिवलिङ्गं प्रदक्षिणम् ३३
नमस्कृत्वा च पूर्वोक्तात्फलं पञ्चगुणं लभेत्
प्रदक्षिणनमस्कारौ पुण्यकीर्तिषु कल्पितौ ३४
क्षेत्रेषु वाञ्छितां तस्य ऋद्धिमाशु प्रयच्छतः
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ३५
लभते नात्र संदेहः प्रदक्षिणरतो नरः

शतं सहस्रमयुतं नियुतं प्रयुतं तथा  ३६
कोटिं वा कारयेदिष्टसिद्ध्यर्थं तु प्रदक्षिणम्
सूर्योदयं समारभ्य यावदस्तं रवेर्भवेत्  ३७
तावत्प्रदक्षिणं कृत्वा सर्वान्कामानवाप्नुयात्
अथाहोरात्रकं वापि कालेष्वेतेषु यो नरः  ३८
प्रदक्षिणं प्रकुर्वीत सोऽनन्तफलमश्नुते
सव्यापसव्यं कुर्वीत संकल्पस्य तु सिद्धये  ३९
फलं सव्यापसव्ये तु केवलाद्वै शतोत्तरम्
तस्माच्चापि तथा प्रोक्तं फलमङ्गप्रदक्षिणे  ४०
दूरमार्गात्समागम्य फलशान्तियुतोऽपि वा
कृत्वा प्रदक्षिणं भक्त्या प्रणमेच्छिवमव्ययम्  ४१
तस्य मार्गसमुद्भूता यागतिश्चापि केशव
प्रदक्षिणफलं नृणां ददात्येव न संशयः  ४२
दत्तमिष्टमधीतं च यज्ञाश्च बहुदक्षिणाः
शिवलिङ्गप्रणामस्य शतांशेनापि नो समाः  ४३
संपर्कादर्थलोभाद्वा भयात्संगेन वा तथा
मूर्खो वाथ शठो वापि नीचो वा सर्वपापकृत्  ४४
नमस्कृत्वा सकृल्लिङ्गं सर्वपापैः प्रमुच्यते
तस्मात्सर्वं समुत्सृज्य सर्वयत्नेन बुद्धिमान्  ४५
नमस्कुर्यात्सकृद्वापि लिङ्गं त्रिभुवनेश्वरम्
अग्रादारभ्य कुर्वीत सर्वं चापि प्रदक्षिणम्
धाम्नि च सोमदिक्छायां सिद्धिकामो न लङ्घयेत्  ४६

इत्यजिताख्ये महातन्त्रे क्रियापादे प्रदक्षिणनमस्कारविधिः
सप्तषष्टितमः पटलः

## अष्टषष्टितमः पटलः

## वसन्तोत्सवविधिः

वसन्तोत्सवं प्रवक्ष्यामि समासेन जनार्दन
मधुमाधवयोर्मासि पूर्णायामहनि स्मृतम् १
तस्मिन्काले शुभे लग्ने कारयेद्विधिरुच्यते
तत्पूर्वनिशि दान्तं तु गन्धपुष्पैः समन्वितम् २
गन्धतोयेन मन्त्रेण प्रोक्षितं हृदयेन तु
मालामाबध्य पात्रेऽथ निक्षिप्य कवचेन तु ३
प्रासादस्यैशदिग्भागे सौम्ये वा परिकल्पिते
मण्टपे पूर्ववत्तत्र वेदिमध्ये तु कारयेत् ४
विधिना स्थण्डिलं तत्र पद्ममष्टदलं लिखेत्
तन्मध्ये विन्यसेन्मन्त्री दान्तं तं बद्धमालिकम् ५
तस्येशानेऽथवा पूर्वे स्थण्डिले परिकल्पिते
हेमरूप्यादि संसिद्धं कुम्भं चातिमनोहरम् ६
सितसूत्रविचित्रं च गन्धतोयेन पूरितम्
सकूर्चं सहिरण्यं च सापिधानं सवस्त्रकम् ७
विन्यस्योङ्कारमुच्चार्य वर्धनीं तस्य चोत्तरे
तादृशीं विन्यसेन्मन्त्री तदर्धपरिमाणकाम् ८
पुण्याहं वाचयित्वाथ देवं देवीं ततो यजेत्
दान्तं चापि ततो मन्त्री मन्त्रसंहितया यजेत् ९
ततो होमं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा
तत्पूर्वे वाथ वैशान्यां पश्चिमे चोत्तरेऽपि वा १०
विधिनाग्निं समाधाय समिद्धेऽथ हुताशने

समिदाज्यचरूंल्लाजांस्तिलांश्च ब्रह्मपञ्चकैः ११
सद्यादिभिः क्रमाद्यष्ट्वा कृत्वा पूर्णाहुतिं ततः
सर्वात्महृदयेनैव तदन्तरीशदेशके १२
स्थण्डिलं विधिना कृत्वा तत्र कूर्चं तु विन्यसेत्
तन्मध्ये काममावाह्य गन्धपुष्पैः समर्चयेत् १३
ततस्तु काममूलेन दान्तेनैव शताहुतीः
हुत्वा षड्भिस्तदङ्गैस्तु शिवाग्नौ जुहुयात्ततः १४
चन्दनागरुकर्पूरकुष्ठं कुङ्कुममेव च
कस्तूरीं च क्रमेणैव मूलमन्त्रेण होमयेत् १५
ततः स्विष्टकृतं हुत्वा व्याहृत्यन्ते समाहितः
परिषिच्याग्निमुद्वास्य काममुद्वासयेत्ततः १६
एवं रात्रौ विधिं कृत्वा प्रभाते देशिकः सुधीः
कृतनित्यः प्रविश्याथ मण्डपं तत्र पूजयेत् १७
कुम्भयोर्गन्धपुष्पाद्यैर्देवं देवीं समाहितः
दान्तं चापि यथापूर्वं ब्रह्मभिः संस्पृशेत्तदा १८
ततो नित्यावसाने तु शङ्खदुन्दुभिनिस्वनैः
लिङ्गमूर्ध्नि न्यसेन्मन्त्री सर्वात्मानं समुच्चरन् १९
ताम्बूलं मुखवासेन दत्त्वा पश्चात्स देशिकः
व्यक्तलिङ्गेषु तद्दान्तं तन्मूलेन तु दापयेत् २०
उत्सवं च ततः कुर्याद्दान्ताद्यैर्गन्धपुष्पकैः
वस्त्रैराभरणैरन्यैरुत्सवार्चामतन्द्रितः २१
अलङ्कृत्य ततः प्रोक्ष्य गन्धोदेन समन्ततः
गीतनृत्तसमायुक्तं शङ्खदुन्दुभिनिस्वनैः २२
धूपामोदसमायुक्तं संगमे रजनीमुखे

ततश्च गीतनृत्ताद्यैः कुर्यादास्थानमण्डपे २३
विनोदं च विशेषार्चामुत्सवान्ते प्रकल्पयेत्
प्रतिवर्षमिदं यस्तु कारयेदुत्सवं ततः
अश्वमेधफलं भुक्त्वा शिवलोकं ततो व्रजेत् २४
इत्यजिताख्ये महातन्त्रे क्रियापादे वसन्तोत्सवविधिः अष्टषष्टितमः पटलः

## एकोनसप्ततितमः पटलः
## नवनैवेद्यविधिः

नैवेद्यस्य विधिं वक्ष्ये नूतनस्य सुरोत्तम
पूर्वपक्वं तु यद्धान्यं फलपुष्पादिकं भुवि १
तच्छिवाय ततो दद्याद्भक्त्या तस्मै च देहि तत्
तस्य दाने फलं चापि केवलस्य शतोत्तरम् २
तस्मात्सर्वप्रयत्नेन पूर्वपक्वं निवेदयेत्
नवनैवेद्यकालस्तु भवेन्मासत्रयेऽपि च ३
न च माघे तु चेष्टं स्यादस्ते च गुरुशुक्रयोः
चैत्रफाल्गुनयोश्चापि पूर्वपक्षे शुभे दिने ४
शुभर्क्षे शुभयोगे च शुभलग्ने सुरोत्तम
तस्यारम्भे पुरो गत्वा देवक्षेत्रं सुवृद्धिमत् ५
पक्वव्रीहिसमोपेतं चण्डेशेन वृषेण च
तस्य सौम्येऽथवैशान्ये देशे तत्क्षेत्रतीरके ६
गन्धपुष्पादिसंयुक्तं पायसं तु बलिं क्षिपेत्
क्षेत्राधिपतये स्वाहेत्यथ तत्सस्यमूलके ७
सर्वसस्याधिपतये सोमायेति बलिं क्षिपेत्

ततो हेतिं समुच्चार्य दात्रं संप्रोन्द्य देशिकः ८
सस्यं वामेन संप्रोन्द्य सस्यमूले निकृन्तनम्
हेतिनाथावतार्यैतद्विन्यसेत्प्रणवेन तु ९
हेमादिनिर्मिते पात्रे ततस्तच्छिरसा तदा
वाहयित्वाथ तत्क्षेत्रात्सर्वातोद्यसमन्वितम् १०
सर्वालङ्कारसंयुक्तं चण्डेशवृषसंयुतम्
प्रतिमासहितं वापि बहुधान्यफलादिभिः ११
सर्वोपदंशैरन्यैश्च युक्तं दध्याज्यभाण्डकैः
शनैः प्रदक्षिणं कृत्वा ग्रामादौ तु शिवालयम् १२
प्रविश्य मन्त्रलूनं तु धान्यं संशोद्य तण्डुलम्
कृत्वा तत्तण्डुलं पश्चात्पाषाणादिविवर्जितम् १३
षट्कृत्वः क्षालयित्वाथ षडङ्गैस्तान्समाहितः
षट्त्रिंशत्प्रस्थमात्रं स्यात्तण्डुलं चोत्तमं भवेत् १४
अधमादधमं चापि भवेदाढकसम्मितम्
आढकाढकहान्या तु मध्ये सप्तविधं भवेत् १५
मरीचजीरकं चैव चूर्णयित्वा तथैव च
खण्डेन सह चालोड्य नालिकेरफलेन च १६
गुलेन वाथ तत्पात्रे हेमादौ सन्निधाय च
निवेदयेद्धृदा मन्त्री सर्वातोद्यसमन्वितम् १७
ततो बलिं ततो होमं तण्डुलैस्तत्र कारयेत्
बेराणामपि सर्वेषां तण्डुलं हृदयेन तु १८
दत्त्वा दत्त्वा च ताम्बूलं मुखवाससमन्वितम्
ततश्च नवनैवेद्यं वृत्तं तद्व्यञ्जनैर्युतम् १९
निवेदयीत देवाय खण्डाज्यदधिसंयुतम्

प्रतिसंवत्सरं ह्येवं कुर्यात्सस्यस्य वृद्धये २०
इत्यजिताख्ये महातन्त्रे क्रियापादे नवनैवेद्यविधिः एकोनसप्ततितमः पटलः

## सप्ततितमः पटलः
## कृत्तिकादीपविधिः

अथ वक्ष्ये सुरश्रेष्ठ कृत्तिकादीपमुत्तमम्
ऊर्जे मासि सराकायां नक्षत्रे वह्निदैवते १
अस्मिन्प्रदोषकाले तु कृत्तिकादीपमाचरेत्
केवलं पूर्णमास्यां वा प्रदोषे तु समाचरेत् २
तदर्थमङ्कुरं पूर्वमुक्तकाले समर्पयेत्
पूर्वेद्युरधिवासं च रात्रावेवं प्रकल्पयेत् ३
प्रासादाग्रेऽथवैशान्यामाग्नेय्यां वापि मण्टपे
सर्वालङ्कारसंयुक्तं गोमयेनानुलेपिते ४
स्थण्डिलं शालिभिः कृत्वा पद्ममष्टदलं लिखेत्
तण्डुलैः सतिलै रेखां पूरयित्वा समन्ततः ५
परिस्तीर्य ततो लाजान्विकीर्य कुसुमानि च
पुण्याहं वाचयित्वादौ प्रोक्षयित्वा शिवाम्भसा ६
दीपाधाराणि तत्रैव पञ्च त्रीण्येकमेव वा
मध्ये पूर्वे ततश्चापि दक्षिणे पश्चिमोत्तरे ७
मध्ये पूर्वे प्रतीच्यां तु मध्यपूर्वे जनार्दन
विन्यस्य प्रोक्षयेत्तानि बहुरूपं समुच्चरन् ८
तत्पूर्वे पश्चिमे वापि कुण्डे वा स्थण्डिलेऽपि वा
शिवाग्निं जनयित्वात्र होमयेद्देशिकोत्तमः ९

समिदाज्यचरूँल्लाजान्यवसर्षपवेणुजान्
व्रीहिं च शतमर्धं वा तदर्धं वा यथेच्छया १०
सर्वात्महृदयाद्यैस्तु षडङ्गैरथ च क्रमात्
सद्यो जातादिभिश्चैव होमयेद्द्रव्यसंचयम् ११
ततः सर्वात्मना तत्र दीपाधारेषु गोघृतम्
प्रक्षिप्य पात्रे वा वर्तिं घृतं तस्मिन्विनिक्षिपेत् १२
ततोऽग्नौ ज्वलिते तत्र वह्निबीजेन होमयेत्
तस्मादग्नेरघोरेण गृहीत्वा चाथ वर्तिना १३
दीपं प्रवर्तयेन्मध्याद्दीपाधारेषु देशिकः
सर्वत्राग्निं ततो दीपानाप्रासादाच्च लक्षयेत् १४
आरोपणाय दीपानामालयाग्रे च पृष्ठतः
पार्श्वयोरपि कूटांस्तु कृत्वा धामाङ्घ्रिमानतः १५
दीपाधाराञ्शरावांस्तु पर्जन्यादि निवेशयेत्
दीपस्तम्भांस्तु चतुरश्चतुर्द्वारेषु सद्मनः १६
स्थापयेच्चक्रसंयुक्तौ द्वौ वा धामाग्रपृष्ठयोः
एकमग्रेऽथवा स्तम्भं स्तम्भवृक्षा भवन्त्यमी १७
चम्पकाशोकपुन्नागा वकुलोऽर्जुन एव च
तालः सनालिकेरेण क्रमुको वंश एव च १८
स्तम्भः प्रासाददैर्घ्यः स्याच्छिखरेण समोऽथवा
नवाष्टसप्तहस्तैर्वा श्रेष्ठादिक्रमयोगतः १९
स्तम्भे चक्राणि विन्यस्येद्रुद्रनन्दाब्धिसंख्यया
श्रेष्ठमध्यकनिष्ठानि तेषां विस्तार उच्यते २०
विकारतालमुत्कृष्टं रवितालं तु मध्यमम्
कन्यसं वसुतालं स्यात्स्तम्भचक्रेषु विस्तरम् २१

एकतालं च हित्वाथ तथा स्तम्भाग्रमूलयोः
तुल्यान्तराणि चक्राणि स्तम्भेषु परिकल्पयेत् २२
चक्रार्धादरमाकृष्य प्रतिचक्रं चतुष्टयम्
ततः स्तम्भं तु संस्थाप्य वृत्तं कुर्यात्तदग्रके २३
तस्योर्ध्वे विन्यसेद्दीपपात्रमाढकपूरितम्
तत्र पुत्तलिकां बद्ध्वा कार्पासस्यूतकेन च २४
सितवस्त्रेण तां तत्र निक्षिपेत्तैलमध्यमे
चक्रे तु परितो वृत्ते दीपाधाराञ्शरावकान् २५
प्रत्येकं रुद्रनन्दाब्धिसंख्यातान्विन्यसेत्सुधीः
श्रेष्ठमध्यकनिष्ठांस्तांस्तेषु पुत्तलिकां ततः २६
निक्षिप्य तैलयुक्तेषु ततः पुण्याहमाचरेत्
स्तम्भमूलं तु वस्त्रेण नवेन परिवेष्टयेत् २७
तस्यासनार्थं तन्मूले स्थण्डिलं शालिभिर्भवेत्
परिस्तीर्य कुशैः पश्चाद्दीपस्तम्भेऽग्निमर्चयेत् २८
दिक्षु कोणेषु वा तस्य कुर्याद्धोमचतुष्टयम्
समिदाज्यचरूणां तु प्रत्येकं विंशसंख्यया २९
शिवपाशुपतास्त्राभ्यां वह्निबीजेन चैव हि
हुत्वा सर्वत्र पूर्णां तु वह्निबीजेन सर्वतः ३०
प्रविश्य देवदेवेशं नत्वा तानधिवासितान्
दीपाञ्शिरसि हस्ते वा धारयित्वा प्रदक्षिणम् ३१
कृत्वा धामनि देवाग्रे प्रविश्यान्तर्निवेशितान्
हृदयेन तु मन्त्रेण शिवस्यैतान्प्रदापयेत् ३२
तेषु मध्याद्गृहीत्वाथ दीपेन करवर्तिना
अन्तबर्हिश्च तद्धाम्नो दीपमालां प्रवर्तयेत् ३३

तेषु तेषु च सर्वेषु प्राकारेषु च दीपयेत्
प्रासादोपरि सर्वत्र दीपयेद्दीपमालया  ३४
उत्सवं च ततः कुर्यात्प्रदीपैरुज्ज्वलैः सह
नृत्तगीतसमायुक्तं सर्वातोद्यसमन्वितम्  ३५
तस्मिन्नुत्सवकाले तु स्तम्भमूलसमीपके
देवताग्रे तु स्तम्भाग्रमारुह्य परिचारकः  ३६
प्रवर्तितेन दीपेन दीपिका अधिवासिताः
दीपयेत्क्रमशश्चोर्ध्वाच्चक्रेषु परितः क्रमात्  ३७
अधः स्थित्वाथवा दीपान्वर्तयेद्दण्डवर्तिना
विशेषादर्चनं कुर्याद्रात्रौ स्नपनपूर्वकम्  ३८
चन्दनागरुधूपैश्च भक्ष्यभोज्यादिभिः शुभैः
शिवस्याथ शिवाग्नौ च विशेषाद्धोममाचरेत्  ३९
उत्सवप्रतिमां चापि विशेषेण समर्चयेत्
प्रतिसंवत्सरं ह्येवं यः कुर्याद्दीपमुत्तमम्
सर्वान्कामान् स संप्राप्य परमं तु शिवं व्रजेत्  ४०

इत्यजिताख्ये महातन्त्रे क्रियापादे कृतिकादीपविधिः सप्ततितमः पटलः

## एकसप्ततितमः पटलः

## तुलादिप्रत्ययविधिः

प्रत्ययानां तुलादीनां विधिं वक्ष्ये समासतः
अस्मिन्विवादमात्रेऽस्य कर्ताकर्तेति वा तथा  १
वादेषु संशये जाते जिज्ञासूनां च भूभुजाम्
निश्चयार्थमिदं प्रोक्तं दिव्यानामष्टकं क्रमात्  २

तुलाग्न्यापो विषं कोशस्तप्तमाषस्तथापरः
तराडुलाः शपथश्चेति तत्कर्मस्थानमुच्यते ३
शिवालयेषु सर्वेषु दुर्गासूर्यालयेषु च
विनायकगुहस्थाने नदीमध्ये च तीरयोः ४
तटाकतीरे वा कुर्यान्नृपब्राह्मणसंनिधौ
सर्वेषामपि कालः स्याद्वारः सूर्याधिराजयोः ५
तुला सर्वेषु योग्या स्यात्प्रवाते सति वर्जयेत्
शरद्वसन्तयोश्चापि निदाघेऽग्निं विवर्जयेत् ६
निदाघे सलिलं कार्यं शिशिरे विषमुच्यते
हेमन्तेऽपि च कुर्वीत विषमन्येषु वर्जयेत् ७
शेषाणामिह दिव्यानां सर्वकालो विधीयते
तेषु दिव्येषु सर्वेषु तुलादौ सम्यगुच्यते ८
अश्वत्थ नृपवृक्षौ च बिल्वः किंशुक एव च
शिंशपाखदिरौ चैव शमी ग्राह्यास्तुलाविधौ ९
मधुयुक्तकुठारेण तस्य च्छेदोऽस्त्रमन्त्रतः
तेनैव तरुणा कार्यस्तुलाधारस्तु तोरणः १०
स्तम्भयोरुच्छ्रयं तत्र रवितालेन कल्पयेत्
विंशाङ्गुलं तयोर्नाहं तोरणं च तथा भवेत् ११
तुलार्धे तु तुलाकुम्भमायसं परिकल्पयेत्
तुलायामं भवेत्तत्र मुनितालेन सम्मितम् १२
चतुरश्रा तुला सा स्यादायामाग्न्यंशनाहतः
तन्मध्ये जलमार्गः स्यात्खातमङ्गुलमानतः १३
तस्य द्व्यङ्गुलविस्तारं सुसमं परिकल्पयेत्
अयोमयीं तु लम्बार्थं तुलामध्ये तु शृङ्खलाम् १४

आबध्योर्ध्वमुखीं तस्याः शिरसोरप्यधोमुखीम्
शृङ्खलां तादृशीं तद्बद्ध्वा द्वयोः शिक्यं निवेशयेत् १५
तोरणेऽथ तुलां सम्यग्लम्बयित्वा यथासमम्
अस्त्रमन्त्रेण संप्रोक्ष्य तोरणं च तुलां ततः १६
कृतोपवासं सम्यक्तु स्नातं शुद्धाम्बरं तथा
आहूयाभ्युक्षितं चापि ततो मन्त्रं समुच्चरन् १७
कृताञ्जलिपुटं तत्र प्राङ्मुखं तत्र वेदयेत्
तस्य मूर्ध्नि शिरःपत्रं लिखितं स्वप्रतिज्ञया
श्लोकेनानेन संयुक्तं बन्धयेद्धेतिमुच्चरन् १८
चन्द्रादित्यौ दहनपवनौ भूमिरापोऽम्बरं च
क्षेत्रज्ञोऽयं यदिह सकलं कर्म जानन्त्यमुष्य
कालः कर्ता स च सकलविद्देवनाथो यमश्च
देवाः सर्वे सततमपि नु संस्थिताश्चात्र देहे १९
ततस्तत्तोरणस्थानमष्टहस्तेन सम्मितम्
गोमयेनोपलिप्याथ कुट्टिमे परितः सुरान् २०
तोरणं चार्चयेन्मन्त्री तद्विधानमथोच्यते
इन्द्रादीनां दिगीशानामष्टानां च यथास्थिति २१
मण्डलं रत्निमात्रेण लिखित्वा तेषु देशिकः
व्रीहिभिः पिङ्गलैः सर्वाण्यन्तरालानि पूरयेत् २२
पद्ममष्टदलं तेषु कर्णिकाकेसरैर्युतम्
वर्तयेदथवा तानि वालुकैर्वा प्रपूरयेत् २३
इन्द्रपावकयोर्मध्ये वसूनां स्थानमुच्यते
अग्निनाशनयोर्मध्ये रुद्राणां स्थानमुच्यते २४
मातृणां यजनस्थानं मध्ये स्याद्यमरक्षसोः

रक्षोवरुणयोर्मध्ये स्थानं गाणेश्वरं भवेत् २५
वरुणानिलयोर्मध्ये मरुतां स्थानमुच्यते
वायुचन्द्रमसोर्मध्ये दुर्गास्थानमथोच्यते २६
ईशानसोमयोर्मध्ये स्थानं विद्याद्गुहस्य च
देवेशेशानयोर्मध्ये रवीणां स्थानमुच्यते २७
एतेषामपि सर्वेषां मण्डलं तु पृथक्पृथक्
कौशिकाङ्गुलमानेन कल्पयेत्कल्पवित्तमः २८
पुण्याहं वाचयित्वाथ प्रादक्षिण्यक्रमेण तु
इन्द्रादीन्परितो यष्ट्वा देशिकः शान्तमानसः २९
अर्घ्यादिहविरन्तैस्तु द्रव्यैः पश्चाद्यजेत्क्रमात्
वस्वादीन्परितो देवान्पूर्ववद्देशिकोत्तमः ३०
धर्मयज्ञौ ततो धीमांस्तोरणस्तम्भयोर्यजेत्
तोरणे च चतुर्वक्त्रं तुलायां विष्णुवर्चयेत् ३१
तुलायन्त्रे तुलामध्ये जलमावर्जयेत्ततः
जलेनोत्तानसमतामन्वीक्ष्याथ परीक्षकैः ३२
धर्मविद्भिर्द्विजेन्द्रैस्तु वणिग्भिर्देशिकैस्तदा
तुलामारोपयेत्तं हि नरं मृत्तिकया तदा ३३
तुलितं तु ततो मर्त्यमवतार्याथ होमयेत्
तदास्यापि चतुर्दिक्षु स्थण्डिले सैकतैः कृते ३४
शिवाग्निं विधिनाधाय समिदाज्यचरून्क्रमात्
मन्त्रैस्तु होमयेद्धीमानात्मविद्याशिवात्मकैः ३५
सर्वत्र प्रणवेनाथ दद्यात्पूर्णाहुतिं स्रुचा
पुनस्तं धटमारोप्य पठेन्मन्त्रवरं गुरुः ३६
भगवन्देवदेवेश सर्वभूतहृदि स्थित

सर्वज्ञास्य नरस्याशु ब्रूहि वृत्तं सुरेश्वर ३७
इति देवं ततो मन्त्री प्रार्थयित्वा परीक्षयेत्
पूर्ववत्तुलितः सोऽयमतिक्रान्तो विशुध्यति ३८
धर्मगौरवमाहात्म्याद्भवेत्तस्यात्मगौरवम्
अथाग्नेश्च विधिं वक्ष्ये कृत्वा स्थानं यथा पुरा ३९
देवतावरणैर्युक्तं मध्ये तस्याथ देशिकः
नवकं मण्डलानां तु कुर्यात्पूर्वपरायतम् ४०
मण्डलानां प्रमाणं स्यात्प्रत्येकं तु दशाङ्गुलम्
अन्तरालं तु तेषां च तावदेव प्रकीर्तितम् ४१
मण्डलेषु च सर्वेषु पूरयेदन्तरालकम्
वालुकेन ततो रेखाप्रान्तांस्तांश्चापि पूरयेत् ४२
पक्वेष्टकासमुद्भूतैश्चूर्णैः सर्वान्समन्ततः
आग्नेयमण्डलं चाद्यं द्वितीयं वारुणं स्मृतम् ४३
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम्
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ४४
सप्तमं सोमदैवत्यमष्टमं सूर्यदैवतम्
नवमं वैश्वदैवत्यं मण्डलं परिकीर्तितम् ४५
बाह्यस्था देवताः सर्वाः पूर्ववत्पूजयेत्क्रमात्
होमं चापि यथापूर्वं तत्रापि परिकल्पयेत् ४६
पञ्चाशत्पलिकं कुर्यादायसं खण्डमुत्तमम्
तस्यायामस्समुद्दिष्टः कौशिकाङ्गुलमेव हि ४७
तद्रूपं वर्तुलं वा स्यात्सर्वदोषविवर्जितम्
देवतावरणाद्बाह्ये कृत्वायस्कारगर्तकम् ४८
वह्निबीजं समुच्चार्य टङ्कमभ्यर्चयेत्ततः

प्रदक्षिणक्रमेणैव कृत्वा गर्ते क्षिपेत्ततः ४९
अयस्कारेण पिण्डं तद् ध्मापयेत्तत्र भस्त्रया
अग्निवर्णं तु सन्ताप्य स्थापयित्वा त्वनन्तरम् ५०
उपोषितं कृतस्नानमार्द्राम्बरमनाकुलम्
आद्ये मण्डलके तस्य बद्ध्वा शिरसि पत्रकम् ५१
सूर्यस्याभिमुखं मन्त्री स्थितस्तस्याञ्जलौ ततः
सप्तपिप्पलपत्राणि न्यस्त्वा सूत्रेण वेष्टयेत् ५२
तदूर्ध्वे चाक्षतान्मन्त्री शमीपत्रं च विन्यसेत्
ततो मन्त्री पठेन्मन्त्रं तस्याग्रे सुस्थितः सुधीः ५३
त्वमग्ने सर्वभूतानामन्तश्चरसि पावक
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ५४
ततोऽयस्कारगर्तात्तदग्निवर्णमयोमयम्
अयस्कारेण पिण्डं तद्दापयेदञ्जलौ ततः ५५
सोऽपि सप्तपदं गच्छेन्मण्डलान्मण्डलं क्रमात्
नवमे मण्डले पश्चात्तृणे शुष्केऽपि तं न्यसेत् ५६
ततः षट् पञ्च वा नीत्वा नाडिकास्तत्करद्वयम्
तत्परीक्ष्य तदाचार्यो दग्धं वादग्धमित्यथ ५७
दग्धं चेत्स नरः पापी भवत्येव न संशयः
तोयस्याथ विधिं वक्ष्ये शुद्ध्यशुद्धिविनिर्णयम् ५८
ह्रदेषु च तटाकेषु जलूकाझषकीटकैः
वर्जितेषु मनोज्ञेषु स्वच्छतोयेषु देशिकः ५९
शैवालादिविहीनेषु नोत्तरङ्गेषु कारयेत्
पूर्ववद्देवतार्चां तां होमं चापि प्रकल्पयेत् ६०
मध्ये चापि ततो धीमान्मण्डले हस्तमात्रके

धर्मदेवं समभ्यर्च्य तत्र सत्यमनुं न्यसेत् ६१
शनैः शनैस्तमभ्यर्च्य हेतिना देशिकः सुधीः
ततो नरं समाहूय शिरःपत्रं तु बन्धयेत् ६२
सपत्रं तं जले स्थाप्य प्राङ्मुखं तस्य चाग्रतः
स्थापयेन्मर्त्यमन्यं च चापविद्याकृतश्रमः ६३
धनुस्तत्र समुद्धृत्य त्रीञ्शरान्प्राङ्मुखः स्थितः
प्रक्षिपेत्तेषु मध्यस्थो गच्छेदूर्ध्वं तु मध्यतः ६४
तस्मिन्नुद्योगकाले तु मज्जतः स्नानवत् त्रिधा
उरोदघ्ने जले तत्र गृहीत्वा ग्रस्थजानुनी ६५
यथा देहं न पश्येत्तु तीरस्था जनता तदा
यावच्छरं गृहीत्वाशु नान्तिकं च न दूरकम् ६६
आयाति स धनुष्मांस्तु न तूर्णं न विलम्बितम्
तावन्निमज्जतः शुद्धिर्नान्यस्य परिकीर्तिता ६७
विषस्याथ विधिं वक्ष्ये पूर्ववद्देवतार्चनम्
पूजने च कृते होमे तत्र मध्ये विषं सुधीः ६८
मण्डले विन्यसेत्पात्रे पूजिते तु घृतप्लुतम्
अस्त्रमन्त्रेण संप्रोक्ष्य तानि वक्ष्ये समासतः ६९
लाङ्गली हयमारं च कारस्करमतः परम्
धुत्तूरबीजं चैतानि विषाणि स्युः सुरोत्तम ७०
एतेष्वेकतमं ग्राह्यं निष्कद्वयसमं ततः
तस्य हस्ते ततो दद्यात्संस्थितस्य नरस्य तु ७१
सोऽपि तद्भक्षयेत्सद्यः सूर्यस्याभिमुखस्थितः
परीक्षाकालस्तस्यापि यायमात्रमिति स्मृतम् ७२
निर्विकारो यदि भवेच्छुद्धो भवति मानवः

अन्यथा चेदशुद्धः स्यात्पापे तस्मिन्प्रकाशिते ७३
प्रत्यौषधैस्ततश्चापि रक्षयेद्विषपीडितम्
शुण्ठी लाङ्गलिकायै स्यात्पथ्या तु करवीरके ७४
कारस्करे भवेज्जम्बु प्रवालं च ततोऽम्बुजम्
धुत्तूरस्याम्बुपिष्टं तच्छमनाय प्रदापयेत् ७५
कोशस्याथ विधिं वक्ष्ये देवार्चाहोमपूर्वके
कृते कर्मणि सर्वस्मिंस्तस्य कोशं प्रदापयेत् ७६
त्रिविधस्यापि लिङ्गस्य ब्रह्मविष्णवोर्गुहेन्द्रयोः
विनायकस्य दुर्गायाः सूर्यस्याप्यायुधस्य च ७७
मातृणामपि रूपाणि सर्पिषा पयसाथवा
जलेन वाभिषिच्याथ तत्तद्द्रव्यं विगृह्य च ७८
प्रसृतित्रयमात्रं तु पूर्ववत्संस्थितस्य तु
नरस्य दापयेत्सोऽपि प्राङ्मुखस्तत्पिबेत् त्रिधा ७९
सोऽपि शुद्धो भवेद्यस्य विकृतिर्नोपजायते
अर्वाक् चतुर्दशाहात्तु ततोऽन्यः पापभाग्भवेत् ८०
तप्तमाषविधिं वक्ष्ये शुद्ध्यशुद्धिविनिर्णये
व्रीहीणां तण्डुलानां वा प्रत्येकं दशभिः समम् ८१
तुलितं माषमित्युक्तं तत्तु सौवर्णमुच्यते
चक्रिकामूर्मिकां वापि तेन स्वर्णेन कारयेत् ८२
पञ्चगव्येन तन्मन्त्री हेतिना क्षालयेत्ततः
षोडशाङ्गुलविस्तारं ताराधार्धान्तरालकम् ८३
यवमात्रघनोपेतं चषकं परिकल्पयेत्
तच्च ताम्रमयं प्रोक्तं पश्चाद्देवान्समर्चयेत् ८४
होमयेच्च ततो मर्त्यं संदिग्धं पूर्ववत्स्थितम्

आहूय तस्य चाग्रे तु चषकेऽथ विनिक्षिपेत्  ८५
तैलस्य विंशतिपलं घृतस्य च तथा भवेत्
मध्ये मण्डलमेकं तु कृत्वात्र सक्तुनोत्तमम्  ८६
तत्र धाम समापाद्य संपूज्य विधिना ततः
तत्र न्यस्त्वा ततो मन्त्री त्रिपादीं च यथाक्रमम्  ८७
संप्रोक्ष्यास्त्रेण तस्योर्ध्वे रोपयेच्चषकं ततः
अग्निबीजेन तस्याधो वह्निं प्रज्वालयेत्ततः  ८८
इन्धनेन सुशुष्केण पाचयेच्चषके हितम्
घृततैलं विशेषेण वह्निवत्तद्यथा भवेत्  ८९
स्वर्णमाषं क्षिपेन्मन्त्री वह्निबीजमनुस्मरन्
भार्यासुतानां वाप्येनं शिरांसि स्पर्शयेत्पृथक्  ९०
प्रत्यर्थिनं ततश्चापि परीक्षा समुदाहृता
राजदेवकृता पीडा यदि स्यादाचतुर्दशात्  ९१
दिनान्तस्य मृषा प्रोक्तः शपथस्तेन पापभाक्
बालवृद्धातुरान्मर्त्यान्धटादिषु न योजयेत्  ९२
तेषामन्योऽपि कर्तव्यो गात्रस्यापगतिर्भवेत्
यत्र देशे गृहे कुर्यात्प्रत्ययं विधिना नरः  ९३
तत्र देवस्य पूजार्थं द्रव्यं शक्त्या प्रदापयेत्
दक्षिणां देशिकादिनां यथोक्तं दापयेत्तदा  ९४

इत्यजिताख्ये महातन्त्रे क्रियापादे तुलादि प्रत्ययादि विधि पटलः
एकसप्ततितमः

## द्विसप्ततितमः पटलः

## अद्भुतशान्तिविधिः

अद्भुतानामथो वक्ष्ये शान्तिं दोषनिवृत्तये
उत्पातो विकृतिर्दोषसूचकोऽद्भुत इत्यपि १
पर्यायवाचकैः शब्दैरद्भुतोऽत्राभिधीयते
दिव्यान्तरिक्षभौमास्ते त्रिविधाः परिकीर्तिताः २
दिव्यास्तु शिवलिङ्गेषु संभूतास्त्रिविधेष्वपि
अन्तरिक्षोद्भवाः सर्वे दृष्टा ये ते नभःस्थले ३
ज्योतिश्चक्रेऽथवा दृष्टा भौमास्तु पृथिवीतले
चरस्थिरभवाः सर्वे शान्तिं सर्वेषु कारयेत् ४
दिव्ये महाफला प्रोक्ता नाधमा मध्यमा मता
कन्यसे तु भवन्त्येते होमास्तेषु यथाक्रमम् ५
श्रेष्ठमध्यकनिष्ठानि शान्तिकर्माणि कारयेत्
विना निमित्तं यद्राष्ट्रे लिङ्गस्य चलनं भवेत् ६
खण्डस्फोटौ तु वा सम्यक्स्थाप्य शन्तिमथाचरेत्
त्रिसप्ताहं तु कुर्वीत मूर्तिहोमसमन्वितम् ७
स्नपनं चोत्तमां पूजां विशेषेण च पूजयेत्
मध्याह्ने तत्समाप्तौ तु शेषमुत्सवमारभेत् ८
यदि न क्रियते शान्तिः विनाशो राजराष्ट्रयोः
जायते सर्वथा तस्माच्छान्तिमाशु प्रयोजयेत् ९
सप्ताहं मूर्तिहोमेन स्नपनं नित्यमाचरेत्
विशेषादर्चनं चापि शैवेषु परिकल्पयेत् १०
शाक्तेष्वथ च पञ्चाहं दिशाहोमसमन्वितम्
स्नपनं कारयित्वाथ विशेषाद्यजनं भवेत् ११
अन्येष्वपि च बेरेषु शान्तिहोमसमन्वितम्
स्नपनं कारयेन्नित्यं यावत्सप्तदिनान्तकम् १२

एतेषां शान्तिकाले तु पुण्याहं पूर्वमाचरेत्
होमकाले प्रयुञ्जीत दिशास्वध्ययनं महत् १३
स्तोत्रं मन्त्रजपं चैव गीतनृत्तं तथैव च
करकावृष्टिसंभूतौ वैवर्ण्ये ज्योतिषामपि १४
छायाप्रदीपगमने शान्तिं सम्यक्समाचरेत्
शिवालयेषु सर्वेषु कृत्वा गेहं समाहितः १५
आशाहोमसमायुक्तं स्नपनं कारयेच्छिवे
तस्मात्तत्परिहाराय शिवे शान्तिं प्रयोजयेत् १६
इत्यजिताख्ये महातन्त्रे क्रियापादे अद्भुतशान्तिविधिर्द्विसप्ततितमः पटलः

## त्रिसप्ततितमः पटलः
## जीर्णोद्धारविधिः

उद्धारे तु विमानानां कर्तव्या या कृतिर्भवेत्
सेदानीं कथ्यते तस्य विमानस्य चतुर्दिशि १
शाङ्करे चापि संस्थाप्य मण्टपं वेदिकायुतम्
वालुकेन ततः पञ्च विधिवद्देशिकोत्तमः २
स्थण्डिलानि समापाद्य तेषु होमं प्रकल्पयेत्
वेदिकायां स्थापयेत्तु घटान्पञ्च समाहितः ३
तेषु कुम्भेषु तान्देवान्गलस्थांश्चतुरो यजेत्
ईशानकोणसंस्थे तु स्थूपिस्थं शिवमर्चयेत् ४
खड्गं तत्पार्श्वके न्यस्य दक्षिणे मुष्टिसंयुतम्
हेतिना तं समभ्यर्च्य होमं पश्चात्समाचरेत् ५
तत्तद्देवाङ्गमूलैश्च विधिवत्स्थापितेऽनले

समिदाज्यचरूणां तु प्रत्येकं तु दशाहुतिम् ६
रात्रिशेषं ततो नीत्वा प्रभाते देशिकोत्तमः
कृतनित्यः समभ्यर्च्य कलशेषु च देवताः ७
पूर्णाहुतिं तु सर्वत्र शिवास्त्रेण प्रदापयेत्
ततश्चैशानकोणे तु कुम्भे त्वावाहितं शिवम् ८
खड्गोर्ध्वे विन्यसेन्मूलमुच्चरन्सुसमाहितः
ततस्तेनाभिषिच्यासिं ततोऽग्रादिक्रमेण च ९
कुम्भस्थान्विन्यसेद्देवांश्चतुरः पूर्ववत्सुधीः
अथोऽतः क्रमतः सर्वान्कलशैश्चाभिषेचयेत् १०
ततस्तं खड्गमेकत्र सुगुप्तं सन्निधापयेत्
एवं कृत्वा क्रियां पश्चात्प्रासादं सुमुहूर्तके ११
उद्धृत्य कारयेत्पश्चात्प्रासादं विधिना सुधीः
जीर्णोद्धारे तु लिङ्गानां तद्विधानमथोच्यते १२
भूतवेदाग्निहस्तैस्तु श्रेष्ठमध्यकनिष्ठकैः
विस्तृतं कल्पयेद्द्रव्यं शैलं पक्वेष्टकामयम् १३
आमेष्टकामयं वापि मुखमण्डपसंयुतम्
कौशिकांशे युगांशैस्तु गर्भं तस्य प्रकल्पयेत् १४
तत्र तारेऽग्निभागे तु व्योमांशं स्यान्मसूरकम्
मसूरद्विगुणां भित्तिमुच्छ्रायेण प्रकल्पयेत् १५
तदूर्ध्वे दारुभिः कूटं कल्पयेत्कल्पवित्तमः
लिङ्गगेहं समापाद्यं मूलगर्भार्धमानतः १६
त्रियंशं वा चतुर्थांशं प्रोक्तं बालगृहं त्विह
बालालयस्य पुरतो दक्षिणोत्तरयोस्तु वा १७
वह्निशांकरयोर्वापि देशे कुर्याच्च मण्टपम्

सप्तपञ्चत्रिभिर्हस्तैः श्रेष्ठमध्यकनीयसम्  १८
तन्मध्ये वेदिकां कुर्यान्नवभागैकभागतः
कुण्डानि परितः कुर्यात्पूर्ववन्मन्त्रवित्तमः  १९
अथवा पञ्चपक्षे तु प्रागादिषु यथाक्रमम्
चतुरश्रं धनुर्वृत्तं त्रिकोणं च सुपद्मकम्  २०
गोमयेनोपलिप्याथ ब्राह्मणान्भोजयेत्सुधीः
ततो मार्जनद्रव्यैस्तु शुद्धिं कृत्वा समाहितः  २१
अधिवासनकाले तु विशेषोऽयं प्रदर्श्यते
जीर्णलिङ्गान्तिकेऽग्रे वा स्थण्डिले चोक्तलक्षणे  २२
विन्यसेत्कलशौ मन्त्री शिवशक्तिसुसङ्गतौ
यात्राहोमं तु तत्रैव कृत्वादौ विधिना ततः  २३
भोजयित्वाथ विप्रेन्द्रान्धर्मव्रतपरायणान्
बालस्थानस्थिते लिङ्गे देवमावाह्य मन्त्रवित्  २४
अर्चनोक्तं समभ्यर्च्य प्रभूतं च हविर्ददेत्
नित्योत्सवादिकं सर्वं बालस्थाने च कारयेत्  २५
पञ्चहोमविधाने तु पुरुषं पूर्वकुण्डके
दक्षिणे बहुरूपं तु पश्चिमे सद्य एव च  २६
उतरे वामदेवाख्यमीशाने तु प्रकीर्तितम्
उत्सवं तु यथाशक्त्या द्वितीये तरुणालये  २७
मार्त्तिकं शैलजं लिङ्गमुद्धृत्य प्रक्षिपेज्जले
वामदेवेन मन्त्रेणाघोरेणाथ च दारुजम्  २८
अग्नौ दहेत्तन्मन्त्रेण तत्तन्त्रात्स्थापयेत्पुनः
पिण्डिकालिङ्गयोर्यत्र खण्डस्फोटादिसंभवः  २९
त्याज्यं तदन्तरे तस्माज्जीर्णमेव समुद्धरेत्

बाललिङ्गे विजीर्णे तु तत्रैवोत्पाद्य तादृशम् ३०
स्थापयेद्विधिना धीमान्बालस्थानं न कारयेत्
यवत्रयप्रमाणोर्ध्वं खण्डितं खण्डितं भवेत् ३१
स्फुटितं तु भवेत्तत्र गोवालाग्रप्रवेशने
दग्धं तु तद्भवेद्यत्र वैवर्ण्यमुपलक्ष्यते ३२
खण्डनं स्फोटनं चैव स्वायंभुवे न दोषदम्
रत्नजेष्वथ लिङ्गेषु खण्डादौ समुपस्थिते ३३
तदेवान्येन मानेन कृतहस्तेन शिल्पिना
कारयेल्लोहजे लिङ्गे खण्डस्फोटादिसम्भवे ३४
तन्मानेनापरं लिङ्गं तेन द्रव्येण कारयेत्
अनयोश्चात्र कुर्वीत होमं ब्राह्मणभोजनम् ३५
तस्माच्च शतहस्तोर्ध्वे नेतरत्स्थापयेत्सुधीः
पूर्ववद्धाम सङ्कल्प्य पूर्ववत्स्थापयेत्सुधीः ३६
रत्नलोहजलिङ्गानामुद्धारे पूर्ववद्यदि
कर्तुं न शक्यते तत्र बाणलिङ्गस्थितिर्मता ३७
बाणलिङ्गप्रतिष्ठायां जले नैवाधिवासयेत्
शेषं कर्म समं सर्वं तत्रादौ पिण्डिकां हरे ३८
अचलां स्थाप्य तस्यां तु लिङ्गं संस्थापयेत्ततः
शिल्पिकर्मणि सञ्जाते प्रासादाभ्यन्तरे तले ३९
भित्तौ वा लिङ्गमावेष्ट्य वाससा तु सपीठकम्
शिल्पिस्पर्शो यथा न स्यात्तथा कृत्वाखिलां क्रियाम् ४०
शिल्पिकर्म समाख्यातं नित्यपूजाविरोधतः
पञ्चगव्येन संप्रोक्ष्य ब्रह्मपञ्चकमुच्चरन् ४१
स्नपनं शान्तिहोमं च कुर्यात्तद्विधिपूर्वकम्

नित्याग्निकुण्डे जीर्णे तु तत्पूर्वे वा तथोत्तरे ४२
सैकतं स्थण्डिलं कृत्वा तत्राग्निं कुण्डतो न्यसेत्
यात्राहोमं तु कृत्वादौ तत्र होमं प्रकल्पयेत् ४३
यावत्कुण्डसमाप्तिः स्यात्पश्चादग्निनिकेतने
स्थापयित्वा ततश्चापि यात्राहोमं तु कारयेत् ४४
ततश्चापि प्रकुर्वीत नित्यहोमं विधानतः
बलिपीठेषु जीर्णेषु तानि कृत्वा तु पूर्ववत् ४५
प्रोक्षयेद्विधिना मन्त्री बलिं पार्श्वे तु निक्षिपेत्
यात्राहोमविधिं वक्ष्ये सैकते स्थण्डिले शुभे ४६
विधिनाग्निं समाधाय समिदाज्यचरूंन्क्रमात्
यवसर्षपलाजांश्च तिलांश्च शतसंख्यया ४७
प्रत्येकं तु तदर्धं वा तत्तन्मूलाङ्गकैः क्रमात्
होमयेच्च तदन्ते तु बीजमुख्येन सर्पिषा ४८
होमयेद्देशिको धीमान्संख्ययापि पुरोक्तया
पूर्णां सर्वात्मना तत्र जुहुयाद्देशिकोत्तमः ४९
जीर्णलिङ्गं तु बेरं वा यत्र देशे तु पूज्यते
तत्रानावृष्टिजा भीतिर्वर्तते नात्र संशयः
तस्मात्सर्वप्रयत्नेन जीर्णमुद्धृत्य कारयेत् ५०

इत्यजिताख्ये महातन्त्रे क्रियापादे जीर्णोद्धारविधिस्त्रिसप्ततितमः पटलः

चतुःसप्ततितमः पटलः

## संप्रोक्षणविधिः

संप्रोक्षणविधिं वक्ष्ये सर्वदोषनिकृन्तनम्
षण्मासादूर्ध्वं लिङ्गस्य पूजाकर्मविहीनके १
चण्डालस्पर्शने चैव पुलिन्दैर्धीवरैस्तथा
चोरकैश्च तथा विष्णो ब्रह्मघ्नैर्वापि मद्यपैः २
पातकैर्गुरुनारीगैस्तत्तत्संसर्गिभिस्तु वा
जीर्णोद्धारविधौ वापि प्रायश्चित्तविधौ तु वा ३
प्रोक्तेष्वपि च सर्वेषु संप्रोक्षणमिदं भवेत्
माघभाद्रपदौ त्यक्त्वा प्रोक्षणं सार्वकालिकम् ४
तदर्थं मण्डपं कुर्याद्धाम्नोऽग्रे शाङ्करेऽपि वा
पार्श्वयोरुभयोर्वापि षड्भिः सप्ताष्टभिः क्रमात् ५
हस्तैः करकसंपूर्णं विकारस्तम्भसंयुतम्
नवभागैकभागेन मध्ये वेदिकया युतम् ६
चतुर्द्वारसमायुक्तं प्रतिद्वारं सतोरणम्
वितानध्वजसंयुक्तं दर्भमालासमायुतम् ७
चतुरश्रैश्चतुर्दिक्षु कुण्डैर्वृत्तैर्विदिक्षु च
ईशानशक्रयोर्मध्ये पद्मकुण्डं प्रकल्पयेत् ८
पञ्चहोमविधाने तु कोणकुण्डानि वर्जयेत्
ऐशान्यां कल्पयेत्कुण्डं प्रधानं पद्ममेव तत् ९
गोमयेनोपलिप्याथ मण्टपं कुण्डवेदियुक्
ब्राह्मणान्भोजयित्वात्र गोमयेनानुलेपयेत् १०
पुण्याहं वाचयित्वाथ वास्तुहोमं च कल्पयेत्
तत्र वेद्यां च कुण्डेषु जीवजप्तेन वारिणा ११
संप्रोक्ष्य विकिरेत्तत्र सितपुष्पाक्षतैः क्रमात्

ततश्चान्तः प्रविश्याथ पञ्चमृत्पञ्चगव्यकैः १२
शिवास्त्रेण विशुद्ध्यर्थमुपलिप्याभिषिच्य च
बहुशः शुद्धतोयेन शुद्ध्यर्थमभिषेचयेत् १३
ततश्च पिण्डिकायां च शुद्धिं तद्वत्प्रकल्पयेत्
ततश्च कुशमिश्रेण बिल्वपत्रेण घर्षयेत् १४
पूर्ववत्पुनरेवेशं पिण्डिकां च क्रमेण वै
सर्वात्मनाभिषिच्याथ स्थलं प्रक्षाल्य हेतिना १५
ततो लिङ्गं च देवीं च चन्द्रनेनानुलिप्य च
अर्घ्यं चापि हृदा दत्त्वा मालाभिः सह देशिकः १६
वेष्टयेन्नववस्त्रेण लिङ्गं वेदिं च वर्मणा
ततश्च गर्भगेहं तद्ब्रह्मपञ्चकमुच्चरन् १७
प्रोक्षयेदस्त्रजप्तेन वारिणा देशिकः स्वयम्
निर्गम्य मण्डपं तस्मात्प्राप्य वेद्यां तु शालिभिः १८
स्थण्डिलं पूर्ववत्कृत्वा तत्र कुम्भं दृढं शुभम्
द्रोणपूरं सुपक्वं च सितसूत्रविचित्रितम् १९
गन्धोदपूरितं हेमपद्मयुक्तं सकूर्चकम्
सापिधानं सवस्त्रं च न्यसेन्मध्ये शिवाणुना २०
ततस्तस्योत्तरे भागे तादृग्भूतां तु वर्धनीम्
तदर्धवारिणापूर्य न्यस्त्वा सर्वासु दिक्षु च २१
तादृशान्कलशानष्टौ विन्यसेद् वर्धनीसमान्
हेमशस्त्रसमायुक्तान्सर्वलक्षणलक्षितान् २२
ततस्तेषु शिवं मध्ये वर्धन्यां शक्तिमेव च
विद्येश्वरांश्च देशेषु गन्धपुष्पादिभिः क्रमात् २३
संपूज्य च हविर्दद्यात्ततो होमं प्रकल्पयेत्

अग्निकुण्डेषु सर्वेषु विधिना स्थाप्य पावकम्  २४
तेषु सर्वेषु विद्येशान्प्रधाने च शिवं यजेत्
समिदाज्यचरूणां तु यवसर्षपयोस्तथा  २५
लाजस्यापि तिलस्याथ प्रत्येकं शतसंख्यया
जुहुयान्मूलमन्त्रेण षडङ्गैश्च यथाक्रमम्  २६
प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात्
शमीखादिरबिल्वार्काः पावकादिषु च क्रमात्  २७
पालाशी स्यात्प्रधानस्य समिदेवं प्रकीर्तिता
पञ्चहोमविधाने तु कुण्डेषु ब्रह्मपञ्चकम्  २८
सद्यादीशानपर्यन्तं यथास्थानं समर्चयेत्
प्रतिद्रव्यावसाने तु व्याहृत्यन्ते स्पृशेद्धटम्  २९
होमकाले प्रयुञ्जीत चतुर्दिक्षु ऋगादिभिः
विप्रैरध्ययनं तत्र शाङ्करेऽस्त्रजपान्वितम्  ३०
प्रधाने देशिको धीमाञ्शक्तेर्मूलं समुच्चरन्
सर्पिषैकेन हुत्वाथ तदङ्गैश्च यथाक्रमम्  ३१
विद्येशानां गणेशानां दिक्पालानां तथैव च
तदस्त्राणां च सर्वेषां दशपञ्चकमेव च  ३२
क्रमेण संख्यया हुत्वा स्पृष्ट्वा लिङ्गं सपिण्डकम्
मन्त्रसंहितया धीमांस्ततः स्विष्टकृदाहुतिम्  ३३
हुत्वाथ परिषिच्याथ होमकर्म समापयेत्
ततः प्रभाते विमले होतृभिः सह देशिकः  ३४
कृतनित्यक्रियो गत्वा मण्डपाभ्यन्तरं ततः
कुम्भेषु देवान्संपूज्य कुण्डेष्वपि यथाक्रमम्  ३५
वह्निं प्रज्वाल्य पूर्णां तु सर्वात्महृदयेन च

स्रुचा सर्वत्र दद्याच्च शङ्खदुन्दुभिनिस्वनैः ३६
परिषिच्याग्निमुद्वास्य गर्भगेहं प्रविश्य च
वस्त्रमाल्यादिकं सर्वं हेतिनाथ विसर्जयेत् ३७
ततो लिङ्गं सपीठं तु सर्वात्मानं समुच्चरन्
गन्धाम्बुनाभिषिच्याथ दत्त्वार्घ्यं प्रणवेन च ३८
ततः कुम्भान्समुद्धृत्य सर्वातोद्यसमन्वितः
प्रदक्षिणक्रमादन्तः प्रविश्याग्रे शिवस्य च ३९
स्थाप्य कुम्भान्यथापूर्वं कृतमन्त्रतनुर्गुरुः
गन्धपुष्पादिभिः पूज्य लिङ्गमूले तदासनम् ४०
कुम्भात्कूर्चाम्भसा मूलमन्त्रमुच्चार्य मन्त्रवित्
लिङ्गे देवं समावाह्य देव्यां शक्तिं च मन्त्रवित् ४१
विद्येशान्परितः पीठं तत्तन्मन्त्रं समुच्चरन्
विन्यस्य पूर्ववन्मन्त्री ततस्तैरभिषेचयेत् ४२
शिवकुम्भाम्भसा देवं वर्धन्याथ च पिण्डिकाम्
शेषैश्च लिङ्गं मन्त्रं तु कालात्मानं समुच्चरन् ४३
ततश्चाभ्यर्च्य देवेशमर्चनोक्तप्रकारतः
दत्त्वा हवींषि पञ्चापि शुद्धान्नादीनि देशिकः ४४
मुखवाससमायुक्तं ताम्बूलं च निवेदयेत्
ततश्च देशिकादीनां दद्यादुक्तां तु दक्षिणाम् ४५
मृष्टान्नं ब्राह्मणानां तु दद्यात्तत्र दिनत्रयम्
व्यक्तानामथ लिङ्गानामचलानां जनार्दन ४६
पञ्चहोमविधानेन कुर्यात्संप्रोक्षणं सुधीः
चलानां व्यक्तलिङ्गानां शान्तिहोमसमन्वितम् ४७
स्नपनं वा यथाशक्त्या प्रयुञ्जीत विशुद्धये

प्रासादप्रोन्नणे चापि पूर्वादिचतसृष्वपि ४८
दिन्नु शाङ्करदेशेऽपि गोमयेनोपलेपिते
कुट्टिमं विधिवत्कृत्वा स्थरिडलं तत्र विन्यसेत् ४९
ससूत्रांस्तोयसंपूर्णान्वस्त्रकूर्चसमायुतान्
कुम्भान्पञ्च ततस्तेषु दिक्स्थान्दिक्स्थेषु पूजयेत् ५०
देवाञ्शिवं यजेदीशे तेषामग्रे च होमयेत्
समिदाज्यचरूणां तु प्रत्येकं तु शतार्धया ५१
संख्यया मूलनेत्रास्त्रैर्देवानां तु यथाक्रमम्
हुत्वा पूर्णाहुतिं चापि दद्यात्प्रणवमुच्चरन् ५२
एवं हुत्वा ततः कुर्यात्पुरायाहं विधिवद्धरे
प्रोन्द्ये धाम्नि ततः कुम्भैरीशानादि यथाक्रमम् ५३
प्रोन्नयेत्तत्तदस्त्रेण हेयमुद्धृत्य देशिकः
वृषादीनां तु देवानां पीठस्थाने तथैव च ५४
शान्तिहोमसमायुक्तं स्नपनं विधिना भवेत्
अग्निकार्येषु संस्पृष्टे वह्निमुद्वास्य तत्र वै ५५
पञ्चगव्येन संप्रोन्द्य कुराडे वाग्निं विधानतः
स्थरिडले वा समाधाय शान्तिहोमं विधानतः ५६
एवं धिष्राये समुद्दिष्टं प्रोक्तं संप्रोन्नणं ततः
मराडपं गोपुरं वापि प्राकारं वा सभां मठम् ५७
गृहं वा विधिवत्कृत्वा प्रोन्नणं तस्य शुद्धये
कुर्यादेवं विधानेन तद्विधानमथोच्यते ५८
तस्य पूर्वे तथा भौमे मध्ये वा कुट्टिमे कृते
गोमयेनोपलिप्यात्र स्थरिडले विधिना कृते ५९
मध्ये कुम्भं न्यसेत्तत्र गन्धोदपरिपूरितम्

सहिरण्यं सवस्त्रं च सकूर्चं सापिधानकम्  ६०
पुण्याहं तत्र कुर्वीत कुम्भे ब्रह्माणमर्चयेत्
वास्तोष्पतिं ततो होमं तत्पूर्वे वास्तुसंज्ञितम्  ६१
कृत्वा पूर्वोक्तविधिना तत्पूर्वे वाथ चोत्तरे
एकाशीतिपदं कृत्वा पूजयेद्वास्तुदेवताः  ६२
पूर्ववत्स्थापनं कृत्वा ताश्च कुम्भे समर्चयेत्
वास्तोष्पतिं च गन्धाद्यैर्हविरन्तैः क्रमेण वै  ६३
सर्वातोद्यसमायुक्तमुद्धृत्य कलशं ततः
तेनाम्भसा सकूर्चेन प्रोक्षयेच्च समन्ततः  ६४
प्रदक्षिणक्रमेणैव पवित्रैर्मन्त्रवित्तमः
सर्वात्मना ततश्चापि प्रोक्षयेन्मण्डपादिकम्
ब्राह्मणान्भोजयेदत्र शिवव्रतपरायणान्  ६५

इत्यजिताख्ये महातन्त्रे क्रियापादे संप्रोक्षणविधिश्चतुस्सप्ततितमः पटलः

## पञ्चसप्ततितमः पटलः

## पिण्डकास्थापनविधिः

पिण्डकास्थापनं वक्ष्ये भोगमोक्षैकसाधनम्
यत्र या पिण्डका जीर्णा तत्र तां कारयेत्पुनः  १
उद्धृत्य तत्तदाकारां पिण्डकां तां विशेषतः
अन्यथापि च कर्तव्या चतुरश्रा तु वर्तुला  २
चतुरश्रां न कुर्वीत वर्तुलां पूर्ववत्स्थिताम्
ऐष्टिकां शिलया कुर्याज्जीर्णामपि च पिण्डकाम्  ३
तदुद्धारे पुरा कृत्वा भोजनं शिवयोगिनाम्

लिङ्गाग्रे स्थरिडलं कृत्वा शालिभिर्विधिना सुधीः ४
तत्र पद्मं समालिख्य साष्टपत्रं सकर्णिकम्
तन्मध्ये शिवकुम्भं तु सितसूत्रविचित्रितम् ५
गन्धोदपूरितं हेमपद्मयुक्तं सकूर्चकम्
सापिधानं सवस्त्रं च विन्यस्यास्याथ चोत्तरे ६
शक्तिकुम्भं तथाभूतं विन्यस्यावाहयेत्तदा
लिङ्गात्कुम्भे शिवं पीठाच्छक्तिं चैव मनोन्मनीम् ७
ग्रावाहनादिभिस्तत्र गन्धपुष्पादिभिः क्रमात्
संपूज्याथ तदग्रे तु स्थरिडले सैकते कृते ८
यात्राहोमविधानेन कृत्वा होममतन्द्रितः
प्रासादस्येशदिग्भागे सौम्ये वा स्थरिडले कृते ९
संस्थाप्याभ्यर्चयेत्तत्र नैवेद्यान्तं विचक्षणः
ततो लिङ्गं समभ्यर्च्य चन्दनेन च मालया १०
वस्त्रेण वेष्टयित्वाथ तनुत्राणं समुच्चरन्
उद्धृत्य पीठकान्सर्वान्मग्नाम्भसि विनिक्षिपेत् ११
ऐष्टिका यदि सामेति पक्वाभिस्तां प्रकल्पयेत्
इष्टकाभिः सचूर्णेन लोलितेन कुशाम्भसा १२
तां कृत्वा लक्षणोपेतां पिरिडकां सुमनोरमाम्
निष्पाद्यानन्तरं तस्याः प्रतिष्ठां कारयेत्सुधीः १३
तदर्थं मराडपं कुर्याल्लिङ्गाग्रे पार्श्वयोस्तु वा
ईशपावकयोर्वापि निर्दिष्टं मुनिहस्तकैः १४
श्रेष्ठमध्यकनिष्ठं तु पङ्क्तित्रयसमन्वितम्
पङ्क्तिमानसमुत्सेधं मध्ये वेदिकया युतम् १५
योन्याकाराणि कुराडानि तस्य दिक्षु प्रकल्पयेत्

चतुरश्राणि कोणेषु प्रधानं वृत्तमेव च १६
पञ्चहोमविधाने च कोणकुण्डानि वर्जयेत्
प्रधानं शाङ्करे कृत्वा वृत्तकुण्डं सुलक्षणम् १७
मण्डपोत्तरदिग्भागे कल्पयेत्स्नानमण्डपम्
स्नानवेदिसमायुक्तं वितानाद्यैस्तु पूर्ववत् १८
मण्डपं समलङ्कृत्य गोमयेनोपलिप्य च
ब्राह्मणान्भोजयित्वात्र शुद्धिं कृत्वा सुधीस्ततः १९
कारयेद्वास्तुहोमं तु देवानभ्यर्च्य पूजयेत्
शैलां कृत्वा विधानेन सर्वलक्षणलक्षिताम् २०
मण्डपं तु समानीय ततस्तत्रैव पिण्डिकाम्
वेद्यां संस्थाप्य चाद्भिस्तु पञ्चमृत्पञ्चगव्यकैः २१
ब्रह्मपञ्चकमुच्चार्य शोधयित्वा समन्ततः
पश्चाच्च शक्तिगायत्र्या गन्धोदेनाभिषिच्य च २२
वस्त्रेण वेष्टयित्वाथ सुकूर्चेनापि पिण्डिकाम्
नवेन परिशुद्धेन वेष्टयेद्वै समन्ततः २३
स्थण्डिलं वेदिकायां च कृत्वा शय्यां च पूर्ववत्
पुण्याहं वाचयित्वाथ संप्रोक्ष्य ब्रह्मपञ्चकैः २४
सर्वातोद्यसमायुक्तं गीतनृत्तसमन्वितम्
तत्र तां पिण्डिकां वेद्यां समानीयाधिवासयेत् २५
शयने शक्तिगायत्र्या यथा लिङ्गे तु संस्थिता
ततस्तौ स्थापितौ कुम्भौ शिवशक्त्यात्मकौ तदा २६
उद्धृत्य वेदिकामध्ये पिण्डिकायास्तु पूर्वतः
विन्यस्य पूर्ववस्त्रं च त्यक्त्वा वस्त्रं पुनस्तयोः २७
कूर्चादिकं च विन्यस्य विधिनाभ्यर्च्य देशिकः

परितश्च ततोऽष्टौ तु घटान्गन्धोदपूरितान् २८
वस्त्रकूर्चादिसंयुक्तान्प्रागादिष्वथ विन्यसेत्
पुरायाहं तत्र कुर्वीत शिवशक्त्योरनन्तरम् २९
विद्येशान्पूजयेन्मन्त्री गन्धपुष्पादिभिः क्रमात्
ततो होमं प्रकुर्वीत तद्विधानमथोच्यते ३०
प्रागादिमूर्तयस्तेषु वामाद्याः परिकीर्तिताः
कुराडेषु तत्प्रधाने तु शक्तिः स्यात्सा मनोन्मनी ३१
पञ्चहोमे निवृत्त्याद्याश्चतुर्दिन्नु च संस्थिताः
तत्र तास्तु समभ्यर्च्य विधिनाधाय पावकम् ३२
होमयेत्क्रमतो मन्त्री समिदाज्यचरूंस्ततः
तिलमाषयवांश्चैव सर्षपांश्च समन्ततः ३३
शक्त्यङ्गैर्मूलपूर्वैस्तु प्रत्येकं तु शताहुतिम्
तदर्धं वा प्रतिद्रव्यं स्पृशेद्व्याहृतिपूर्वकम् ३४
पिरिडकां देशिकः पश्चात्पूर्वादिक्रमयोगतः
मूर्तिपैश्च तदा स्पर्शं कारयेत्तैस्तु साधकैः ३५
सर्वत्राथ च मन्त्रेण प्रासादेन शताहुतिम्
जुहुयान्मूर्तिपैः सार्धं गुरुस्तत्र समाहितः ३६
विद्येशानां गणेशानां दिक्पतीनां तथैव च
अस्त्राणां च तदीयानां क्रमादेकैकमाहुतिम् ३७
प्रधाने देशिको हुत्वा शक्तीनां तदनन्तरम्
जुहुयात्सर्वकुराडेषु प्रत्येकं तु दशाहुतिम् ३८
ततः सर्वत्र संपूज्य पावकं परिषिच्य च
होमकर्म समाप्यैवं शिवादीनामनन्तरम् ३९
कुम्भस्थानां हविर्दद्यात्ताम्बूलं च निवेदयेत्

होमकाले चतुर्दिक्सु ऋगाद्यध्ययनं भवेत् ४०
शाङ्करेऽस्त्रजपं कुर्यात्सर्वविघ्ननिवृत्तये
समित्सर्वत्र पालाशी भवेदौदुम्बरी तु वा ४१
रात्रिशेषं ततो नीत्वा प्रभाते मूर्तिपैः सह
कृतनित्यो गुरुः पूजां कृत्वा कुम्भेषु पूर्ववत् ४२
प्रज्वाल्याग्निं च कुराडेषु दद्यात्पूर्णाहुतिं स्रुचा
शक्तिमूलेन सर्वत्र ततश्चोद्धृत्य पिरिडकाम् ४३
वस्त्रकूर्चादिकं त्यक्त्वा हेतिनाभ्युत्थितां ततः
प्रदक्षिणमुपावृत्य प्रासादान्तः प्रविश्य च ४४
शिल्पिना देशिकस्तत्र स्थापयेन्मूलमुच्चरन्
तद्गर्ते परितो धीमान् रत्नानि विधिवन्न्यसेत् ४५
शक्रशांकरयोर्मध्ये मारिणक्यं चापि विन्यसेत्
ततो रन्ध्रेऽष्टबन्धं तु त्रिबन्धं वा परिक्षिपेत् ४६
तेन कुर्वीत नीरन्ध्रं विश्लेषं लिङ्गपीठयोः
ततः स्नात्वा गुरुस्तत्र कृतविद्यातनुः सुधीः ४७
सोष्णीषः सोत्तरीयश्च धृतपञ्चाङ्गभूषणः
ग्रन्तः प्रविश्य पुरायाहं कृत्वा लिङ्गसमीपतः ४८
विशोध्य लिङ्गं पीठं च पञ्चमृत्पञ्चगव्यकैः
ग्रभिषिच्य च मन्त्रैस्तु ब्रह्मभिः पञ्चभिः क्रमात् ४९
गन्धतोयेन पश्चात्तु कुम्भांस्तानाधिवासितान्
उद्धृत्य वाहयित्वांसे कृत्वा धाम्नि प्रदक्षिणम् ५०
ग्रन्तः प्रविश्य देवाग्रे कल्पिते स्थरिडले ततः
शिवादीन्पूर्ववत्स्थाप्य घटांस्तत्रोपविश्य च ५१
उदङ्मुखो गुरुः कुर्यात्तत्तन्मन्त्रात्मिकां निजाम्

ततोऽर्घ्यगन्धपुष्पाद्यैः पूजयेत्पूर्ववद्गुरुः ५२
शिवलिङ्गे शिवं देवं मूलमन्त्रमनुस्मरन्
कुम्भात्कूर्चं समायोज्य लिङ्गं तेनाभिषेचयेत् ५३
सर्वात्महृदयेनाथ शक्तिकुम्भान्मनोन्मनीम्
तथा पीठे समावेश्य शक्तिगायत्रिमुच्चरन् ५४
तेनाभिषेचयेत्पीठं ततश्चाष्टौ घटानपि
विद्येश्वरात्मकं मन्त्रं यथास्थानं तु विन्यसेत् ५५
तैश्चाभिषिच्य देवेशं साङ्गमूलेन पूजयेत्
पिण्डिकायां ततश्चापि तस्या मूलं तु विन्यसेत् ५६
षडङ्गानि हृदादीनि पूर्वादिक्रमतो न्यसेत्
नेत्रमीशानदेशे स्यादस्त्रमाग्नेयगोचरे ५७
ततो गन्धोदकेनैव लिङ्गं पीठं च मन्त्रवित्
अभिषिच्य पवित्रैस्तु ततः संवत्सरात्मना ५८
चन्दनेन ततो लिङ्गं पीठं चाभ्यर्च्य पूजयेत्
मालाभरणवस्त्राद्यैर्देशिकं च यथाक्रमम् ५९
प्रभूतं च हविर्दद्यात्ताम्बूलं च प्रदापयेत्
एवं यः कारयेन्मर्त्यः पिण्डिकास्थापनं परम्
इह लोके सुखं प्राप्य स याति परमां गतिम् ६०

इत्यजिताख्ये महातन्त्रे क्रियापादे पिण्डिकास्थापनविधिः
पञ्चसप्ततितमः पटलः

## षट्सप्ततितमः पटलः

## प्रायश्चित्तविधिः

उत्सवादिषु यागेषु प्रायश्चित्तं वदामि ते
प्रमादः प्राय इत्युक्तः कृत्यकर्मसु मन्त्रतः १
क्रियया द्रव्यतो वापि कृतस्तस्य प्रतिक्रिया
चित्तमित्युच्यते तस्मात्प्रायश्चित्तमिति स्मृतम् २
मन्त्राणां तु प्रमादः स्यादपशब्दोऽन्यथेरणम्
स्वरहानिश्च वर्णानां वृद्धिर्ह्रासश्च दूषितान् ३
मन्त्रांस्तान्सम्यगुच्चार्य कर्म कृत्वा यथा पुनः
सर्वात्मानं शतं तत्र जपेद्दोषनिवृत्तये ४
व्यत्यासश्च विनाशश्च पौनःपुन्यं च कर्मसु
प्रमादास्तेषु जातेषु यथावत्क्रमतः पुनः ५
कृत्वा तद्दोषशान्त्यर्थं पिङ्गलाख्यं शतं जपेत्
बुद्धिपूर्वप्रमादश्चेदनयोर्मन्त्रकर्मणोः ६
द्विगुणस्तु प्रयोक्तव्यो मन्त्रयोरनयोर्जपः
द्रव्याणां तु प्रमादो यः स इदानीं निगद्यते ७
पालिकाघटिकादीनां सोमकुम्भव्यये तथा
अङ्कुरस्य विधौ दृष्ट्वा पतनं भेदनादिकम् ८
केवले पतने जाते स्थाप्य तं तु यथा पुरा
धेनुमुद्रां तु संयोज्य प्रणवं समुदाहरन् ९
संपूज्य गन्धपुष्पाद्यैर्बहुरूपं शतं जपेत्
भेदे जाते तथा त्यक्त्वा स्थाप्य तं पूर्ववत्सुधीः १०
संपूज्य च समाप्यैतच्छान्तिहोमं च कारयेत्
अङ्कुराणां विनाशेऽपि शान्तिहोमं च कारयेत् ११
उक्तकालेऽङ्कुरश्चैव यत्र वा न हि कल्पितः

साङ्कुरं तत्तु तत्रैव कृत्वाघोरं शतं जपेत्  १२
सद्योऽङ्कुराय चोक्ते स्यात्सद्यः कृता तु मञ्जरी
सितवर्णा सुसंश्लिष्टा विन्यस्ता पालिकादिषु  १३
वृषयागे घटादीनां पतने भेदनेऽपि च
जपयागौ प्रयोक्तव्यौ यथापूर्वं विचक्षणैः  १४
देवाग्रे स वृषं तत्र भेदे जातेऽर्चयेत्सुधीः
विशेषाद्गन्धपुष्पाद्यैर्मुद्गान्नं च निवेदयेत्  १५
ध्वजोत्सवे तु संप्राप्ते ध्वजादीनां निपातने
आरब्धकर्मनिर्वृत्तौ प्रविश्य भवनं ततः  १६
अक्षतं चेत्तथा बेरं जपेदष्टोत्तरं शतम्
छेदनादन्यमापाद्य कृत्वा सद्योऽधिवासनम्  १७
आरोपयेत्ततो धाम्नि प्रदक्षिणं समाचरेत्
शान्तिहोमं वृषाग्रे तु कृत्वा कर्म समापयेत्  १८
तत्र च प्रतिमादीनां पतने भेदवर्जिते
स्नपनं विधिवत्कृत्वा तस्याग्रे होममाचरेत्  १९
वैकल्ये सति तस्याशु कृत्वा संधानमुत्तमम्
विधिना स्थापयेद्धीमान्जीर्णोद्धारोदितेन तु  २०
ध्वजारोहणकाले तु निपाते ध्वजदण्डयोः
अक्षतं चेत्पुनर्दण्डं स्थापयित्वा तमेव तु  २१
ध्वजं चापि तथाभूतं सर्वात्मजपपूर्वकम्
आरोपणे तयोर्जृम्भे छेदे वा समुपस्थिते  २२
दण्डमन्यं समापाद्य कृत्वा तं चापि पूर्ववत्
ध्वजस्याप्यधिवासादि कृत्वा धाम्नि प्रदक्षिणम्  २३
आरोपयित्वा तत्राह्नि रात्रौ वापि विधानवित्

शान्तिहोमसमायुक्तं वृषं देवं च पूजयेत्  २४
रज्जुयन्त्रादिभेदेन ध्वजस्य पतने सति
विधिवत्पीठमत्राशु कृत्वा पुण्याहपूर्वकम्  २५
तदग्रे शान्तिहोमं तु चण्डपूजासमन्वितम्
कुर्याद्द्वारादिभिस्तस्मिन्ध्वजेऽप्येवं हृते सति  २६
ध्वजमन्यं समापाद्य कृत्वा सद्योधिवासनम्
धाम्नि प्रदक्षिणं चापि सर्वात्मजपपूर्वकम्  २७
ध्वजमारोपयित्वाशु तद्दिने वा द्वितीयके
देवस्य स्नपनं कार्यं शान्तिहोमसमन्वितम्  २८
ध्वजस्यारोपितस्यापि भेदादौ समुपस्थिते
विधिवत्कल्पयेद्धीमान्समुत्सृज्य ध्वजं तथा  २९
भेर्यास्ताडनकाले तु शूलास्त्रपतनं यदि
बहुरूपजपं कृत्वा शूलं विधिवदर्चयेत्  ३०
शेषकर्मसमाप्तौ तु शान्तिहोमसमन्वितम्
शूलस्य स्नपनं कुर्यात्पतनेऽथ च भङ्गके  ३१
तदा तत्रैव विन्यस्य स्थण्डिलं स्थलिकोपरि
अष्टबन्धनहीने च पार्थिवं जलवर्जितम्  ३२
ततोऽष्टबन्धनं कुर्यात्सुदृढं कारयेद्बुधः
लाक्षा सर्जरसः सिक्थं कुरुविन्दश्च गुग्गुलुः  ३३
गैरिकं गुलतैलं च अष्टबन्धः स उच्यते
ताम्रपात्रे तु निक्षिप्य पाकश्चिक्कणवद्भवेत्  ३४
पक्वाष्टबन्धनं ह्येवमपक्वं चाधुनोच्यते
त्रिफलं शङ्खचूर्णं च गुलं च कदलीफलम्  ३५
दधि घृतं दुग्धसिक्थं पेषयेदष्टबन्धनम्

शर्करां कुन्दुरुष्कं च माहिषं नवनीतकम् ३६
उलूखले तु संस्थाप्य मुसलेनैव मर्दयेत्
चिक्कणस्य तु भागेन संबन्धं सुदृढं कुरु ३७
शर्करासंज्ञचूर्णं च माहिषं नवनीतकम्
शङ्खचूर्णं ततो गृह्य द्विगुणां सिकतां तथा ३८
गुलेन पेषयेत्तत्र रन्ध्रे तु स्थापयेत्स्थले
पूर्ववत्स्नपनं कुर्याच्छान्तिहोमं तु कारयेत् ३९
सुधाकर्मविहीने च स्थलकर्मविहीनके
प्रवर्तते महामारी पुनः संधानमाचरेत् ४०
पुण्याहं वाचयेद्देवं गव्यैरेवाभिषेचयेत्
शूले च पतिते चैव चलिते चाङ्गहीनके ४१
दग्धे च वर्णहीने च चर्मच्छेदे तथैव च
पीठे बन्धविहीने च ग्रामनाशं विनिर्दिशेत् ४२
पतिते चलिते चैव बालस्थानं तु कारयेत्
शूलं तु स्थापयेत्पश्चात्पूर्वोक्तविधिना सह ४३
बेरं तु विधिवत्कृत्वा संप्रोक्षणमथाचरेत्
अङ्गोपाङ्गप्रत्यङ्गं च शरीरस्याङ्गमुच्यते ४४
अङ्गं प्रधानशूलं स्याद्ब्रह्मदण्डमिहोच्यते
वक्षोदण्डं कटीदण्डं बहुकूर्परकोष्ठकम् ४५
ऊरू जानू च जङ्घे च उपाङ्गं चेति कीर्तितम्
शेषाणि च विजानीयात्प्रत्यङ्गमिति बुद्धिमान् ४६
ब्रह्मदण्डविहीने च शूलस्थापनमारभेत्
प्रत्यङ्गोपाङ्गहीने च पुनः संधानकं कुरु ४७
स्वदारुश्च तदा ग्राह्यो योजयेत्स्थापने क्रमात्

भिन्नादौ च समुत्पन्ने पुनः संधानमाचरेत् ४८
आसप्तदिवसात्पूर्वे क्रियते चेद्धटस्थितिः
तदूर्ध्वे बालहर्म्यं तु कृत्वा संप्रोक्षणं कुरु ४९
भवने चाग्निदग्धे च वह्निना तु भयं भवेत्
व्यपोह्याङ्गारकान्सर्वान्पश्चात्संधानमाचरेत् ५०
पुण्याहं वाचयित्वाथ दिशाहोमं तु कारयेत्
दग्धे च प्रतिमे लिङ्गे राजा मरणमाप्नुयात् ५१
वह्निना स्फुटिते भिन्ने लिङ्गे वा प्रतिमे तु वा
जीर्णोद्धारविधानोक्तमार्गेणैव समुद्धरेत् ५२
वह्निना द्रुतबिम्बं चेत्कुर्यात्तेनैव वस्तुना
तत्प्रमाणेन तद्रूपं कारयेत्तु विशेषतः ५३
पूर्वोक्तविधिना धीमान्प्रतिष्ठां कारयेत्ततः
प्रत्यङ्गोपाङ्गहीने च वस्त्राभरणहीनके ५४
पुनः संधानकं कृत्वा पूर्वोक्तेनैव मार्गतः
संप्रोक्षणं ततः कृत्वा चोत्सवं कारयेत्ततः ५५
चोराद्यैश्चलिते लिङ्गे नदीस्रोतःप्रचालिते
स्थापयेन्निर्व्रणं चेत्तु चोरादाहृत्य पूर्ववत् ५६
चोरैः संगृह्यते देवशक्तिश्चेत्क्षयकारिणी
तच्छक्तिमुद्धरेदन्यां नवशक्तिं क्रमात्कुरु ५७
देवे चावाहयेच्छक्तिं नवलोहं तु संग्रहेत्
पूर्वशक्तिं व्यपोह्याथ समुद्रे दशयोजने ५८
देवं देवीं च संगृह्य प्रतिष्ठां कारयेद्बुधः
स्थापनान्ते तु बेराद्यमानीतं चेत्तदन्तिके ५९
देशे संस्थाप्य विधिना पूजयेन्नित्यमादरात्

पीठं चेत्संत्यजेल्लिङ्गेनाथवान्येन कारयेत् ६०
परिवारविहीने च दासीदासविनाशनम्
कृत्वा तु पूर्ववत्पश्चात्स्थापयेत्स्थापकोत्तमः ६१
परिवाराङ्गवैकल्ये पुनः सन्धानमाचरेत्
तत्तन्मन्त्रेण मतिमान्समिद्भिः सर्पिषा तथा ६२
चरुणा जुहुयाद्धीमान्प्रत्येकं तु शतं क्रमात्
संप्रोक्ष्याभ्यर्च्य गन्धाद्यैः पुण्याहं वाचयेत्ततः ६३
बलिपीठविहीने तु गवां वै नाशनं भवेत्
पूर्ववत्कल्पयेत्पीठं स्थापयेद्विधिना बुधः ६४
तद्भिन्ने पतिते दग्धे पुनः सन्धानमाचरेत्
पुण्याहं वाचयित्वा तु शान्तिहोमं तु कारयेत् ६५
स्नपनं कारयेच्छम्भोः पूजयेच्च विशेषतः
कुक्कुरैः कुक्कुटैश्चैव खरसूकरवानरैः ६६
स्पर्शिते लिङ्गबिम्बे च प्रविष्टे गर्भगेहके
प्रवर्तते महामारी तद्ग्रामश्च विनश्यति ६७
मृद्भाण्डानि विसृज्याथ स्थानशुद्धिं ततः कुरु
गोमयालेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः ६८
स्नपनं कारयेत्तत्र शान्तिहोमं ततः कुरु
लिङ्गे रजस्वलास्पृष्टे प्रतिमे वा विशेषतः ६९
गर्भगेहे प्रविष्टे वा जायावन्नाशनं भवेत्
मृद्भाण्डानि विसृज्याथ गोमयेनोपलिप्य च ७०
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्तथा
स्नपनं कारयेद्देवं बिल्वपत्रेण घर्षयेत् ७१
मूर्तिहोमं ततः कृत्वा ब्राह्मणान्भोजयेत्ततः

अन्तर्मण्डलसालादौ तथा स्पृष्टे विशेषतः ७२
संप्रोक्ष्य पञ्चगव्येन पुण्याहं वाचयेत्ततः
स्पृष्टे सूतिकया बिम्बे प्रविष्टे गर्भगेहके ७३
दुर्भिक्षं जायते लोके बालानां नाशनं भवेत्
मृद्भाण्डानि विसृज्याथ गोमयेनोपलेपयेत् ७४
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः
पञ्चशुद्धिक्रमं कृत्वा स्नपनं कारयेत्ततः ७५
मूर्तिहोमं ततः कृत्वा चास्त्रेणैव शतं हुनेत्
ब्राह्मणान्भोजयेत्तत्र पुण्याहं वाचयेत्ततः ७६
प्रेतकैः स्पर्शने चैव प्रविष्टे गर्भगेहके
पुत्रपौत्रविनाशः स्यात्तत्र ग्रामश्च नश्यति ७७
विसृजेन्मृण्मयं पात्रं गोमयेनोपलेपयेत्
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् ७८
पञ्चशुद्धिक्रमं कृत्वा पुण्याहं वाचयेत्ततः
शान्तिहोमं ततः कृत्वा मूलेनैव शतं हुनेत् ७९
ब्राह्मणान्भोजयित्वाथ विधिवद्देशिकोत्तमः
नित्यपूजाविहीने तु स्थानभ्रंशो भवेत्सदा ८०
एकसंधिविहीने तु चान्यत्र द्विगुणं भवेत्
संधिद्वयार्चने हीने शान्तिहोमं तु कारयेत् ८१
गुणसंधिविहीने च पञ्चगव्येन सेचयेत्
एकाहेऽत्र विहीने तु स्नपनं कारयेत्ततः ८२
अहोरात्रादिपञ्चाहे स्नपनं शान्तिहोमकम्
पक्षहीने दिशाहोमं स्नपनं चात्र कारयेत् ८३
मासादूर्ध्वं विहीने तु जलसंप्रोक्षणं कुरु

नित्यहोमविहीने चेदनावृष्टिर्भविष्यति ८४
एकसंधिविहीने तु हुनेत्पाशुपतं शतम्
संधिद्वयविहीने तु मूलेनैव शतं हुनेत् ८५
तथा त्रियम्बकेनैव होमं पूर्ववदाचरेत्
एकाहे तु विहीने च पञ्चब्रह्मषडङ्गकैः ८६
अष्टोत्तरशतं हुनेन्मन्त्रैरेतैः पृथक् पृथक्
पञ्चाहे तु विहीने तु स्नपनं कारयेत्ततः ८७
मूलेनैव शतं हुत्वा स्नपनं शान्तिहोमकम्
हुत्वा पाशुपतेनैव जपेत्पञ्चशतं पुनः ८८
सायरक्षाविहीने तु यजमानाय नाशनम्
स्नापयेत्पञ्चगव्यैश्च चार्चनोक्तं समर्चयेत् ८९
सायरक्षाविधानोक्तं कृत्वा मूलं शतं हुनेत्
नीराजनविहीने च दुर्भिक्षं ग्रामवासिनाम् ९०
लिङ्गं वा कौतुकं वापि स्नापयेत्पञ्चगव्यकैः
अर्चनोक्तं समभ्यर्च्य पुण्याहं वाचयेत्ततः ९१
शिवमन्त्रं शतं जप्त्वा नीराजनमतः परम्
द्वारपूजाविहीने च सस्यानां नाशनं भवेत् ९२
द्वारस्थदेवतानां च मन्त्रैरेव पृथक् पृथक्
गन्धपुष्पादिभिश्चैव पूर्ववत्संप्रपूजयेत् ९३
नित्योत्सवविहीने तु धान्यनाशं विनिर्दिशेत्
सन्ध्यैकेन विहीने तु स्नापयेत्पञ्चगव्यकैः ९४
मूलमन्त्रं शतं जप्त्वा चोत्सवं पूर्ववत्कुरु
सन्धिद्वयविहीने तु शान्तिहोमं तु कारयेत् ९५
एकाहे चोत्सवे हीने स्नपनं कारयेत्प्रभोः

पञ्चाहे चोत्सवे हीने मूलेनैव शतं हुनेत् ९६
स्नपनं कारयेच्छम्भोः पूजयेद्विधिपूर्वकम्
दशाहे स्नपनं कृत्वा शान्तिहोमं तु कारयेत् ९७
पक्षे चोत्सवहीने च मूर्तिहोमं तु कारयेत्
स्नपनं कारयेच्छम्भोः पूजयेत्तु विशेषतः ९८
मासे नित्योत्सवे हीने विद्याङ्गैर्ब्रह्मपञ्चकैः
षडङ्गैर्बीजमुख्यैश्च मन्त्रैश्चैव दशाक्षरैः ९९
प्रत्येकं तु शतं हुत्वा मूलेनैव शतं हुनेत्
तत्सङ्ख्याकं जपं कुर्यात्स्नपनं कारयेत्ततः १००
मासादूर्ध्वविहीने तु दिशाहोमं तु कारयेत्
स्नपनं कारयेच्छम्भोः पूजयेद्विधिपूर्वकम् १०१
सौख्यहीने विशेषेण महामारी प्रवर्तते
सन्ध्यैके सौख्यहीने चेत्पञ्चगव्याभिषेचनम् १०२
कृत्वा संपूज्य देवेशं मूलेनैव शतं जपेत्
सन्धिद्वयविहीने तु शान्तिहोमं तु कारयेत् १०३
अर्धमासे

इत्यजिताख्ये महातन्त्रे क्रियापादे प्रायश्चित्तविधिः षट्सप्ततितमः पटलः

## सप्तसप्ततितमः पटलः

### सकलार्चनविधिः

वक्ष्येऽहं सकलार्चां तु सर्वाभिष्टफलप्रदाम्
शौचमाचमनं स्नानं सन्ध्यावन्दनतर्पणे १
कृत्वा प्रविश्य हर्म्यं तु पादशौचं विधाय च

सम्यगाचम्य सङ्गृह्य भसितं वारिणा सह २
त्रिपुण्ड्रं विधिना कृत्वा करन्यासं विधाय च
तत्करेण च संयोज्य शिवे ह्यात्मानमादरात् ३
भूतशुद्धिं सुधाप्लावमात्मावाहनमेव च
करन्यासे च विन्यासो ब्रह्मणामीशपूर्वकम् ४
स्वविग्रहकलान्यासे त्वीशानं मूर्ध्नि विन्यसेत्
पुरुषं वदने सर्वं मालामन्त्रमनुस्मरन् ५
अन्यत्पूर्वसमानं स्यादेकत्रिंशत्कला न्यसेत्
अन्तर्यागं ततः कृत्वा स्थानशुद्धिं ततो नयेत् ६
विशेषार्घ्यं च सङ्कल्प्य गन्धपुष्पाक्षतैर्युतम्
ईक्षणाद्यैश्चतुर्भिस्तु द्रव्यशुद्धिं तु पूर्ववत् ७
कृत्वात्मानं समभ्यर्च्य मन्त्रशुद्धिं समाचरेत्
द्वारं संप्रोक्ष्य चास्त्रेण वृषमग्रे समर्चयेत् ८
द्वारपार्श्वोभयत्रापि गणपं च सरस्वतीम्
नन्दिनं च महाकालं गङ्गाह्वां यमुनामपि ९
संपूज्योदुम्बरे शस्त्रं प्रविश्यान्तःपुटं पुनः
दत्त्वा पुष्पं च वास्त्वीशे दत्त्वार्घ्योदं शिरस्यथ १०
शिवस्येशानमन्त्रेण मालाद्यमपनीय च
शुद्धिं कृत्वा विधानेन पटाद्यैर्वोदकेन वा ११
आधाराख्यमनन्तं च धर्माधर्माद्यमेव च
अधश्चोर्ध्वच्छदे पद्मकर्णिके शक्तिपुञ्जकम् १२
वामाद्यं हृदयोपेतं शिवासनमनुस्मरन्
तस्मिन्मूर्तिं समावाह्य विद्यादेहं प्रकल्पयेत् १३
सदाशिवो महेशश्च रुद्रश्चेति त्रिधा मतः

शिवदेह इति प्रोक्तो विद्यादेहः स उच्यते १४
या तस्य विमला शक्तिः शिवस्य समवायिनी
सैव मूर्तिः क्रियाभेदात्सदाशिवतनुर्मता १५
तथा माहेश्वरी मूर्तिः किं तु सौम्यस्वरूपिणी
तद्वद्रौद्री समाख्याता किं तु सोग्रस्वरूपिणी १६
आसां कुण्डलिनी शक्तिः क्रियाख्यानां तु कारणम्
ब्रह्मा विष्णुश्च रुद्रश्च महेशश्च सदाशिवः १७
एते कारणदेवाः स्युः क्षेत्रज्ञाः परिकीर्तिताः
ब्रह्मविष्णवोश्च मूर्तेस्तु माया कारणमिष्यते १८
रुद्रेश्वरसदेशानां क्रियाख्या तनुकारिणी
इत्येवं त्रिविधाः प्रोक्ता रुद्रेश्वरसदाशिवाः १९
तस्माज्ज्ञानमयो देहः शिवस्य परिकीर्तितः
तद्देहत्रयसिद्ध्यर्थं मूर्तिमादौ प्रकल्पयेत् २०
हृत्संपुटेन संयोज्य तस्यां ब्रह्माणि कल्पयेत्
कलान्यासं ततः कुर्यात्तद्विधानमिहोच्यते २१
सदेशे देहसिद्ध्यर्थमष्टत्रिंशत्कला मताः
रुद्रेशयोः शरीरार्थमेकत्रिंशत्कला मताः २२
अष्टत्रिंशत्कलान्यासः प्रागेव प्रतिपादितः
एकत्रिंशत्कलान्यासे विशेषः कश्चिदिष्यते २३
एकमेव शिरो वक्त्रं महेशे रुद्रविग्रहे
तत्रेशानेन वक्त्रेण मनुना सकलेन च २४
कलात्मना विशिष्टं तु पूर्ववत्परिकल्पयेत्
ध्यात्वा सदाशिवं रूपं तच्चतुर्दशसंयुतम् २५
षष्ठस्वरसमोपेतं बिन्दुनादविभूषितम्

सान्तं हृत्संपुटं कृत्वा विद्यादेहं प्रकल्पयेत् २६
बेरे सदाशिवे वापि लिङ्गेऽप्येवं समाचरेत्
महेशनृत्तमूर्त्यादिध्यानं शान्तमनुस्मरन् २७
प्रतिमालक्षणोक्तं च महेशमनुना युतम्
कालान्तकगजघ्नादिरूपं रौद्रमनुस्मरन् २८
तन्मन्त्रेण समोपेतं विद्यादेहं प्रकल्पयेत्
महेशरुद्रमूर्तौ च मन्त्रः सदाशिवेऽपि च २९
विद्यादेहार्थमुद्दिष्टः सर्वत्र शिव एव च
आवाह्यः स मनुर्मन्त्रोद्धारे प्रागेव कीर्तितः ३०
तेनावाह्य शिवं देहत्रितये पूर्ववर्त्मना
स्थापनाद्यं ततः कुर्यात्पाद्याद्यं च महेश्वरे ३१
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमप्यथ
ताम्बूलसहितं सर्वं निष्कलार्चनवन्नयेत् ३२
पञ्चावरणसंयुक्तं चतुस्त्रिद्व्येकसंवृतौ
इष्टावरणसंयुक्तं प्रागुक्तविधिना गुरुः ३३
परिवारयुतं चेत्तु बलिं तस्मिन्समाचरेत्
होमं नित्योत्सवं चापि स्वप्रधाने समाचरेत् ३४
शुद्धनृत्तं च यत्प्रोक्तं सर्वं प्रकृतिवन्नयेत्
द्वारपालार्चनोपेतं बलिहोमसमन्वितम् ३५
शुद्धनृत्तं च हित्वान्यत्कर्म वा सर्वमाचरेत्
प्रदोषादौ नटेशस्य कुर्यान्नीराजनक्रियाम् ३६
उत्सवं स्नपनं चैव दमनारोहणक्रियाम्
पवित्रारोहणं सम्यक्कृत्तिकादीपमेव च ३७
संवत्सरादिखेलां च वसन्ताख्यं तदुत्सवम्

मासोत्सवं तथा मासे नवनैवेद्यकर्म च  ३८
प्रायश्चित्तं च जीर्णानामुद्धारं च गुरूत्तमः
देवोक्तमखिलं सर्वं देव्याश्चपि समाचरेत्  ३९
किं चाषाढेऽश्विनीमासे पूर्वफल्गुनिसंयुते
पूरकर्मादि कर्तव्यमादिशक्तेर्द्विजोत्तम  ४०
गौरी माहेश्वरी मूर्तिः सदेशे तु मनोन्मनी
मनोन्मन्यणुना मूर्तिं मनोन्मन्याः प्रकल्पयेत्  ४१
गौरीमन्त्रेण गौर्यास्तु षड्विंशतिकलान्विताम्
आदिशक्त्यणुना तस्यामादिशक्तिं प्रपूजयेत्  ४२
विशेषपूजा तेनैव वर्तनीयेष्टसिद्धये
दिनमेकं समारभ्य सप्ताहान्तं समाचरेत्  ४३
द्विगुणं त्रिगुणं वापि चतुःपञ्चगुणं तथा
षट्सप्तगुणसङ्ख्यातं कर्मसिद्ध्यन्तमेव च  ४४
पूजा वैशेषिकी ख्याता पूर्वोक्तफलदायिनी
नैमित्तिकं तु नित्यान्ते कर्तव्यं चाविरोधतः
नित्ये प्रवर्तमाने तु यदा नैमित्तिकं भवेत्  ४५
इत्यजिताख्ये महातन्त्रे क्रियापादे सकलार्चनविधिः सप्तसप्ततितमः पटलः

## अष्टसप्ततितमः पटलः

## विशेषोत्सवविधिः

अथवान्यप्रकारेण उत्सवं तु विधीयते
ध्वजमेकं समारोप्य ध्वजारोहणपूर्वकम्  १
तस्मिन्नेव दिने विप्रा मन्दीभूते दिवाकरे

श्रावयेत्तीर्थदिवसं गजाद्यारोहितेन च २
चराडालेन सदारेण कुर्याद्घोषयुतेन च
तद्रात्रावेव कर्तव्यं भेरीताडनपूर्वकम् ३
बेराग्रे शूलसंयुक्ते देवानावाह्य पूर्ववत्
आश्राव्य तीर्थदिवसं ग्रामादिबलिवर्जितम् ४
धामन्येव विधायैवं तस्माद्गत्वा जलाशयम्
स्थरिडलद्वितयं कृत्वा जलतीरे गुरूत्तमः ५
एकत्र स्थापयेच्छूलमन्यत्र कलशान्नयसेत्
नवकैः स्नापयेच्छूलं तच्छूलमवगाहयेत् ६
प्रविश्य देवतास्थानं तद्दिनाद्द्वादशाहके
यागारम्भं पुनः कुर्यादङ्कुरार्पणपूर्वकम् ७
एकहोमसमायुक्तं ग्रामादिबलिमाचरेत्
बेरयात्रासमायुक्तं दिवसं प्रत्यहर्निशम् ८
पञ्चमे दिवसे तत्र सिकता अस्त्रमन्त्रिताः
विकिरेत्सदनं सर्वमन्तर्बाह्यविकल्पितम् ९
अष्टादशदिने प्राप्ते बीजनिर्वापमाचरेत्
तीर्थार्थं तन्निशायां तु धाम्नस्त्वष्टदिशास्वपि १०
ध्वजानष्टौ समारोप्याङ्किताँल्लोकेशवाहनैः
तदस्त्राङ्कान्वृषाङ्कान्वा मूर्तिपैश्च समन्वितम् ११
ततः प्रभृति कर्तव्यं होमकर्म विशेषतः
तदन्ते बलिदानं स्याद् बेरयात्रासमन्वितम् १२
एवं नवदिनं कृत्वा दशमे तीर्थमाचरेत्
ध्वजानामष्टसङ्ख्यानां तद्रात्राववरोहणम् १३
कृत्वा तद्दिनमारभ्य नानावाद्यसमन्वितम्

नानागानसमायुक्तं नानानृत्तसमन्वितम्  १४
ग्रामप्रदक्षिणं कृत्वा परिवेषं नयेत्क्रमात्
सप्ताहमेवं कृत्वान्ते सर्वारम्भं विवर्ज्य च  १५
स्नापयेन्मौनमास्थाय सप्ताहं तदनन्तरम्
चण्डेश्वरं परो नीत्वा बेरयात्रामनन्तरम्  १६
बलिहोमविहीनं तु नयेत्सप्ताहमादरात्
चण्डपूजासमायुक्तं होमस्नपनसंयुतम्  १७
तदन्ते कारयेत्तीर्थं त्रिशूलेन समन्वितम्
ध्वजावरोहणं कुर्यात्तद्रात्रौ पूर्ववर्त्मना  १८
बेरयात्राविहीनं वा विधिमेनं समाचरेत्
नवान्नलिङ्गं वा कृत्वा दिक्पालास्त्रार्थमेव वा  १९
तैस्त्रिशूलेन वा कुर्याद्ग्रामादौ तु बलिक्रियाम्
नित्योत्सवान्नलिङ्गादिदश वा परिकल्पयेत्  २०
द्वादशाब्दावसानान्ते ध्वजस्थापनमेव वा
जीर्णादि दोषे तं त्यक्त्वा ध्वजमन्यं निवेशयेत्  २१

इत्यजिताख्ये महातन्त्रे क्रियापादे विशेषोत्सवविधिः
अष्टसप्ततितमः पटलः

## एकोनाशीतितमः पटलः
## दमनपूजाविधिः

चैत्रमासे विधेया स्याद्दमनारोहणक्रिया
पवित्रं प्रकृतिर्या स्यात्तदनन्तरमुच्यते  १
सप्तम्यां वा चतुर्दश्यां गत्वा दमनकान्तिकम्
शोधयित्वास्त्रमन्त्रेण पूजयेत्संहिताणुभिः२

अथ संबोधयेद्दामं भववाक्येन मन्त्रवित्
हरप्रसादसंभूत त्वमन्त्र संनिधीभव ३
शिवकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया
एवं दमनमामन्त्र्य संरक्ष्य भवनं व्रजेत् ४
यदि दूरं समानीय समूलं मृत्तिकान्वितम्
पुनरारोप्य मृत्पूर्णे पात्रे संसिच्य वारिणा ५
गृहेऽप्यामन्त्रणं कार्यं पूर्वोक्तविधिना बुधः
सायाह्नसमये प्राप्ते विदध्यादधिवासनम् ६
आहृत्य यागवस्तूनि कृतस्नानादिसत्क्रियः
यथाविधि समभ्यर्च्य भानुशङ्करपावकान् ७
पश्चिमे देवदेवस्य तस्य मूलं मृदा युतम्
सद्योजातेन मन्त्रेण दीपितं हृदयेन वा ८
वामेन शिरसा वापि नालं धात्रीमथोत्तरे
दक्षिणे भस्म पत्रं च रूपिणा शिखयाथवा ९
पुंसा वा वर्मणा प्राच्यां सपुष्पं दन्तधावनम्
फलं मूलेन गायत्र्या वैशान्यां गन्धसंयुतम्
पञ्चाङ्गमञ्जलौ कृत्वा दामं पुष्पाक्षतान्वितम् १०
इत्यजिताख्ये महातन्त्रे क्रियापादे दमनपूजाविधिः एकोनाशीतितमः पटलः

## अशीतितमः पटलः

### दीक्षाविधिः

ज्वलितो हि यथा वह्निः शुष्कमार्द्रं च निर्दहेत्
तथा शुभाशुभं कर्म ज्ञानानलेन दग्धवत् १

चाक्षुषी स्पर्शदीक्षा च वाचिकी मानसी तथा
शास्त्री च योगदीक्षा च हौत्रीत्यादिरनेकधा २
चक्षुरुन्मील्य यत्तत्त्वं ध्यात्वा शिष्यः समीक्ष्यते
पाशबन्धविमोक्षाय दीक्षेयं चाक्षुषी भवेत् ३
निधाय दक्षिणे हस्ते शिवं ब्रह्माङ्गसंयुतम्
संस्पृशेच्छिष्यमूर्धादि स्पर्शदीक्षा भवेदिह ४
तत्त्वे चित्तं समाधाय बृह्मितान्तरतेजसा
उच्चरेत्संहितामन्त्रान्वाग्दीक्षा चेयमिष्यते ५
मानसं विधिमाश्रित्य मानसीत्यभिधीयते
शास्त्रस्य संप्रदानेन शास्त्रदीक्षा समीरिता ६
योगेन योगदीक्षा स्याच्छिवत्वे सा ह्यवस्थिता
रजःकुण्डवती हौत्री सा द्विभेदा किलोदिता ७
समासाच्च द्विधैवेयं दीक्षा तज्ज्ञैरिहेष्यते
ज्ञानवती भवत्येका क्रियावत्यपरा स्मृता ८
विनेज्यानलकर्मादि मनोव्यापारमात्रतः
दीक्षा ज्ञानवती प्रोक्ता सद्यस्तत्त्वावबोधजा ९
इज्यानलवती या तु क्रियाकौशलसंभवा
क्रियावत्यथ सानेका निर्बीजाथ सबीजका १०
निर्बीजा तु भवेद्दीक्षा समयिपुत्रयोः परम्
सबीजा तु भवेद्दीक्षा साधकाचार्ययोरपि ११
अथ निर्बीजिका दीक्षा प्रोक्ता सा द्विप्रकारिका
एका निर्वाणदा सद्यो द्वितीया देहपाततः १२
बालबालिशवृद्धस्त्री भोगभुग्व्याधितात्मनाम्
भवेन्निर्बीजिका दीक्षा समयाचारवर्जिता १३

विदुषां च समर्थानां सबीजा परिकीर्तिता
सबीजा च द्विधा भिन्ना प्रथमा शिवधर्मिणी १४
साधकाचार्ययोः प्रोक्ता देशकालादिभेदतः
धर्माधर्मात्मकं कर्म प्रागागामि विचित्रकम् १५
संचिन्त्य शोध्यते यत्र सैवोक्ता शिवधर्मिणी
अधर्ममात्रसंशुद्धौ द्वितीया लोकधर्मिणी १६
नित्यमात्राधिकारश्चेत्समयिन्यथ पुत्रके
दीक्षा निरधिकारैव नैमित्तिकानधिकारिणी १७
साधकाचार्ययोर्नित्यनैमित्तकाम्यकर्मसु
सर्वत्रैवाधिकारित्वात्साधिकारैव सा तयोः १८
यत्र रुद्रपदे योगो योगो यत्रैश्वरे पदे
शिखाच्छोदो न यत्रास्ति दीक्षा सा समयी द्विधा १९
यत्र पाशशिखाच्छेदो योगः शिवपदे भवेत्
निर्वाणाख्या तु सा सैव पुत्रके नाभिषेकतः २०
साध्यमन्त्राभिषेकाच्च साधके सा प्रकीर्तिता
सर्वविद्याभिषेकेण भवेदाचार्यगोचरे २१
शिवसंस्कारसंयुक्तं भावयित्वा समर्पणम्
क्रियया वाथ शक्त्या वा दीक्षा सा सर्वकामदा २२
दीक्षया मुच्यते देही त्रिविधाद् भवबन्धनात्
कुण्डमण्डलसंयुक्ता क्रियादीक्षा निकथ्यते २३
इत्यजिताख्ये महातन्त्रे क्रियापादे दीक्षाविधिः अशीतितमः पटलः

एकाशीतितमः पटलः

भोगाङ्गार्चनविधिः

तन्मण्टपमलङ्कृत्य वितानैश्चैव दर्पणैः
नानापिञ्छसमायुक्तं नानादीपसमन्वितम्  १
जातिनीलोत्पलं चैव मल्लिका कनकास्तथा
कल्हाराम्बुजदान्तं च ह्रीबेरं च तथैव च  २
एतान्युक्तानि पुष्पाणि मण्टपं भूषयेत्ततः
तन्मण्टपस्य मध्ये तु शय्यामेवं प्रकल्पयेत्  ३
ततस्तामर्चयेद्विद्वान्यथाविधिपुरः सरम्
धर्मं ज्ञानं च वैराग्यमैश्वर्यं चार्चयेद्गुरुः  ४
पिनाकं विष्टरेऽभ्यर्च्य वलये कुण्डलीं तथा
ज्ञानशक्तिं क्रियाशक्तिमिच्छाशक्तिं तथैव च  ५
डोलायां वलये चैव कुण्डल्याद्यर्चनं तथा
शृङ्खलायां वृषं चैव बिन्दुं तद्वलये न्यसेत्  ६
शुद्धविद्यां मनोन्मन्या फलकायां न्यसेत्क्रमात्
भोगशक्तिं समभ्यर्च्य पूर्वोक्तविधिना सह  ७
वामादिभिश्च संपूज्य धूपदीपं समर्पयेत्
चन्दनं कुङ्कमं चैव रोचनां शशिमिश्रिताम्  ८
सर्वगन्धसमायुक्तं वामपार्श्वे तु विन्यसेत्
ताम्बूलं मुखवासं च हिमतोयं च दक्षिणे  ९
सर्वाभरणमाल्यादि विन्यसेत्पुरतस्तथा
देवेशं पूजयित्वा तु पूर्वोक्तविधिना सह  १०
धामप्रदक्षिणं कृत्वा प्रविशेद्भोगमन्दिरम्
पाद्यमाचमनं चार्घ्यं कर्पूरं दीपवद् भ्रमेत्  ११
शय्यामञ्चे समारोप्य देवं देवीं समर्चयेत्

तच्छक्त्या परया पूज्य देवेशं परमं शिवम् १२
एवं संपूज्य विधिवत्पश्चादाचमनार्घ्यकम्
शर्करान्नं च दुग्धान्नं फलापूपं तथैव च १३
पानीयादिसमायुक्तं नैवेद्यं च समाचरेत्
आचामार्घ्यं ततो दत्त्वा ताम्बूलं तु निवेदयेत् १४
पुनराचम्य विधिवद् धूपदीपं विशेषतः
आरात्रिकं ततो दत्त्वा नीराजनमतः परम् १५
भस्मादितालवृन्तान्तमुपचारान्प्रदापयेत्
वेदध्वनिसमायुक्तं स्तोत्रध्वनिसमन्वितम् १६
शङ्खध्वनिसमायुक्तं काहलैस्तु समन्वितम्
दीपं सङ्कलयेद्धीमान्निक्षिपेद्यवनिकां तदा १७
मध्यरात्रे तु शयने शक्तिं देवेन योजयेत्
तथान्ते क्षेत्रपालं चाप्यर्चयित्वा विशेषतः १८
अन्ते शास्तारं संपूज्य जनान्स्वगृहमाविशेत्
रात्र्यन्तके विशेषेण शङ्खसंघोषपूर्वकम् १९
भोगाङ्गोद्वासनं कृत्वा गर्भगहे सदाशिवम्
भास्करस्योदयात्पूर्वे त्रिपादेन त्रिनाडिकाः
पूर्ववत्परिसंकल्प्य शिवशास्त्रविधानतः २०
इत्यजिताख्ये महातन्त्रे क्रियापादे भोगाङ्गार्चनविधिः एकाशीतितमः पटलः

## द्व्यशीतितमः पटलः

## अर्चकस्याशौचविधिः

आरब्धे वरणे यज्ञे श्राद्धे पाकपरिक्रमे
तन्मध्ये सूतकप्राप्तौ सूतदोषो न विद्यते १
उत्सवे होमकाले च प्रतिष्ठार्चनयोस्तथा
नाशौचं मध्यमे चैव कर्मान्ताशौचमाचरेत् २
रक्षाबद्धस्तु आचार्यो ह्युत्सवे रोगसंभवे
पुत्रं वा शिष्यमन्यं वा कारयेद्यागकर्मणि ३
द्वौ तालौ कथितो हस्तस्तच्चतुर्धनुरुच्यते
पञ्चाशद्धनुःसीमान्ते चैकवीथ्यां मृतौ यदि ४
तच्छवं शीघ्रमुद्धृत्य पूजयेत्पुरुषोत्तम
ध्वजरोहणबन्धे तु आचार्यमरणे सति ५
अन्येन देशिकेनैव ध्वजारोहणकं कुरु
ध्वजारोहणमध्ये तु आशौचं संभवेद्यदि ६
लोकपालान्विसृज्यान्ते आशौचं तु समाचरेत्
एकपुत्रपितृमात्रोर्नाशश्चेद्ध्वजबन्धने ७
दग्धकर्मसमाप्तौ तु रक्षासूत्रेण देशिकः
अवरोहादिकं कृत्वा यागान्ते कर्म कारयेत् ८
दीक्षितो ह्येकपुत्रस्तु मातापित्रोर्मृतिर्यदि
संस्कारमेव कुर्वीत यज्ञान्ते सूतकं भवेत् ९
शिवेन दीक्षितस्यैवं सूतकप्रेतकं न हि
न लिप्यते मलेनैव पद्मपत्रमिवाम्भसा १०
गुरुस्तु बन्धोर्मरणं श्रुत्वा गच्छेत्तु तद्गृहम्
पुत्रादिकमृतिं दृष्ट्वा स्नात्वा शुद्धिं शिवार्चनम् ११
शिवव्रतधरस्यास्य न मृतं न च सूतकम्

क्रियान्ते विद्यते किं तु शेषमन्ते विशुध्यति १२
इत्यजिताख्ये महातन्त्रे क्रियापादे अर्चकस्याशौचविधिः
द्व्यशीतितमः पटलः

त्र्यशीतितमः पटलः
शास्तृप्रतिष्ठोत्सवविधिपटलः

एवं लक्षणमाख्यातं संक्षेपान्मुनिसत्तम
प्रतिष्ठादिवसात्पूर्वं कारयेदङ्कुरार्पणम् १
मण्डपे स्थण्डिलं कृत्वा बिम्बांस्तस्योपरि न्यसेत्
रत्नन्यासं च संश्लेषमोंकाराद्धृदयेन तु २
मधु सर्पिर्दृशोर्दद्यान्मधुवातेति मन्त्रतः
असुनीतेति मन्त्रेण वैश्यव्यूहं तु दर्शयेत् ३
पशूनामिति मन्त्रेण सवत्सां गां प्रदर्शयेत्
बिम्बशुद्धिं ततः कृत्वा जले चैवाधिवासयेत् ४
प्रासादस्याग्रतः कुर्यान्मण्डपं लक्षणान्वितम्
वेदिर्मध्ये तु कर्तव्या कुण्डानि परितः क्रमात् ५
पूर्वादिषु चतुर्दिक्षु चतुरश्रं तु कारयेत्
शांकरे वृत्तकुण्डं तु पूर्ववल्लक्षणान्वितम् ६
सर्वलक्षणसंयुक्तं मण्डपं तु प्रपूजयेत्
स्थण्डिलं कारयेद्वेद्यां कल्पयेच्छयनं हृदा ७
जलादुत्तीर्य बिम्बानि शुद्धिं कृत्वास्त्रमन्त्रतः
कौतुकं बन्धयेद्धीमान्पूर्वोक्तविधिना सह ८
कृष्णवस्त्रेण संवेष्ट्य शाययेच्छयनोपरि
कुम्भं स्थाप्य शिरोदेशे वर्धन्यौ द्वे च विन्यसेत् ९

तत्पुरस्तान्महापीठे कुम्भं न्यस्य स्वमन्त्रतः
परिवारघटानष्टौ वेदिबाह्ये तु विन्यसेत् १०
ससूत्रान्सापिधानांश्च सवस्त्रान्हेमसंयुतान्
सकूर्चान्गन्धसंयुक्ताञ्शुद्धतोयेन पूरितान् ११
तत्तन्मन्त्रैः समायुक्तान् नैवेद्यान्तं पृथक् पृथक्
ततो होमं समारभ्य कुण्डे वा स्थण्डिलेऽपि वा १२
आधानादिविसर्गान्तमग्निकार्योक्तमाचरेत्
अग्निमध्ये तु तं ध्यात्वा आसनावरणान्वितम् १३
शास्त्रुत्सवविधिं वक्ष्ये शृणु सम्यग्जनार्दन
आयुरारोग्यधनदं राजराष्ट्रविवर्धनम् १४
ग्रामशान्तिकरं पुण्यं सर्वसंपत्करं शुभम्
परसंहरणकरं स्वरक्षणकरं परम् १५
स्वसेनारक्षणकरं परसेनापलायनम्
माघमासे तु कर्तव्यं सोमवारदिने शुभे १६
सर्वमासेषु कर्तव्यं शास्तुः प्रार्थनमुत्सवम्
पक्षाहे वा नवाहे वा एकाहे वा समाचरेत् १७
एकाहं कौतुकपूर्वं नवपक्षाहमुत्सवम्
स्वतन्त्रे चालये कुर्यादुत्सवं नवकर्मणि १८
आदिशैवेन कर्तव्यं वक्ष्यामि शृणु साम्प्रतम्
नित्यं नैमित्तिकं काम्यं स्वतन्त्रालय आचरेत् १९
मूलादिपञ्च बेराणां शास्तुरुत्सवकर्मवित्
तस्मात्सर्वप्रयत्नेन शस्तुरुत्सवमारभेत् २०
एकत्रिपञ्चसप्ताहनवाहेति प्रभेदकम्
एकाहं शैवमित्युक्तं त्रियहं गौणमुच्यते २१

पञ्चाहं भौतिकं नाम सप्ताहं भौवनं स्मृतम्
नवाहं शान्तिकं नाम पञ्चधा परिकल्प्यते २२
तत्तन्मासदिने वापि पन्ने नवदिनेऽपि वा
आदौ तीर्थं विनिश्चित्य अधिवासनमारभेत् २३
उत्सवं त्रिविधं प्रोक्तं ध्वजारोहणपूर्वकम्
भेरीताडनपूर्वं च अङ्कुरार्पणपूर्वकम् २४
भो शास्तृदेव देवेश समस्तफलसाधक
शास्तारमित्थं संबोध्य विज्ञापनमथाचरेत् २५
महोत्सवं करिष्येऽहं तत्र संनिहितो भव
इति विज्ञाप्य देवेशं लब्धानुज्ञस्ततो गुरुः २६
भूतचण्डमलंकृत्य गृह्णीयात्करालास्त्रकम्
मृदां स्थानं च संप्राप्य पूर्ववन्मृदमाहरेत् २७
मण्डपेशानदेशे तु शालितण्डुलमेव च
विकीर्य पालिकाभिश्च आवृतं सोमकुम्भकम् २८
प्रतिष्ठाप्य तु तत्पार्श्वे न्यसेद्रोहिणिकुम्भकम्
मुद्गमाषकुलुत्थांश्च तिलसर्षपमाढकम् २९
यवगोधूमशालींश्च गृह्णीयान्नवबीजकम्
शिवमन्त्रेण क्षीरेणाप्लावयेदभिमंत्र्य च ३०
भूताष्टकं च दैवत्यं भवादयश्च देवताः
पालिकादेवताः प्रोक्ता अर्चयेत्तु विशेषतः ३१
पूजयेन्मूलमन्त्रेण मध्यमं सोमकुम्भकम्
अङ्कुरं पूर्ववत्प्रोक्तं ध्वजाधिवासमाचरेत् ३२
तत्पटं षोडशहस्तमथवा तु चतुर्दश
ध्वजदण्डसमं दीर्घं द्विगुणं ध्वजरज्जुकम् ३३

विस्तारेण समं पुच्छं तदर्धं शिखरं ततः
तत्पटं पञ्चधा भज्यं मध्ये तु गजवाहनम् ३४
लेखयेत्तत्र दण्डे तु बन्धयेच्च विशेषतः
भूतांश्च तुरगांश्चैव छत्रचामरस्वस्तिकम् ३५
धूपदीपं च माल्यं च तत्पटे पञ्चधा कृते
क्रमुकं वेणुदण्डं वा स्कन्धत्रयसमन्वितम् ३६
यष्टिना संघटित्वा तु वलये मध्यके न्यसेत्
शतदर्भकृतं कूर्चं यष्ट्यग्रे विनिवेशयेत् ३७
दर्भमालासमायुक्तं किङ्किणीमालया युतम्
एवं पटं समापाद्य नेत्रोन्मीलनमाचरेत् ३८
एवं धाम्नि समापाद्यमधिवासविधिं शृणु
तस्यैव पुरतः स्थाप्य गजयागाधिवासनम् ३९
मण्डपादि यथापूर्वं किंचिद्भेदं विशेषतः
गजवाहं प्रतिष्ठाप्य शास्त्रष्टपरिवारकम् ४०
शक्त्या च संहितं बेरं कुम्भं संस्थाप्य पूर्वतः
ध्वजदण्डं दीपदण्डं संनिधौ पुरतः स्थितौ ४१
यागशालाबलिस्थानपूर्वस्थानेषु पूजयेत्
चतुर्धा स्थण्डिलं सम्यक् शास्त्रोक्तमथ कल्पयेत् ४२
न्यस्त्वा कारकभूतास्त्रं तदग्रे तत्पटं न्यसेत्
तदग्रे विन्यसेत्कुम्भं शास्त्रेऽष्टपरिकुम्भकान् ४३
तदग्रे विन्यसेद्भेरीं सर्वलक्षणसंयुताम्
क्रमेणैव समभ्यर्च्य गन्धपुष्पादिभिस्ततः ४४
भेरीकुम्भान्तरे होमं कुण्डे वा स्थण्डिलेऽथवा
प्रागुक्तविधिना कुर्याच्चोष्णीषादीन्निवेशयेत् ४५

अस्त्रं तु देवतामानं कृत्वा प्रागुक्तवर्त्मना
भेरीं संताडय संगृह्य त्रिभिर्मन्त्रैस्तु ताडयेत् ४६
आहूय दिव्यगान् पश्चाच्छुद्धपारशिवस्ततः
पुष्पाञ्जलिं समभ्यर्च्य भेरीं निष्पीडय पूजयेत् ४७
उद्धृत्य भेरीं घोषेण देवताह्वानतः क्रमात्
ग्रामप्रदक्षिणं कृत्वा संध्याह्वानं ततः परम् ४८
देवतावाहनं कृत्वा संध्यावाहनमाचरेत्
संधिदेवान्समावाह्य ब्रह्मादीशान्तमर्चयेत् ४९
स्वस्वनाम्ना तु पूजायामासनार्चनकर्मणि
संधोपचारः कर्तव्यः प्रतिसंध्यं प्रपूजयेत् ५०
तालो रागश्च नृत्तं च गीतं वाद्यं च पञ्चधा
एतैः पञ्चोपचारैश्च सन्धिदेवान्प्रपूजयेत् ५१
सैकते स्थण्डिले वापि होमं कुर्याद्विचक्षणः
होमोपकरणद्रव्यं समिदन्नाज्यमेव च ५२
पलाशखदिराश्वत्थवटोदुम्बरबिल्वकम्
अर्कः शमी च प्लक्षश्च आज्येन समभिप्लुतम् ५३
शतैर्वाथ तदर्धैर्वा पञ्चविंशतिकेन वा
षोडशभिरथवा कुर्यात्संख्यया देशिकोत्तमः ५४
वेदादिमन्त्रमुच्चार्य शास्तृगायत्रिमन्त्रतः
ब्रह्मषडङ्गमन्त्रेण प्रत्येकं जुहुयात्क्रमात् ५५
आधानादिविसर्गान्तमग्निकार्योक्तमाचरेत्
अग्निमध्ये तु तं ध्यात्वा आसनावाहनार्चनम् ५६
समिदाज्यचरूँल्लाजाँल्लाजचूर्णं यवं तिलम्
अपूपं पिप्पलीपत्रं वेणुजं त्वथ माषकम् ५७

सद्यादीशानपर्यन्तैस्तन्मन्त्रैश्चैव होमयेत्
प्रत्येकं शतमर्धं वा हुत्वा स्विष्टान्तमाचरेत् ५८
अथवा मूर्तिमन्त्रेण मांसहोमं समाचरेत्
मांसं प्रत्यामद्रव्येण शुद्धान्नं होमयेच्छतम् ५९
अथवा मूलमन्त्रेण सहस्रं वा शताष्टकम्
तत्तत्स्वनाममन्त्रेण होमयेन्मन्त्रपूर्वकम् ६०
पूर्वद्रव्यसमायुक्तं होमं मन्त्री समाचरेत्
वह्नेर्बीजं समादाय कुम्भमध्ये तु योजयेत् ६१
सौरादिगजपूजान्तं पूर्ववत्पूजयेद्बुधः
विशेषमिह कर्तव्यं गजयागवशान्नयेत् ६२
ध्वजदण्डादिकं कृत्वा यात्राबेरे समाचरेत्
दण्डार्चनक्रमं वक्ष्ये शृणु सम्यग्जनार्दन ६३
आहूय सर्वदेवांश्च तत्तत्स्वनाममन्त्रकैः
विघ्नेश्वरस्य पूजां च सकलस्य विशेषतः ६४
पुण्याहं चैव कर्तव्यं मन्त्रैः प्रोक्ष्य शिवाम्भसा
करशुद्धिं करन्यासमङ्गन्यासमतः परम् ६५
प्रोक्षयेद्दण्डमभ्यर्च्य अर्चयेन्मन्त्रपूर्वकम्
पूर्वाह्ने वा पराह्ने वा रात्रौ वारोपयेत्ततः ६६
नैवेद्यं दापयित्वा तु धूपदीपसमायुतम्
आस्थानमण्डपं तत्तु यात्राबेरं नयेत्ततः ६७
नैवेद्यं दापयेत्पश्चादारात्रिकमथाचरेत्
यागस्य मण्डपं कृत्वा चैशान्ये वाग्निगोचरे ६८
वारुण्यां संनिधौ वापि कर्तव्यो यागमण्डपः
पञ्चषट्सप्तहस्तैर्वा षोडशस्तम्भसंयुतः ६९

मध्ये वेदिं ततः कुर्यात्सम्यग् द्वित्रिचतुष्कराम्
उपवेदि ततः कुर्याद्विद्वित्रियङ्गुलकाश्रयाम् ७०
वेदिबाह्ये तु परितः पञ्च कुण्डानि कारयेत्
एकाग्निर्वाथ कर्तव्यो वृत्तकुण्डं महाग्नये ७१
वेदिमध्ये विशेषेण भारपञ्चकशालिभिः
तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ७२
लाजैस्तदर्धैः संयुक्तं दर्भैः पुष्पैः परिस्तरेत्
तन्मध्ये नलिनं लिख्य साष्टपत्रं सकर्णिकम् ७३
अर्चयेद्गन्धपुष्पैश्च श्रीं क्लीं बीजेन संयुतम्
धूपदीपं ददेत्पश्चाद्यागेशाराधनं क्रमात् ७४
शृणु कुण्डसमीपस्थं होमोपकरणानि च
कुण्डस्य कृत्वा संस्कारान् वीक्षणाद्यान्विधीरितान् ७५
अष्टादश च संस्कारानासनं तत्र विन्यसेत्
वागीशीवाक्पती प्यर्च्य आवाह्य शास्तृमूर्तिवत् ७६
अग्निमध्ये समावाह्य तत्परीवारकैः सह
समिदाज्यचरूँल्लाजान्सर्षपं च यवं तिलम् ७७
मद्गं माषं कुलुत्थं च मूलमन्त्रेण होमयेत्
अष्टोत्तरशतं वाथ तदर्धं वा तदर्धकम् ७८
मेषकुक्कुटमांसं वा होमकर्म समाचरेत्
प्रत्याम्नातहविष्यं वा आज्यमिश्रेण होमयेत् ७९
पञ्चब्रह्म च मूलं च षडङ्गं च हुनेत्क्रमात्
होमान्ते प्रतिसरं बद्ध्वा शास्तारं सशक्तिं न्यसेत् ८०
अस्त्रमूर्तिं न्यसेत्तत्र प्रतिसरं बन्धयेत्ततः
तण्डुलं कौतुकं चैव नालिकेरं तथैव च ८१

स्थलिकोपरि ताम्बूलं सवस्त्राच्छादनं न्यसेत्
परिचारमूर्धन्यादाय प्राकारं संपरिक्रमेत् ८२
शास्तुः संनिधिमागत्य त्रिपाद्युपरि विन्यसेत्
विघ्नेशं पूजयेत्तत्र संकल्प्य च स बुद्धिमान् ८३
पुण्याहं वाचयेत्तत्र प्रोक्षयेच्छास्तृमूर्तिषु
प्राणानायम्य मूलेन कराङ्गन्यासमारभेत् ८४
कौतुकं ब्रह्ममन्त्रेणाभ्यर्च्य शास्तृमन्त्रवित्
निरीक्षणावकुण्ठने पद्मधेनू प्रदर्शयेत् ८५
धूपदीपं ददेत्पश्चाच्छास्तृमूर्तिं समर्चयेत्
लयभोगाङ्गं साङ्गं च अर्चयेन्मूर्तिबिम्बवत् ८६
शास्तृब्रह्माङ्गं विन्यस्य मूर्धादिपदान्तं न्यसेत्
आवाहनादिषण्मुद्रास्ततः संदर्शयेत्सुधीः ८७
दत्त्वा धूपं च दीपं च कौतुकं बन्धयेत्ततः
त्रियम्बकेन मन्त्रेण बृहत्सामेति मन्त्रतः ८८
विश्वेत्ताते ऋचा चैव कौतुकं बन्धयेत्क्रमात्
अर्घ्यं दद्याद्विशेषेण नैवेद्यं दापयेत्ततः ८९
आरात्रिकं ततः कुर्यात्षोडशैरुपचारकैः
शुद्धं भस्म ततो दत्त्वा भक्तेभ्यो दापयेत्ततः ९०
बन्धनान्ते बलिं दद्यात्प्रतिमाबलिमेव च
मेषकुक्कुटमहिषमधुमत्स्यांस्तथैव च ९१
अथवान्यप्रकारेण अपूपं तिलचूर्णयुक्
रात्रिचूर्णं च कूश्माण्डं बलिदाने विशेषतः ९२
चन्दनं रक्तपुष्पं च धूपदीपं प्रदापयेत्
मूलमन्त्रेण तृप्त्यर्थं दिनेशानां यथाविधिः ९३

यक्षेशं पूर्वतः स्थाप्य राक्षसं वह्निगोचरे
याम्ये पैशाचकं स्थाप्य भूतं न्यस्य तु नैर्ऋते ९४
गन्धर्वं पश्चिमे स्थाप्य वायव्ये किन्नरं तथा
दैत्येशं कल्पयेत्सोमे विद्याधरं तु शाङ्करे ९५
पुरुषो वाथवा स्त्री वा तैलं रात्रौ तु दापयेत्
तत्काले सर्वलीलाश्च जनैः सर्वैः सहैव तु ९६
अवभृथस्नानं कर्तव्यं जनानां पापशान्तये
प्रविश्य भवनं पश्चात्ततो यागगृहे गुरुः ९७
यागेश्वरं समभ्यर्च्य यागहोमं समाचरेत्
प्रायश्चित्ते विशेषेण होमं कुर्याद्विचक्षणः ९८
अष्टोत्तरशतं वापि पञ्चाशत्पञ्चविंशतीः
द्रव्यान्ते व्याहृतीर्हुत्वा सर्वद्रव्यसमायुतम् ९९
चित्तादिं च यजादिं च होमयेत्तु विशेषतः
स्विष्टमग्नेति मन्त्रेण हुनेत्पूर्णाहुतिं तदा १००
अभ्युद्य स्रुचमस्त्रेण सर्पिषापूर्य तद्बिलम्
प्रणवेन ततः पुष्पं साक्षतं सकुशं स्रुचि १०१
विन्यस्य स्रुवमारोप्य तन्मध्ये चाप्यधोमुखम्
दण्डमूलाग्रयोः पश्चाद्गृहीत्वा स्रुक्स्रुवौ तु तौ १०२
सव्येतराभ्यां पाणिभ्यां विन्यस्यास्यं तु शङ्खवत्
ऋजुकायः समुत्थाय स्थितः समपदान्वितः १०३
नाभिदघ्नं तयोः कृत्वा मूलं तु करयोस्ततः
दक्षिणेतरयोः कुर्यादुन्नत्यवनतिं तयोः १०४
यथा धाराग्निमध्ये तु पततीत्येकधा सुधीः
पूर्णां देवाणुना हुत्वा मन्त्री सम्यक्समापयेत् १०५

भस्माभिवन्दनं कृत्वा नाडीसंधानमार्गतः
वह्निदेवस्य मन्त्रांश्च कुम्भस्थान्देवशूलयोः  १०६
शिवाग्निं च विसृज्याथ कुम्भमप्यस्त्रवर्धनीम्
लोकेशद्वारपालादीन्विसृजेत्सकलानपि  १०७
पूर्णाहुतिरिति प्रोक्ता दक्षिणादानपूर्विका
दक्षिणा त्रिविधा प्रोक्ता पञ्चनिष्काधमा भवेत्  १०८
त्रिगुणा दशनिष्का वा त्रिगुणा देशिकस्य तु
वित्तानुसारणं कृत्वा वस्त्रहेमाङ्गुलीयकैः  १०९
आचार्यं मूर्तिपांश्चैव संपूज्य परितोषयेत्
कुम्भाभिषेककाले तु मूलबेराभिषेचनम्  ११०
अथ यागेशकुम्भं च परितःस्थांश्च कुम्भकान्
उत्थाप्य मूलदेवाग्रे स्थापयित्वा यथा तलम्  १११
कुम्भमादाय बेरे तु योजयेद्देशिकोत्तमः
परिवारघटान्पीठे पादस्थानेऽभिषेचयेत्  ११२
कुम्भाभिषेचनं प्रोक्तं शुद्धस्नानार्चनं शृणु
कुर्यादेकोनपञ्चाशत्पञ्चपञ्चघटांस्तु वा  ११३
षोडशस्नपनं वाथ नवपञ्चैकमेव वा
पञ्चामृतादिभिर्गव्यैः पूजा वैशेषिकी तथा  ११४
गन्धं पुष्पं च धूपं च दीपं दद्याद्यथाक्रमम्
नैवेद्यं बहुधा कृत्वा उपदंशसमन्वितम्  ११५
ताम्बूलं दापयेत्पश्चाच्छेषं पूर्ववदाचरेत्
विज्ञापनं तथा कृत्वा  त्वत्प्रसादात्कृतस्त्वयम्  ११६
निरस्ताखिलविघ्नस्तु मया निर्वर्तितोत्सवः
समाहिताखिलाभीष्टफलदो भवतु ध्रुवम्  ११७

प्रार्थयेदभिसंपूज्य शास्तारं स्वस्ति नाथकम्
भवेदभीष्टफलदम् एवं वैशेषिकार्चनम्  ११८
ध्वजावरोहणं कुर्याच्चण्डयागमतः परम्
लोकेशानां ततः पश्चादक्तस्थाने बलिं क्षिपेत्  ११९
विसृज्य दिक्पतीनन्ते महापीठे बलिं क्षिपेत्
पादप्रक्षालनं कृत्वा प्रविशेद्भवनं ततः  १२०
इति यः कारयेद्भक्त्या शास्त्रुत्सवमनुत्तमम्
प्रत्यब्दं च विशेषेण शास्तुरुत्सवमाचरेत्  १२१
ब्रह्मक्षत्रियविट्शूद्राः पूजयेत्तु विशेषतः
विष्वादिमकरान्तं वै पूजयेत्सर्वमाचरेत्  १२२
संवत्सरोत्सवं कुर्यान्मासि मासोत्सवं क्रमात्
इन्दुवारं समारभ्य संप्राथ्योत्सवमाचरेत्  १२३
सर्वलोकहितं पुण्यं सर्वदेवप्रियार्थकम्
सर्वशत्रुक्षयकरं सर्वोपद्रवनाशकम्  १२४
भूतेभ्यश्च पिशाचेभ्यो राक्षसेभ्यश्च निर्भयम्
मुच्यते सर्वपापेभ्य इहैव धनवान्भवेत्
सर्वान्कामान्स भुक्त्वान्ते शिवलोके चिरं वसेत्  १२५

इत्यजिताख्ये महातन्त्रे क्रियापादे शास्तृप्रतिष्ठोत्सवविधिः
त्र्यशीतितमः पटलः

## चतुरशीतितमः पटलः

## आचार्यलक्षणविधिः

आचार्यलक्षणं वक्ष्ये द्विविधं चोच्यते क्रमात्
स्थूलसूक्ष्मप्रभेदेन कथयामि समासतः  १

स्थूलं देहादिकं प्रोक्तं सूक्ष्ममात्मादिकं तथा
आत्मना यजनं यत्तन्मुक्तिदं चैव सुव्रत २
विदित्वा तु महाप्राज्ञमाचार्यं पूजयेत्सदा
ज्ञानं ध्यानं च स्वाध्यायस्तपः कर्म तथैव च ३
एत पञ्च महायज्ञा मया प्रोक्ता यथाक्रमम्
पञ्चानामपि यज्ञानां मयादौ परिभाषितौ ४
द्वौ चैवमुक्तौ तौ ज्ञेयौ गुणावात्मसमुद्भवौ
शेषाः क्षुद्रफला ज्ञेया यत्नजास्ते शरीरिणाम् ५
स्थूलं तस्माच्छरीरं स्यात्सूक्ष्ममात्मेति कीर्तितम्
तस्मात्प्राज्ञेन सम्यक्तु नावेक्ष्यं स्थूललक्षणम् ६
सूक्ष्मलक्षणमेवात्र ह्युपादेयं सुदुर्लभम्
काश्मीरः कौसलः काञ्चीकावेरीकोङ्कणोद्भवाः ७
कालिङ्गः कामरूपश्च काशीदेशसमुद्भवः
कुनखी वामनः कुब्जः शिपिविष्टश्च काणकः ८
अकालपलितो यस्तु खर्वाङ्गो दन्तुरस्तथा
अङ्गहीनश्च दीर्घश्च स्थूलो ह्रस्वस्तथैव च ९
अहंकारसमोपेतः क्रोधेन च समान्वितः
अग्निदो गरदश्चैव भूमिहर्ता तथैव च १०
लुब्धश्च कन्याहारी च मृषावादी तथैव च
गर्वी च शस्त्रपाणिश्च धनुःशास्त्ररतो नरः ११
अत्याशी व्याधकर्मा च मांसभक्षणतत्परः
मद्यादिसेवकश्चैव मानी तार्कित एव च १२
काव्येष्वतिरतश्चैव दीनात्मा विप्रनिन्दकः
क्रमदीक्षाविहीनश्च युद्धकारी तथैव च १३

अपूज्यो निर्दयश्चैव देहपोषणतत्परः
आगमाचाररहितो रागी वार्धुषिकस्तथा १४
गणकः साहसी चैव द्यूतकारी तथैव च
भिषक्तन्त्रोपजीवी च भूततन्त्रोपजीवकः १५
पिशुनश्च कृतघ्नश्च गुरुद्रोही समत्सरी
क्रूरः परस्वहारी च पापकर्मरतो नरः १६
एषु सर्वेऽपि न त्याज्या एते दोषसमन्विताः
देशजैरपि युक्ता ये शुभलक्षणसंयुताः १७
आत्मदोषसमोपेता ह्यन्ये त्याज्यास्तु सर्वथा
काश्मीराद्यास्तु ये दोषाः कुनखाद्यास्तथैव हि १८
न त्याज्या गुणसंपन्नैर्गुरुभिस्तत्त्वविद्वरैः
अहंकारादयो दोषा वर्तन्ते यस्य चात्मनः १९
स एव निन्दितः प्रोक्तो गुरुर्देशिककर्मणि
कर्मवान्देशकालज्ञः कृपालुस्तन्त्रपारगः २०
कुलीनः सत्यवादी च शिवभक्तो जितेन्द्रियः
सर्वभूतहितः शान्तो यतात्मा सत्यसंयुतः २१
दम्भलोभविनिर्मुक्तः शौचाचारसमन्वितः
अद्रोही सर्वभूतेषु पुत्रवान्मोहवर्जितः २२
यदृच्छालाभसंतुष्टो निपुणो लेख्यकर्मणि
अशठः प्रियवादी च कृतज्ञः प्रीतमानसः २३
गुणत्रयविभागज्ञः सर्वभूतहिते रतः
श्रीमानगर्वी निपुणः शिवभक्तजनप्रियः २४
अलोलुपः शुचिर्धीमान्प्रीतिप्रभृतिसंयुतः
तत्त्वज्ञो ज्ञानवित्प्राज्ञो ह्यध्वलक्षणसंयुतः २५

कालज्ञानी क्रियायुक्तो वेदवेदाङ्गपारगः
प्रतिष्ठातन्त्रतत्त्वज्ञो वास्तुकर्मकृतश्रमः २६
गुरुभक्तो दृढः शूरो ज्ञानचर्याक्रियायुतः
अदृष्टार्थी बहुज्ञानश्चानसूयो दृढव्रतः २७
एवंविधो महाप्राज्ञो देशिकः श्रेष्ठ उच्यते
अविशेषेण यच्चित्तं सर्वजन्तुषु सद्रवम् २८
स एव देशिकः प्रोक्तो मया तत्त्वार्थवेदकः
आचार्यं शिवमेवाहुः शिवस्त्वाचार्य उच्यते २९
अभेदं यो विजानीयात्स वै वेदविदुच्यते
स्थावरं जङ्गमं चैव द्विविधं शिवमुच्यते ३०
शिवं तु स्थावरं प्रोक्तमाचार्यं जङ्गमं विदुः
प्रतिष्ठाद्यर्चनान्तं तु जङ्गमेनैव कारयेत् ३१
आचार्यपुत्रः पौत्रो वा दौहित्रो वा विशेषतः
लिङ्गस्थापनमुख्यत्वात्तेनैव स्थाप्य पूजयेत् ३२
निष्कलात्सकलो जातस्तथाचार्यात्तु पुत्रकः
स पुत्रो ज्ञानयुक्तश्चेदङ्गदोषं न लक्षयेत् ३३
अनाचार्यकुले जाताँल्लक्षयेत्तन्त्रवित्तमः
अङ्गदोषेण युक्ताश्चेद्वर्जयेत्तान् प्रयत्नतः ३४
कुर्यादाचार्यपुत्रश्चेद्राजराष्ट्रसुखाय च
यजमानाभिवृद्ध्यर्थं तद्देशस्याभिवृद्धये ३५
अङ्गदोषो न दोषः स्याद्दोषः स्यादात्मदोषकः
अहङ्कारादयो दोषा वर्तन्ते यस्य चात्मनः ३६
तद्दोषांस्तु परीक्ष्यैव वर्जयेत्तं प्रयत्नतः
आचार्यपुत्रकस्यैवमन्येषां न विधीयते ३७

शरीरलक्षणं तत्र नावेक्ष्यं हृदयस्य तु
भूतानां तु विकारेण ह्यङ्गवैकल्यतायपौ ३८
देवानामपि सर्वेषां प्रसिद्धा त्वङ्गहीनता
देवतानां नियोगेन ऋषीणां तु भवेदिह ३९
एकपादोऽभवल्लोके ह्यजाख्यो नाम शाङ्करः
सोऽपि वै दीक्षितः पूर्वमाचार्यत्वमुपागतः ४०
सूर्ययन्ता च संपन्नः पादहीनो महाबलः
अष्टैश्वर्यसमोपेतो दीक्षायुक्तः पुरातनः ४१
सोऽपि संतानसंपन्नो मद्भक्तः काश्यपात्मजः
वैनतेयो महाभक्तः पाणिहीनो न कुत्सितः ४२
मद्दीक्षया च संपन्नो देशिको देशिकोत्तम
अहल्याजारदोषेण वृत्रहापि विरूपवान् ४३
मया च दीक्षितः सोऽपि आचार्यत्वमुपागतः
राजयक्ष्मगृहीतः सञ्शशी पूर्वयुगे तथा ४४
मत्प्रियत्वान्महाभागो दीक्षासंपन्नतां ययौ
पितामहो महाप्राज्ञो मया छिन्नशिराः पुरा ४५
तस्यापि करुणार्द्रेण मया दीक्षा प्रयोजिता
संपन्नाश्च तया देवा वेद्याः सर्वे पुरातनाः ४६
अथ किं बहुनोक्तेन पुरा शक्रपुरोगमाः
हिरण्यकशिपोर्वेगाद्विकलाङ्गा महाबलाः ४७
भूमिं गता महावीर्याः प्रच्छन्नाकृतयस्तदा
काले महति नीते च मद्भक्तत्वमुपागताः ४८
तेषामनुग्रहार्थं च आचार्यत्वमुपागतः
आचार्यमूर्तिमास्थाय तेषां पाशं व्यदारयम् ४९

तेन मुक्ता महाघोरान् दिवि दैत्यान्व्यदारयन्
इयं तु देवतावस्था मुनीनामपि बोधत ५०
अष्टावक्रो महाप्राज्ञो ह्यात्मसंपत्समन्वितः
भक्तिश्रद्धासमोपेतः सर्वभूतहिते रतः ५१
तं वीक्ष्य कृपया सम्यग्दीक्षां तस्मै ह्यदामहम्
सोऽपि संपत्तियुक्तश्च शिष्यवर्गमथाकरोत् ५२
पैतामहो महातेजा अगस्त्यो मुनिसत्तमः
अङ्गुष्ठमात्रकायोऽपि चेतःसंपत्समृद्धिमान् ५३
आचार्यकरणे दक्षो दीक्षया च समन्वितः
प्रतिष्ठातन्त्रतत्त्वज्ञो मच्छिष्यः शीलवान्स्वयम् ५४
अन्ये च बहवो मुख्याः वालखिल्यो महातपाः
दीक्षासंपन्नमानी च देशिकत्वमुपागतः ५५
अथ किं बहुनोक्तेन नापेक्ष्यं कायलक्षणम्
आत्मलक्षणमेवात्र संग्राह्यं तत्त्वकोविदैः ५६
तस्मात्सर्वप्रयत्नेन आत्मसंपत्समन्वितम्
आचार्यं पूजयेन्नित्यं शास्त्रदृष्टेन बुद्धिमान् ५७

इत्यजिताख्ये महातन्त्रे क्रियापादे आचार्यलक्षणविधिः
चतुरशीतितमः पटलः

## पञ्चाशीतितमः पटलः

## श्रद्धोत्सवविधिः

उत्सवस्य विधिं वक्ष्ये शृणुष्वैकाग्रमानसः
सायुज्यं चैव सौभाग्यं सौख्यं मङ्गलमेव च १
यजमानेच्छया काले उत्सवं तु समाचरेत्

एतत्सायुज्यमित्युक्तं सौभाग्यं च ततः शृणु २
ध्वजहोमबलीन्कृत्वा बेरयानं समाचरेत्
सौभाग्यं त्विति विख्यातमधुना सौख्यकं शृणु ३
बलिहोमेन संयुक्तं बेरयानं समाचरेत्
सौख्यमेतत्समुद्दिष्टं मङ्गलं त्वधुना शृणु ४
ध्वजहोमौ बलिर्यानं युक्तं मङ्गलमुच्यते
आर्द्रापुष्यमघाश्चैव उत्तरा चैत्रमेव च ५
विशाखा मूलमाषाढं श्रवणं पूर्वभाद्रकम्
अश्विनी चाग्निनक्षत्रमार्द्रमासादितः क्रमात् ६
तीर्थाहं पर्वसंयुक्तमयुक्तं वा समाचरेत्
द्विवारे त्वेकनक्षत्रे भास्करस्योदये सति ७
तन्नक्षत्रमहोरात्रं तीर्थकार्यं समाचरेत्
यामहीनं यथा ऋक्षं पूर्वर्क्षे तीर्थमाचरेत् ८
आर्द्रान्तं सर्वमासेषु विषुवे ग्रहणान्तके
अन्यपुण्यदिनान्ते च उत्सवं कारयेद्बुधः ९
नवाहमुत्तमं प्रोक्तं सप्ताहं मध्यमं स्मृतम्
पञ्चाहमधमं प्रोक्तमुत्सवं संप्रकीर्तितम् १०
पञ्चसप्तनवाहे तु सौभाग्यं सौख्यमाचरेत्
सप्ताहे च नवाहे च मङ्गलं तु समाचरेत् ११
विशेषात्पूजनं कृत्वा बेरयानं समाचरेत्
यात्रार्थस्नपनं कुर्यात्संध्यैकया समाचरेत् १२
तदन्ते शान्तिहोमं च भूरि चान्नं निवेदयेत्
सायुज्यकमिति प्रोक्तं पञ्चाङ्गमिति कीर्तितम् १३
ततोऽङ्कुरार्पणं कुर्याद्रक्षाबन्धमतः परम्

वास्तुशुद्धिं तृतीयां तु बेरयानं चतुर्थकम्  १४
पञ्चमं परिवेषं तु षष्ठं नृत्तावलोकनम्
यात्रार्थं स्नपनं पश्चाद्विशेषयजनाष्टमम्  १५
नवमं शान्तिहोमं च तीर्थाधिवासनं परम्
एकादशं चूर्णकर्म द्वादशं तीर्थकर्मकम्  १६
आचार्यपूजनं पश्चाद्दक्षिणां च ततः परम्
प्रायश्चित्ताभिषेकं च भूरि चान्नं च षोडशम्  १७
एवं षोडशकाङ्गं तु सौभाग्यमिति कीर्तितम्
बीजनिर्वापणं पूर्वं रक्षाबन्धो द्वितीयकः  १८
तृतीयो भेरीघोषश्च चतुर्थं वास्तुशुद्धिकम्
पञ्चमश्चास्त्रयागश्च षष्ठं वै बलिदानकम्  १९
त्रियंशं बलिदानं स्यात्सौख्ये विजयपुष्कले
सप्तमं बेरयानं च परिवेषस्तथाष्टमः  २०
नृत्तावलोकनं पश्चाद्यानार्थस्नपनं परम्
विशेषपूजनं पश्चाद्द्वादशं मृगयानकम्  २१
तीर्थाधिवासनं पश्चाच्चूर्णकर्म ततः परम्
पञ्चदशं तीर्थकर्म षोडशो मौनयागकः  २२
यागकुम्भाभिषेकश्च दक्षिणादानकं परम्
सौख्यं विंशतिकाङ्गं च उत्सवं परिकीर्तितम्  २३
ध्वजभेर्यङ्कुरपूर्वान्मङ्गलं त्रिविधं स्मृतम्
पूर्वोक्तेन विधानेन मङ्गलं तु समाचरेत्  २४
चतुर्विंशत्युत्सवोर्ध्वे सौभाग्यं वक्ष्यते क्रमात्
बेरयात्रादिनात्पूर्वे सप्तपञ्चत्रियाहके  २५
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह

अङ्कुरार्पणकार्यं च वर्जयेत्कारयेत्तु वा  २६
यागारम्भदिनात्पूर्वनिशायामधिवासयेत्
विशेषेण च यात्रार्थं कुर्यात्प्रतिसरक्रियाम्  २७
सौवर्णं राजतं वापि क्षौमं कार्पासकं तु वा
स्थालीं तु तण्डुलैः पूर्य ताम्बूलं सोपदंशकम्  २८
तन्मध्ये विन्यसेत्सूत्रं भस्माधारसमन्वितम्
श्वेतताम्बूलसंयुक्तं पूगबीजसमन्वितम्  २९
नालिकेरफलोपेतं स्थलिकोर्ध्वे तु विन्यसेत्
पुण्याहं वाचयित्वाथ प्रोक्षयेद्धृदयेन तु  ३०
आत्मतत्त्वं न्यसेत्पात्रे विद्यातत्त्वमथाक्षते
भस्माधारे तु मायाख्यं भसिते लकुलीश्वरम्  ३१
अनन्तं सूत्रके न्यस्त्वा गन्धाद्यैरर्चयेत्क्रमात्
पात्रमाच्छाद्य वस्त्रेण मालां तदुपरि न्यसेत्  ३२
पर्यष्टिं च समाहूय सोष्णीषं सोत्तरीयकम्
शिरसा वाहयित्वा तु सर्वालंकारसंयुतम्  ३३
ग्रामप्रदक्षिणं कृत्वा प्रासादस्य प्रदक्षिणम्
कारयेद्वर्जयेद्वाथ महेशं पूजयेत्ततः  ३४
पुण्याहं वाचयेद्विद्वान् रक्षासूत्रमनुं जपन्
त्रियम्बकेन मन्त्रेण कौतुकं बन्धयेत्ततः  ३५
भसितं विन्यसेत्तत्र जनेभ्यो भसितं ददेत्
ताम्बूलं च पूगफलं दापयेत्तु सभासदाम्  ३६
उत्सवोद्दिष्टदेवानां कौतुकं बन्धयेद्बुधः
सर्ववाद्यसमायुक्तं सर्वालंकारसंयुतम्  ३७
नववस्त्रैरलंकृत्य गन्धमाल्यादिभूषणैः

हर्म्यप्रदक्षिणं कृत्वा विशेदास्थानमण्डपम्  ३८
नीराजनं ततो दद्याद्भस्मानि दापयेत्ततः
परिवेषं विनोदं च नृत्ताद्यालोकनं कुरु  ३९
तत्स्थानेषु तरङ्गेण वेष्टयेद्देशिकोत्तमः
अपरे दिवसे धीमान्प्रातः संध्यार्चनात्पुरा  ४०
महेश्वरं समानीय पूर्वस्थानं प्रवेशयेत्
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु  ४१
तद्वास्तुशोभनार्थाय भक्तानामुत्सवं कुरु
तद्रात्रावेव कर्तव्यं यानमेकं समाचरेत्  ४२
प्रथमे सोमधारी च उमार्धं च द्वितीयके
तृतीये वृषभारूढं संवादं च चतुर्थके  ४३
पञ्चमे गजहारी च षष्ठे शाम्भवमेव च
सप्तमे चैव वैवाह्यं त्रिपुरघ्नमथाष्टमे  ४४
नवमे कालहारी च प्रथमादिदिनं प्रति
देवानामप्यलाभे तु सोमास्कन्देश्वरं नयेत्  ४५
अन्येषामपि देवानां भक्तानामुत्सवं कुरु
तत्तद्देवेषु योग्यानां वाहनं संप्रकीर्तितम्  ४६
कल्पकुण्डोदरौ चैव वृषभो मौक्तिकप्रभा
गजश्च पुष्पधामं च स्यन्दनस्तुरगस्तथा  ४७
शिबिका च तथा प्रोक्ता वाहनानि दिनं प्रति
वाहनानामभावे तु शिबिकायानमाचरेत्  ४८
मौक्तिकं च प्रवालं च इन्द्रनीलं तथैव च
संकीर्णं पुष्परागं च रुद्राक्षं स्वर्णमेव च  ४९
माणिक्यभूषणं चैव मरकताभरणं तथा

तद्वर्णाभानि पुष्पाणि वस्त्राणि तु नियोजयेत् ५०
तत्तद्वर्णविभेदेन गन्धादिग्रहणं च वा
कृष्णगन्धं विशेषेण अष्टमेऽह्नि प्रदापयेत् ५१
तत्तद्वर्णाभनैवेद्यं दिनं प्रति दिनं प्रति
सप्तपञ्चत्र्यहे वापि एकाहे वा विशेषतः ५२
पूर्वे त्यक्त्वा परे प्रोक्तं देवतावाहनादिकम्
भूषणानामभावे तु स्वर्णेनैव समाचरेत् ५३
पुष्पाणामप्यभावे तु करवीरमिति स्मृतम्
वस्त्राणामप्यभावे तु श्वेतवस्त्रमिति स्मृतम् ५४
तत्तद्वर्णाभनैवेद्याभावे तु शुद्धमोदनम्
महेश्वरं समभ्यर्च्य वाहनस्योपरि न्यसेत् ५५
चलासनं तु संकल्प्य धूपदीपादिकं ददेत्
वीथीसंमार्जनोपेतं जलसेकसमन्वितम् ५६
नानागानस्वरोपेतं नानानृत्तसमन्वितम्
नानाध्वजसमोपेतं पिञ्छचामरसंयुतम् ५७
नानादीपसमायुक्तं गणिकादिभिरावृतम्
नानाभक्तजनैः सार्धं यानमेवं समाचरेत् ५८
यानकाले तु ताम्बूलं ददेन्नानाफलानि च
भक्ष्यापूपादिकं दद्यात्पाद्यादिकविवर्जितम् ५९
शनैः प्रदक्षिणं कृत्वा सभास्थानं प्रविश्य च
स्थिरासनं तु संकल्प्य भक्ष्यादीनि निवेदयेत् ६०
नीराजनं ततो दद्यात्ताम्बूलं च निवेदयेत्
परिवेषक्रमं चैव नृत्तावलोकनं क्रमात् ६१
यानं प्रतिदिनं कुर्यादहर्निशं महोत्सवे

प्रतिसंध्यार्दनं नित्यमुत्सवेश्वरपूजनम्  ६२
तत्परं शान्तिहोमं च नित्योत्सवमतः परम्
ततो यानक्रमं चैव परिवेषक्रमं तथा  ६३
नृत्तावलोकनं पश्चाद्यात्रार्थं स्नपनं परम्
विशेषयजनं पश्चात्ततो मध्याह्नपूजनम्  ६४
पश्चात्प्रदोषयजनमलंकारमतः परम्
उत्सवेश्वरपूजां च तत्परं शान्तिहोमकम्  ६५
पश्चान्नित्योत्सवं कुर्यात्ततो ग्रामप्रदक्षिणम्
शक्तिस्थाने निवेद्यं च रात्र्यां तु यानमाचरेत्  ६६
त्रिपादेन त्रिनाडी च क्रियां प्रति क्रियां प्रति
निशि यानावसाने तु स्नानवर्जितपूजनम्  ६७
गन्धमाल्यं विसृज्याथ पाद्यमाचमनं ददेत्
गन्धमाल्यैश्च संतोष्य पूर्वयानक्रमेण तु  ६८
रात्र्यन्ते यानि कर्माणि दिनं प्रति दिनं प्रति
तीर्थाधिवासनं कुर्याच्चूर्णोत्सवमतः परम्  ६९
देवाग्रे च सभास्थाने तीर्थतीरे मनोरमे
चूर्णोत्सवं तु कर्तव्यं जलक्रीडां समाचरेत्  ७०
प्रायश्चित्तार्थहोमं च स्नपनैरभिषेचयेत्
आचार्यं पूजयेत्पश्चाद्भक्तांश्चैव प्रपूजयेत्  ७१
प्रायश्चित्तार्थकलशैर्भूरि चान्नं निवेदयेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्  ७२

इत्यजिताख्ये महातन्त्रे क्रियापादे श्रद्धोत्सवविधिपटलः पञ्चाशीतितमः

## षडशीतितमः पटलः

## पञ्चगव्यविधिः

अतः परं प्रवक्ष्यामि पञ्चगव्यविधिक्रमम्
पकारः पापनाशः स्याद् ञ्चकारः पुत्रवर्धनः १
गकारो मोक्षदः प्रोक्तो व्यकारो व्याधिनाशनः
सर्वसिद्धिकरं पुण्यं पञ्चगव्यमिति स्मृतम् २
शिवाग्रे मण्डपे शुद्धे गोमयालेपनं कुरु
परिस्तरेत्तु शालींश्च द्वात्रिंशत्प्रस्थपूरितान् ३
प्राक्सूत्रं युगसूत्रं स्यादुदक्सूत्रं तथैव च
सूत्रात्सूत्रान्तरं तालं नवकोष्ठं प्रकल्पयेत् ४
चतुरश्रं ततः कृत्वा साष्टपत्रं सकर्णिकम्
चतुर्वेदाश्च दिक्पात्रे विदिक्पात्रे कृतादयः ५
अक्षतैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्
पुण्याहं वाचयेत्तत्र कोष्ठं तत्र क्रमाद्यजेत् ६
मध्यमे शिवतत्त्वं तु पूर्वकोष्ठे सदाशिवम्
ईश्वरं तु तथाग्नेय्यां विद्यातत्त्वं तु दक्षिणे ७
मायातत्त्वं तु नैर्ऋत्यां पश्चिमे कालतत्त्वकम्
वायौ नियतितत्त्वं च सोमे पुरुषतत्त्वकम् ८
ईशे प्रकृतितत्त्वं तु कोष्ठपूजा विधीयते
सुप्रतिष्ठं तु तन्मध्ये सुशान्तं पूर्वपात्रके ९
तेजःपात्रं ततो याम्ये प्रतीच्याममृतं तथा
सौम्ये रत्नोदकं चैव अव्यक्तं चैशपात्रकम् १०
आग्नौ सुव्यक्तपात्रं च नैर्ऋत्यां सूर्यपात्रके
वायौ संयुक्तपात्रं स्यादित्येतत्पात्रपूजनम् ११
क्षीरं कुम्भे तु तन्मध्ये दधि पूर्वे तु विन्यसेत्

दक्षिणे तु घृतं न्यस्य गोमूत्रं चोत्तरे न्यसेत् १२
पश्चिमे गोमयं चैव आग्नेय्यां पिष्टचूर्णकम्
नैर्ऋत्यां रजनीं स्थाप्य वायौ चामलकं तथा १३
ऐशान्यां दर्भतोयं च कुर्यात्तत्पञ्चगव्यकैः
कौशिकः क्षीरमित्युक्तः काश्यपो दधि चोच्यते १४
भारद्वाजो घृतं चैव गौतमो गोमयं तथा
आत्रेयश्चैव गोमूत्रमृषयश्च प्रकीर्तिताः १५
क्षीरं तु शुक्रदैवत्यं दधि वै सोमदैवतम्
घृतं वै रुद्रदैवत्यं गोमयं चार्कदैवतम् १६
गोमूत्रमग्निदैवत्यं पञ्चगव्याधिदेवताः
शालिपिष्ट उमादेवी रजन्यां च सरस्वती १७
श्रीदेव्यामलके चैव पार्वती दर्भतोयके
आप्यायस्व समे क्षीरं दधिक्राव्णो हि वै दधि १८
शुक्रमसि घृतं चैव गन्धद्वारेति गोमयम्
गायत्र्या चैव गोमूत्रमभिमन्त्र्य यथाक्रमम् १९
ईशानादि च सद्यान्तं पूजयेत्तु यथाक्रमम्
मध्ये क्रमेण संयोज्यं मूलमन्त्रं समुच्चरन् २०
उत्तमं द्रोणमित्युक्तं मध्यमं तु तदर्धकम्
तदर्धमधमं ज्ञेयं त्रिविधं परिकल्पयेत् २१
त्रिप्रस्थं क्षीरमित्युक्तं द्विप्रस्थं दधि चोच्यते
घृतं वै प्रस्थमेकं तु चतुष्प्रस्थं तु गोमयम् २२
षट्प्रस्थं चैव गोमूत्रमुत्तमं तु विधीयते
प्रस्थार्धं क्षीरमित्युक्तं प्रस्थं वै दधि चोच्यते २३
प्रस्थार्धं घृतमित्युक्तं द्विप्रस्थं चैव गोमयम्

त्रिप्रस्थं चैव गोमूत्रमित्येतन्मध्यमं तथा २४
प्रस्थपादं घृतं प्रोक्तं द्विपादं दधि चोच्यते
त्रिपादं क्षीरमित्युक्तं चतुष्पादं तु गोमयम् २५
षट्पादं चैव गोमूत्रमित्येतत्कन्यसं तथा
कपिलायास्तु गोमूत्रं रक्ताया गोमयं भवेत् २६
कृष्णायाः क्षीरमित्युक्तं सितायां दधि चोच्यते
धूम्राया घृतमित्युक्तं पञ्चगव्यं तु संग्रहेत् २७
सर्वं वै कपिलायास्तु नानावर्णयुजोऽथवा
गोमूत्रं श्रीपदं ज्ञेयं गोमयं रोगनाशनम् २८
क्षीरेण सर्वसिद्धिः स्याद्दध्ना पुत्रविवर्धनम्
घृतेन व्याधिनाशः स्यात्पञ्चगव्यफलं भवेत् २९
प्रातःकालेऽभिषेके तु सर्वरोगविनाशनम्
दशापराधास्तोयेन क्षीरेण शतसंख्यकम् ३०
सहस्रं क्षम्यते दध्ना घृतेनाप्ययुतं तथा
लक्षमिक्षुरसेनैव मधुना दशलक्षकम् ३१
नालिकेराम्भसा कोटिर्गन्धतोयमनन्तकम्
गव्येन पापनाशः स्यात्सर्वारिष्टविनाशनम् ३२
प्रायश्चित्तेऽद्भुते शुद्ध्यै पञ्चगव्यं विशिष्यते
ब्रह्महत्या सुरापानं स्तेयं च गुरुतल्पकम् ३३
महान्ति पातकान्यत्र तत्संयोगश्च पञ्चकम्
पञ्चपातकशुद्धिश्च पञ्चगव्यफलं भवेत् ३४
अग्रे तु पञ्चगव्यं स्यात्तदनन्तरमामृतम्
ततस्तु स्नपनं कुर्यात्फलवर्गैर्गुरूत्तमः ३५
सौवर्णं राजतं वापि ताम्रपात्रमथापि वा

अथवा मृरामयं वापि पात्रं चापि पृथक्पृथक्  ३६

इत्यजिताख्ये महातन्त्रे क्रियापादे पञ्चगव्यविधिः षडशीतितमः पटलः

## सप्ताशीतितमः पटलः

### पञ्चामृतविधिः

अतः परं प्रवक्ष्यामि पञ्चामृतविधिं शृणु
कोष्ठं पात्रं तथा मन्त्रं पूर्ववत्परिकल्पयेत्  १
शिवाग्रे स्थण्डिलं कुर्यात्स्थण्डिलं पञ्चकोष्ठकम्
कोष्ठे सर्वाणि पात्राणि पूर्ववत्परिकल्पयेत्  २
मध्ये क्षीरं तु संस्थाप्यं तत्पूर्वे दधि चोच्यते
दक्षिणे घृतमेवं तु उत्तरे मधु विन्यसेत्  ३
पश्चिमे शर्करा न्यस्या पञ्चामृतमिहोच्यते
कदलीपनसाम्राणि अग्निराक्षसमारुते  ४
ऐशान्यां नालिकेरं तु स्थापयेत्तु यथाक्रमम्
मध्ये दध्यादि संयोज्य मूलमन्त्रं समुच्चरन्  ५
अमृतीकृत्य संपूज्य धूपदीपं तु योजयेत्
क्षीरं दधि घृतं क्षौद्रं गुलं चैव तु पञ्चकम्  ६
पञ्चामृतमिति ख्यातं प्रतिप्रस्थं पृथङ्न्यसेत्
पादहीनं तु मध्यं स्यादर्धहीनं कनीयसम्  ७
मध्यादि पूर्ववन्नयस्य पूर्ववत्परिकल्पयेत्
नालिकेरस्य चूर्णं च कदलीशतसंयुतम्  ८
पादप्रस्थघृतं चैव पादप्रस्थमधु न्यसेत्
प्रस्थमात्रा शर्करा स्यात्फलपञ्चामृतं भवेत्  ९

कदलीफलशतैश्च मिश्रितं नारिकेलफलचूर्णमिश्रितम्
दशवृत्तगुलचूर्णसंयुतं मधु पादकुडुपं घृतं तथा १०
प्रस्थतैलाभिषेके तु कदलीशतसंख्यकम्
नालिकेरस्य चूर्णं च पादप्रस्थघृतं तथा ११
पादप्रस्थं मधूनि स्युः प्रस्थमात्रा तु शर्करा
फलपञ्चामृतं ज्ञेयं पञ्चामृतमथोच्यते १२
क्षीरं दधि घृतं चैव मधु चेक्षुरसस्तथा
पञ्चामृतमिति ख्यातं पादप्रस्थं च कारयेत् १३
द्विप्रस्थं क्षीरमेवोक्तं द्विप्रस्थं दधि चोच्यते
अर्धप्रस्थघृतं चैव प्रस्थमेवं तु शर्करा १४
हरिद्रामलकं पिष्टं पादप्रस्थं प्रकीर्तितम्
लिकुचा दशसंख्याश्च नारङ्गद्वयमेव च १५
चूतं पञ्चदशं ज्ञेयं दाडिमत्रयमेव च
मातुलुङ्गानि च त्रीणि गुलो रसफलैर्युतः १६
तामरत्रयमेवोक्तमेकं तु पनसं भवेत्
देवताम्रफलत्रीणि शिवप्रीतिकरं भवेत् १७
नालिकेरोदकं चैव दशसंख्याः प्रकीर्तिताः
गन्धो मृगमदश्चैव कर्पूरं कुङ्कुमं तथा १८
कस्तूरी रोचना चैव षड्गन्धं चैव कीर्तितम्
हिमसेचनसंमिश्रं यथालाभेन वाहरेत् १९
अन्नाभिषेके मन्त्रान्नं प्रतिप्रस्थं च कारयेत्
प्रतिद्रव्यं विशेषेण अष्टपुष्पं समर्चयेत् २०
यद्द्रव्यमभिषेक्तव्यं तद्द्रव्यं तु निवेदयेत्
प्रतिद्रव्यावसाने तु उपस्नानं च धूपकम् २१

पश्चादाचमनार्घ्यं च धूपदीपं तु दर्शयेत्
धारासहस्रकुम्भं च शृङ्गशङ्खाभिषेचनम्  २२
सूक्ष्मवस्त्रेण संमृज्य गन्धपुष्पैः समर्चयेत्
द्विप्रस्थतण्डुलैः पक्त्वा शुद्धान्नं तु निवेदयेत्  २३
धूपदीपं ददेच्छम्भोर्दिव्यगन्धं च लेपयेत्
सर्वैराभरणैश्चापि पुष्पमाल्यादिभिस्ततः  २४
दुकूलपट्टवस्त्राद्यैरलंकुर्यान्महेश्वरम्
यज्ञसूत्रादिभिः सर्वैः स्वप्रमाणेन धारयेत्  २५
भारेण तण्डुलानां वै महानैवेद्यमाचरेत्
प्रतिप्रस्थं विशेषेण व्यञ्जनं फलमेव हि  २६
क्रमुकं चैकमेवोक्तं नागवल्लीचतुर्दलम्
चूर्णं निष्पावमात्रं च लवङ्गद्वयमेव च  २७
एलातण्डुलसप्तभिर्जातिपत्रीफलं त्रुटिः
कर्पूरं त्रुटिमात्रं च ताम्बूले दापयेच्छिवे  २८
मुखवासमिति ख्यातं पानीयं प्रस्थमेव च
पाद्यमाचमनं चार्घ्यं धूपदीपं भ्रमेच्छिवे  २९
आरात्रिं दर्शयेच्छम्भोः सायरक्षां भ्रमेत्त्रिभिः
भस्म प्रदापयेद्धीमान्दर्पणं छत्रचामरम्  ३०
व्यजनं तालवृन्तं वा दर्शयेद्देशिकोत्तमः
पाद्यमाचमनीयार्घ्यमन्तरान्तरमेव च  ३१
वेदोक्तेनैव मन्त्रेण मन्त्रपुष्पं प्रदापयेत्
चुलुकोदकमेवं स्यात्स्वात्मनोऽर्पणमेव च  ३२
शिवमन्त्रं जपेत्पश्चाद्यथाशक्त्या विशेषतः
स्तोत्रं गीतं च नृत्तं च यथालाभेन वा भवेत्  ३३

उक्तेषु वस्तुकेष्वेषु न्यूने वाप्यधिकेऽपि वा
न त्यजेन्नान्यथा कुर्याद्यथासंभवमाचरेत् ३४
इत्यजिताख्ये महातन्त्रे क्रियापादे पञ्चामृतविधिः सप्ताशीतितमः पटलः

## अष्टाशीतितमः पटलः

### स्नपनविधिः

नित्ये नैमित्तिके काम्ये मङ्गले मन्त्रसाधने
राज्ञां त्रिजन्मनक्षत्रे ज्वरक्लेशादिपीडने १
राजपत्नीत्रिजन्मर्क्षे राज्ञां मरणकालके
राज्ञां विजयनक्षत्रे अभिषेकेऽसुखेऽपि वा २
तच्चन्द्राष्टमनक्षत्रे राजवैनाशिकोडुपे
दीक्षान्ते च प्रतिष्ठान्ते प्रोक्षणे पुरदाहके ३
अतिवृष्ट्यामनावृष्टौ दुर्भिक्षे दुर्निमित्तके
भूमिकम्पे महारोगे शत्रुभिः पीडनेऽपि च ४
यागान्ते सौरवारे च कुजपुत्रदिनेऽपि च
उत्पाते च महोत्पाते स्वनक्षत्रे महोत्सवे ५
अयने विषुवे चैव ग्रहणे स्थापनादिके
उत्सवे च पवित्राख्ये दमनारोपणेऽपि च ६
कृत्तिकादीपनक्षत्रे अन्यस्मिन्मासऋक्षके
अष्टम्यां वा चतुर्दश्यां पञ्चदश्यां च पक्षयोः ७
संक्रान्तौ पुण्यदिवसे षडशीतिमुखेऽपि च
सिनीवाल्यां कुहौ चैव घृतस्नानोत्तरे तथा ८
घृतकम्बललेपान्ते जीर्णोद्धारावसानके

परचक्रभयोत्पन्ने कृषिवाणिज्ययोस्तथा ९
विद्यारम्भे विवाहे च युद्धारम्भे त्ववग्रहे
शताभिषेककाले च गवां रोगप्रदर्शने १०
गजाश्वरोगसंभूते पुरारम्भे च जन्मनि
यज्ञारम्भे सुयोगे च तथा यात्रावसानके ११
नवतोयागमने च नटेशभ्रमणान्तके
मार्गशीर्षे च मासे तु आर्द्रायां तु विशेषतः १२
प्रायश्चित्तेषु कार्येषु नवनैवेद्यकर्मणि
जनकल्याणकाले च नराणां मरणर्द्धके १३
विशेषपूजाकाले च भक्तानामुत्सवेऽपि च
देवभ्रमणकालान्ते मृगयात्रावसानके १४
एवमादिषु कालेषु स्नापयेत्स्नपनोक्तवत्
कुर्यात्प्रतिदिनं वापि त्रिसंध्यायां गुरूत्तमः १५
संध्याद्वये वा चैकस्यां स्नपनं कारयेच्छिवे
प्रागुक्तवर्त्मना कश्चिद्विशेषस्तत्र कथ्यते १६
अष्टोत्तरशतैर्वापि एकाशीतिघटैस्तु वा
पञ्चाशत्पञ्चविंशैश्च षोडशैर्नवभिस्तथा १७
नवकादिशताष्टान्तैः स्नापयेत्प्रतिसंधिषु
कुम्भेनैकेन वा व्योमसंख्येन कलशेन वा १८
प्रागुक्तद्रव्यसंयुक्तं वर्धनीसहितेन च
कालं भिन्नं च सुषिरं भेदैश्छेदैश्च लीनकम् १९
निर्दग्धं च पुराणं च वर्जयेत्तान्प्रयत्नतः
पक्वबिम्बोपमाः सर्वे क्षालयेत्तान्विशेषतः २०
कलशान्वेष्टयेद् द्वित्रिव्योमसूत्रैः क्रमेण तु

अथवा व्योमसूत्रेण त्रितयं परिवेष्टयेत् २१
शिवकुम्भे च वर्धन्यामेकद्वित्रियवान्तरम्
अन्येषु कलशेष्वेवं गवाक्षसदृशान्तरम् २२
ततः सर्वात्मनावेष्ट्य सूत्रेण स्वस्तिकेऽपि च
सूत्रैरावेष्टितान्कुम्भान्स्थापयेच्छत्रुबन्धने २३
तथैवावेष्टितान्स्वल्पतन्तुना निष्कृतौ मृतौ
मण्डपस्योत्तरे धीमान्दर्भैश्चैव परिस्तरेत् २४
सूत्रेण वेष्टयित्वा तु क्षालयित्वाधिवासयेत्
अधोमुखांस्तु कलशान्स्थापयेत्तु कुशोपरि २५
प्रोक्षयेद्धृदयेनैव कलशोन्मीलनं कुरु
सर्वालंकारसंयुक्तं ततः स्नपनमारभेत् २६
प्रथमं शोधयेद्भूमिं द्वितीयमनुलेपनम्
तृतीयः सूत्रविन्यासश्चतुर्थं स्थण्डिलं भवेत् २७
पञ्चमः कलशन्यासः कूर्चन्यासस्तु षष्ठकः
सप्तमो द्रव्यविन्यासो देवन्यासस्तथाष्टमः २८
पिधानं नवमं प्रोक्तं दशमं वस्त्रवेष्टनम्
एकादशं गन्धपुष्पं द्वादशं धूपदीपकम् २९
मुद्रादानं ततः प्रोक्तं पुण्याहं तु चतुर्दशम्
घटोद्धारः पञ्चदशः षोडशे स्नापयेच्छिवम् ३०
अस्त्रेण शोधयेद्भूमिं वामदेवेन लेपयेत्
सूत्रन्यासमघोरेण स्थण्डिलं पुरुषेण तु ३१
हृदयेन न्यसेत्कुम्भमीशानेन कुशं न्यसेत्
मूलेन विन्यसेद्द्रव्यान्वामेनावाहयेत्सुरान् ३२
शरावान्बीजमुख्येन वस्त्राणि हृदयेन तु

ईशानेनैव गन्धादीन्धूपादीन्कवचेन तु ३३
दद्यान्मुद्रामघोरेण वाचयेत्पवमानकम्
प्रोक्षयेत्तु विशेषेण पुण्याहं तु यथाविधि ३४
प्रणवेन घटोद्धारं महाव्योमेति मन्त्रतः
पञ्चब्रह्मषडङ्गैश्च स्नापयेत्परमेश्वरम् ३५
नवसंख्यघटस्नानमादौ वक्ष्ये गुरो शृणु
प्रागग्रमुदगग्रं च युगसूत्रं प्रदापयेत् ३६
स्थण्डिलं कल्पयेत्तस्मिञ्शालिभिर्विमलैः शुभैः
तिलतण्डुललाजांश्च तिर्यग्दर्भान्परिस्तरेत् ३७
कलशानि ततो ग्राह्य स्थापयेदादिशैवकः
सौवर्णं राजतं वापि तथा ताम्रमयं तु वा ३८
शङ्खैर्वा शुक्तिकैर्वापि गवां शृङ्गैस्तथापि वा
अथवा मृण्मयैर्वापि सर्वलक्षणसंयुतैः ३९
सुपक्वैः सुस्वरैः स्निग्धैर्बिम्बप्रभासमन्वितैः
एतैर्लक्षणसंयुक्तैः स्नापयेत्परमेश्वरम् ४०
उत्तमं द्रोणसंपूर्णं मध्यमं तु तदर्धकम्
अधमं त्वाढकं प्रोक्तं सर्वेषामाढकं तु वा ४१
शङ्खशुक्तिकशृङ्गाणां स्वप्रमाणेन पूरयेत्
ततो मज्जनशालायां जलद्रोणीष्वनेकशः ४२
वस्त्रपूतं सुशुद्धाम्बु नीत्वा नद्या गृहीतकम्
वरालत्रुटिकर्पूरोशीरादिचूर्णमिश्रितम् ४३
पञ्चब्रह्मशिवाङ्गैश्च मूलमन्त्राभिमन्त्रितम्
शिवतोयमिति ख्यातं सुगन्धिकुसुमान्वितम् ४४
साधयित्वा पुरा शीतं कलशान् साधयेत्ततः

श्रेष्ठान्तराधमाँल्लोहैर्मृद्भिर्वा कलशान् कुरु ४५
वेदाग्निपत्तप्रस्थैस्ते पूर्णाः श्रेष्ठान्तराधमाः
शिवकुम्भं तथोद्धृत्य पूरयेत्तु शिवाम्भसा ४६
कर्णिकायां न्यसेत्कुम्भं पञ्चरत्नसमन्वितम्
हिरण्यं वापि निक्षिप्य नववस्त्रेण वेष्टयेत् ४७
कूर्चं न्यस्त्वान्तरे तस्य न्यस्त्वा कूटाक्षरं ततः
वर्धनीमुत्तरे स्थाप्य वस्त्रहेमादिसंयुतम् ४८
परितोऽष्टघटान् स्थाप्य विद्येशानभिमन्त्रयेत्
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च गव्यकम् ४९
लाजान् सक्तुं क्रमेणैव शक्राद्यष्टघटे न्यसेत्
आसनं संप्रकल्प्यास्मिन् कुम्भे मूर्तिमनुं न्यसेत् ५०
ब्रह्मभिः सकलीकृत्य तत्कलास्तत्र विन्यसेत्
न्यस्त्वा विद्यातनुं मूर्तौ रूपं ध्यात्वा शिवं न्यसेत् ५१
चतुर्भुजं त्रिनेत्रं च चन्द्रार्धकृतशेखरम्
जटामकुटसंयुक्तं भस्मोद्धूलितविग्रहम् ५२
कृष्णापरशुसंयुक्तं पद्मपीठोपरि स्थितम्
ध्यात्वा हृदा शिवं देवं शिवकुम्भे तु पूजयेत् ५३
स्थापनादींश्च पाद्यादि कृत्वा दद्याद्धृदा गुरुः
गन्धं पुष्पं च धूपं च दीपमर्घं विधाय च ५४
प्रदर्श्य लिङ्गमुद्रां च कवचेनावकुण्ठयेत्
तस्यां मनोन्मनीं ध्यायेद् द्विभुजां च द्विलोचनाम्
नीलालकसमायुक्तां दुकूलवसनान्विताम् ५५
उत्पलं दक्षिणे हस्ते धृत्वा वामे प्रसारितम् ५६
करण्डमकुटोपेतां किंचित्प्रहसिताननाम्

सुस्थितं देवपार्श्वे तु अन्यत्कुञ्चितमम्बुजे ५७
गणाम्बिकेति मन्त्रेण ध्यात्वा गन्धादिभिर्यजेत्
यष्ट्वा गौरीं च वर्धन्यां योनिमुद्रां प्रदर्शयेत् ५८
वर्मणैवावकुण्ठ्याथ रुद्रानावरणस्थितान्
पूर्वोक्तविधिना वापि क्रमेणावाह्य पूजयेत्
अनन्तादिशिखण्ड्यन्तं तेषु गन्धादिभिर्यजेत् ५९
इत्यजिताख्ये महातन्त्रे क्रियापादे अष्टाशीतितमः स्नपनविधिपटलः

## एकोननवतितमः पटलः
## कलासूत्रयागशालाकुण्डविधिः

कलासूत्रं प्रवक्ष्यामि पञ्चदशपदक्रमम्
पूर्वास्यैश्चापि सौम्यास्यैः कलासूत्रैः प्रकल्पितम् १
पञ्चविंशत्युत्तरैश्च मण्डितं द्विशतैः पदैः
मध्ये शिवं पदं प्रोक्तं शक्तेश्चापि तथोपरि २
नादं तद्बाह्यकं प्रोक्तं तदूर्ध्वं बिन्दुसंज्ञकम्
सादाशिवं ततः प्रोक्तं माहेश्वरमतः परम् ३
रौद्रं तस्योर्ध्वके चैव बाह्ये विष्णुपदं क्रमात्
मध्ये नवपदां वेदीं चतुष्कोणेषु वै तथा ४
निखनेच्चतुरः स्तम्भान् प्रधानं च शिवे न्यसेत्
साष्टविद्येश्वरान्कुम्भान्न्यसेच्छक्तिपदे तथा ५
साष्टमङ्गलकान्नादे बिन्दुप्रान्ते च संन्यसेत्
पूजाद्रव्याणि सर्वाणि सदाशिवपदे न्यसेत् ६
कुण्डाणि परितः कुर्यान्महेशस्य पदे क्रमात्
बहिः संचरणं प्रोक्तं रुद्रस्यापि पदे तथा ७

विष्णोः पदे तथा भित्तिं पदार्धेन प्रकल्पयेत्
नन्द्यादीनां च कुम्भांस्तु परितो भित्तिमस्तके ८
द्वारार्थं त्रिपदं त्यक्त्वा परितो दिग्विदिक्षु च
यागशाला त्वियं प्रोक्ता कुण्डलक्षणकं शृणु ९
उत्तमं सप्तविंशत्या चतुर्विंशति मध्यमम्
अधमं षोडशाङ्गल्यं प्रतिष्ठादौ प्रकल्पयेत् १०
षोडशाङ्गुलकान्नयूनं प्रतिष्ठादौ विवर्जयेत्
षोडशाङ्गुलमारभ्याप्यष्टहस्तावधि क्रमात् ११
अष्टहस्तात्परं चैव न कर्तव्यं गुरूत्तम
षोडशाङ्गुलकन्यूनं प्रायश्चित्तेषु कल्पयेत् १२
हस्तादि षोडशान्तं च मेखला च नवाङ्गुला
प्रागुदक् त्रित्रिसूत्रं च समन्ताच्चतुरश्रकम् १३
चतुरश्रं पूर्वभागे आग्नेय्यां तु भगाकृति
क्षेत्रे पञ्चविभागे च एकभागं बहिर्न्यसेत् १४
कोणार्धार्धस्य मध्ये च क्षेत्रार्धाद् भ्रामयेत्ततः
क्षेत्रार्धादधिकं यावद् भ्रामयेच्च द्विपार्श्वयोः १५
पञ्चमान्तं बहिर्न्यस्त्वा भवेदश्वत्थपत्रवत्
उत्तराग्रमिति ख्यातं योनिमाग्नेयकोणके १६
भूतभागकृते क्षेत्रे पार्श्वे चैकैकभागकम्
वृद्धिं कृत्वा विशेषेण क्षेत्रमध्यं समाचरेत् १७
पार्श्वसूत्रान्तके चैव भ्रामयेदर्धचन्द्रकम्
खण्डं दक्षिणभागे चाप्यखण्डमुत्तराग्रकम् १८
प्रतिष्ठादौ प्रकर्तव्यं दीक्षायां च सुकर्मणि
दक्षिणाग्रं प्रकर्तव्यं पादमुत्तरतो न्यसेत् १९

मोहेन नान्यथा कार्यं राष्ट्रक्षोभो न संशयः
क्षेत्रं च सप्तधा भज्य चैकैकं पार्श्वके न्यसेत् २०
क्षेत्रस्य सौम्यबाह्ये तु एकभागं च विन्यसेत्
पार्श्वयोर्द्विकयोश्चापि रेखयोर्मेलनं तु यत् २१
त्रिकोणमिति विख्यातमुत्तराग्रं प्रकल्पयेत्
प्रतिष्ठादौ प्रकर्तव्यं नैव पूर्वाग्रमेव च २२
क्षेत्रं तु वसुधा भज्य कर्णान्ते त्वेकभागकम्
त्यक्त्वा क्षेत्रस्य मध्ये तु कर्णान्तं भ्रामयेत्क्रमात् २३
वर्तुलं चेति विख्यातं क्षेत्रं वेदांशकं कुरु
एकांशं च द्विपार्श्वे तु लाञ्छितं तद्विशेषतः २४
रेखाद्वयं समालिख्य भागार्धं क्षेत्रमध्यके
षड्रेखामेलनं कुर्यात्षडश्रं चेति कीर्तितम् २५
पूर्वपश्चिमकाग्रं च कल्पयेत्कल्पवित्तमः
वृत्तं पूर्वोक्तवत्कृत्वा कर्णिकां च त्रियङ्गुलाम् २६
कर्णिकाया अधोभागे तथाधोमेखलोपरि
रसाङ्गुलं दीर्घमग्रे तथा चैकाङ्गुलं मतम् २७
उन्नतं चेति विख्यातं पञ्चाङ्गुलमथापि वा
दलाष्टषोडशं तत्र पद्मकुण्डमिति स्मृतम् २८
क्षेत्रं च वसुधा भज्य एकैकं पार्श्वयोर्न्यसेत्
चतुरश्रं प्रकल्प्याथ क्षेत्रबाह्यैकभागकम् २९
क्षेत्रमध्ये समन्तात्तु चतुश्चिह्नं विधाय च
चतुष्टयं तथा रेखामेलनं न्यस्य चाश्रकम् ३०
अष्टाश्रमिति विख्यातमष्टकोणं च कीर्तितम्
इन्द्रईशानयोर्मध्ये वृत्तकुण्डं प्रधानकम् ३१

अर्धचन्द्रं त्रिकोणं च मारणे द्वेषणे भवेत्
प्रधानवर्जितं चैव मोहेनापि कृतं तु चेत् ३२
राजराष्ट्रविनाशश्च कर्ता भोक्ता विनश्यति
तस्मात्सर्वप्रयत्नेन उक्तवत्परिकल्पयेत् ३३

इत्यजिताख्ये महातन्त्रे क्रियापादे कलासूत्रयागशालाकुण्डविधिः
एकोननवतितमः पटलः

## नवतितमः पटलः

### स्थानशुद्धिः

स्थानशुद्धिं ततो वक्ष्ये शृणुष्व कमलापते
उदक्या सूतकी कुण्डो व्रात्यश्च पुल्कसोऽपि च १
नापितो रजकश्चैव शुनको रासभस्तथा
कुक्कुटः श्येनपक्षी च गृध्रश्चैते च मन्दिरम् २
प्रविष्टाश्चेत्प्रमादात्तु स्थानशुद्धिं परा चरेत्
प्रागुदीरितमार्गेण संप्रोक्षणमथाचरेत् ३
आलयस्य नवीनस्य शुद्ध्यर्थं च यथाविधि
खननोद्धारदहनं पूरणं गोनिवासनम् ४
विप्रोच्छिष्टं च गव्यं च वेद इत्यष्ट शुद्धयः
प्रतिकर्मणामेतेषां विधिरेवाधुनोच्यते ५
खातान्खनेत्तन्मन्त्रेण खननं तालमात्रतः
प्रासादस्य चतुर्दिक्षु कृत्वा तत्रत्यमृत्तिकाम् ६
मृत्तिकेहन मन्त्रेण ग्राहयेदवटात्ततः
साक्षात्पवित्रमन्त्रेण दर्भान्न्यस्त्वा दहेत्ततः ७
पुरुषेण तु मन्त्रेण मृदा वल्मीकजेन च

आपूर्यमाणं रजसा गर्तं च पूरयेद्गुरुः ८
गोष्पदेषु सवत्सां गां गोपतिं चानयेद्गुरुः
तद्गायत्र्या विधानेन पूजां कुर्यादनन्तरम् ९
कारयेदङ्गपूजां तु ज्ञात्वा चाङ्गाधिदेवताः
शृङ्गाग्रयोः सर्वतीर्थं जङ्गमस्थावराणि च १०
शिरोमध्ये महादेवो ललाटे गणनायकः
कण्ठे चात्मा नासिकायां भूरुहाश्च सरीसृपाः ११
अश्विनीदेवते श्रुत्योर्नेत्रयोरिन्द्र एव च
मरुतो दन्तदेशेषु जिह्वायां वरुणः स्मृतः १२
हुंकारे भारती चैव गण्डयोर्यमराक्षसौ
संध्ये चोष्ठद्वयोश्चैव ग्रीवायां तारकाधिपः १३
खुरमध्ये च गन्धर्वाः खुराग्रे पन्नगास्ततः
तस्य पश्चादप्सरश्च दशनाडीषु रुद्रकाः १४
संधौ प्राणादि वायुश्च श्रोण्यां च पितृदेवताः
उरस्युमा रमापाने यमुना गोमये ततः १५
आदित्यरश्मयो वाले मूत्रे देवतरङ्गिणी
रोमाग्रे ऋषयश्चैव तुन्दे विश्वंभरा ततः १६
पयोधरे चतुःसिंधुस्तेनैव मनुना ततः
अभिमंत्र्य तृणान्यन्नं दत्त्वाथ गोकुलं हरे १७
त्रिरात्रमेकरात्रं वा वासं कृत्वा ततः परम्
विप्रोच्छिष्टं च वक्ष्यामि शृणुष्व कमलापते १८
शिवभक्तान्दयासक्तान् द्विजानाहूय पण्डितान्
स्नापयित्वा गन्धतैलैः पश्चाद्वस्त्रादिकं ददेत् १९
शिवाग्रे मण्डपं गत्वा भूसुरैः सह देशिकः

सकलीकृत्य मतिमान् विघ्नेशं पूजयेत्ततः २०
पुरायाहं वाचयित्वाथ तिलतराडुलशालिभिः
स्थरिडलं कल्पयित्वा च नलिनं तत्र संलिखेत् २१
सदाशिवं समभ्यर्च्य साङ्गं सावरणं हरे
शिवमन्त्रं शतं जप्त्वा सकृच्च संहितां जपेत् २२
ब्रह्मसूक्तं विष्णुसूक्तं रुद्रसूक्तमतः परम्
घृतसूक्तं पावमानं श्रीसूक्तं नरसूक्तकम् २३
भूसूक्तं पञ्चशान्तिं च घोषशान्तिमतः परम्
एवं क्रमात्सकृज्जप्त्वा पश्चाद्धोमं समाचरेत् २४
मराडपस्य पुरोभागे कारयेल्लक्षणान्वितम्
कुराडं वा स्थरिडलं वापि तत्राग्निं जनयेद्गुरुः २५
तत्र देवं समभ्यर्च्य तन्मन्त्रेण हुनेच्छतम्
दशांशं संहितां हुत्वा हुनेदेकादिमन्त्रतः २६
सर्वस्मेत्यन्तकैर्हुत्वा होमशेषं समापयेत्
ततो विप्रान्महाभागाञ्शिवनामसहस्रकैः २७
अखरिडतैर्बिल्वपत्रैः पूजयेद्देशिकोत्तमः
साज्यं हि व्यञ्जनाद्युक्तमोदनं दापयेत्ततः २८
तदन्ते दक्षिणां दद्यात्ताम्बूलैः सह परिडतः
विप्रोच्छिष्टमिति प्रोक्तं गव्यशुद्धिमथ शृणु २९
पञ्चगव्यं च संस्थाप्य यथोक्तविधिना तथा
शुद्धैरुक्थेति मन्त्रेण आलयं प्रोक्षयेद्गुरुः ३०
वेदशुद्धिमथो वक्ष्ये शृणुष्व गरुडाधिप
ब्रह्मस्थानादिषष्ठाङ्घ्रिमराटपे वेदमन्त्रतः ३१
ऋग्वेदादि चतुर्दिक्षु जपेयुर्ब्राह्मणाः क्रमात्

तदन्ते गन्धपुष्पादीन् ब्राह्मणानां प्रदापयेत्  ३२
एवं चतुर्विधां शुद्धिं त्रिदिनं कारयेद्बुधः
अथवा वारमेकं वा कर्तव्यं कमलापते  ३३
इत्यजिताख्ये महातन्त्रे क्रियापादे नवतितमः स्थानशुद्धिपटलः

## एकनवतितमः पटलः
## तीर्थोत्सवः

अतः परं प्रवक्ष्यामि तीर्थोत्सवविधिक्रमम्
सर्वलोकोपकारार्थं सारूप्यपददायकम्  १
नृपराष्ट्रादिरक्षार्थं सर्वेषां कामसिद्धिदम्
ब्रह्महत्यादिपापघ्नं सर्वदोषनिबर्हणम्  २
आयुरारोग्यमैश्वर्यपुत्रराज्यप्रदायकम्
अयने विषुवे क्रान्तौ ग्रहणे चन्द्रसूर्ययोः  ३
अमायां पौर्णिमायां च वर्षमासान्त्यकेऽपि च
वारे तिथौ च नक्षत्रे चान्यकाले शुभे दिने  ४
षष्ट्यष्टम्योश्चतुर्दश्यामार्द्रायां पुष्यऋक्षके
अयनादिषु कालेषु शिवस्योत्सवमाचरेत्  ५
नवाहे वाथ सप्ताहे पञ्चाहे त्रिदिनेऽपि वा
एकाहे वाथ कर्तव्यं तीर्थोत्सवं सुसंज्ञकम्  ६
आरोहाद्यवरोहान्तमुत्तमं चेति कीर्तितम्
आरोहणं विना यत्तु मध्यमं चेति कीर्तितम्  ७
तीर्थं वाथ प्रकुर्वीत कन्यसं तत्प्रकीर्तितम्
सर्वमासेषु चार्द्रायामुत्सवं तु विधीयते  ८
मृगर्क्षे पुष्यनक्षत्रे पौर्णमास्यां विशेषतः

पुष्यर्क्षे केवलं शम्भोः स्नपनं सम्यगाचरेत् ९
पर्वयुक्ते वियुक्ते वा पुष्ये तीर्थं विधानतः
तीर्थं पूर्वोक्तवत्कृत्वा मन्त्रान्नं तु निवेदयेत् १०
अलंकृत्याथ संपूज्य प्रभूतं हविषं ददेत्
वृषयाने समारोप्य नानावाद्यसमन्वितम् ११
छत्रचामरसंयुक्तं गाननाट्यसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं गुरुः १२
अवरोप्य वृषाद्यानात्स्नपनं सम्यगाचरेत्
मूल बेरे विशेषेण स्नपनं शान्तिहोमकम् १३

इत्यजिताख्ये महातन्त्रे क्रियापादे तीर्थोत्सवविधिः एकनवतितमः पटलः

## द्विनवतितमः पटलः

## सप्तकन्यास्थापनम्

प्रथमा देवकन्या च द्वितीया नागकन्यका
तृतीयकन्या गन्धर्वा चतुर्थी ब्राह्मकन्यका १
पञ्चमी राजकन्या च षष्ठी तु वैश्यकन्यका
सप्तमी शूद्रकन्या च सप्तकन्याः प्रकीर्तिताः २
भूलोके सप्तकन्यानामन्योन्यं स्नेहसंभवात्
वनमध्ये जले तीरे आरामे वृक्षमूलके ३
वासयन्ति विलासार्थं यक्षादिपरिचारकैः
आलये तु प्रतिष्ठाप्य पूजयेत्तु विधानतः ४
ब्राह्मणादिकवर्णानां वाञ्छितार्थं फलं ददुः
कन्यास्मरणमात्रेण ग्रहरोगनिवारणम् ५

कन्यकास्थापनं वक्ष्ये आगमोक्तविधानतः
मण्डपं पूर्ववत्कृत्वा वेदिकुण्डसमन्वितम् ६
अङ्कुरार्पणपूर्वं चाभिषेकान्तं यथाक्रमम्
सर्वं च पूर्ववत्कुर्याद्विशेषस्त्वधुनोच्यते ७
वेदिमध्ये देवकन्यां नागकन्यां च पूर्वके
प्रत्यग्गन्धर्वकन्यां च ब्राह्मकन्यां च दक्षिणे ८
उत्तरे राजकन्यां च नैर्ऋत्यां वैश्यकन्यकाम्
वायव्यां शूद्रकन्यां च ऐशान्यां तु गणेश्वरम् ९
आग्नेय्यामेव शास्तारं पूजयेत्पूर्वमार्गतः
त्रिखण्डं कल्पयेत्तत्त्वमात्मविद्याशिवात्मकम् १०
आत्मानमन्तरात्मानं परमात्मानमेव हि
तत्त्वानामधिपान्न्यस्त्वा मूर्तिमूर्तीश्वरान्न्यसेत् ११
क्ष्मादिमूर्तीन्न्यसेत्पूर्वमिन्द्रादिमूर्तिपांस्तथा
पञ्चपक्षे न्यसेद्विद्वान्पृथिव्यादिकमूर्तिकाः १२
निवृत्त्याद्याः पञ्चकला मूर्तिपास्तत्र विन्यसेत्
सर्वं पूर्वोक्तवत्कुर्यादग्नौ संतर्प्य पूर्ववत् १३
सप्तकन्यकाध्यानम्
पीताभां पीतवस्त्रां च पीताभरणभूषिताम्
पद्मलम्बितहस्तां च तां ध्यायेद्देवकन्यकाम् १४
श्वेताभां श्वेतवस्त्रां च श्वेताभरणभूषिताम्
किरीटमकुटोपेतां नागकन्यां च भावयेत् १५
श्यामाभां श्यामवस्त्रां च श्यामाभरणभूषिताम्
पद्मासनस्थितां ध्यायेदेवं गन्धर्वकन्यकाम् १६
शुक्लवर्णां शुक्लवस्त्रां शुक्लाभरणभूषिताम्

तुङ्गस्तनां पद्मपीठां तां ध्यायेद्ब्राह्मकन्यकाम्  १७
रक्तवर्णां रक्तवस्त्रां रत्नाभरणभूषिताम्
करण्डमकुटोपेतां ध्यायेद्वै राजकन्यकाम्  १८
स्वर्णाभां स्वर्णवस्त्रां च स्वर्णाभरणभूषिताम्
स्वर्णकुण्डलधारिणीं वैश्यकन्यां च भावयेत्  १९
नीलाभां नीलवस्त्रां च नीलाभरणभूषिताम्
नीलालकसुवेण्याभां शूद्रकन्यां च भावयेत्  २०

इत्यजिताख्ये महातन्त्रे क्रियापादे द्विनवतितमः सप्तकन्यास्थापन पटलः

## त्रिनवतितमः पटलः

## कन्यकापरमेश्वरीस्थापनम्

प्रतिमालक्षणं वक्ष्ये समाहितमनाः शृणु
कन्यकापरमेश्वर्या महिताया महात्मभिः  १
रक्तां पद्मसुधारिणीं शशिमुखीं दिव्याम्बरालंकृतां
वामे लम्बकरां जटामकुटकां सर्वाङ्गभूषोज्ज्वलाम्
विद्युत्कोटिसमप्रभां समपदां पद्मासने संस्थितां
ध्यायेच्छंभ्वपदानसक्तमनसां कन्यां परामीश्वरीम्  २
यद्वा
द्विनेत्रां द्विभुजां चैव द्विपादाञ्चितनूपुराम्
दाडिमीपुष्पसंकाशां पद्मपीठे स्थिरासनाम्  ३
पादुकालक्तसंयुक्तां विद्युत्कोटिसमप्रभाम्
शिरश्चक्रजटाचूडां सर्वलक्षणसंयुताम्  ४
दिव्याभरणभूषाढ्यां दिव्यगन्धानुलेपनाम्

दिव्यमाल्याम्बरयुतां सर्वावयवशोभिनीम् ५
चन्द्रकान्तिस्मितां दान्तां पूर्णचन्द्रनिभाननाम्
तत्त्वत्रयसुविज्ञानां सर्वशास्त्रार्थसंविदाम् ६
द्वात्रिंशल्लक्षणैर्युक्तां षट्त्रिंशत्तत्त्वसंयुताम्
अष्टाङ्गयोगसंयुक्तां त्रैलोक्यसमदर्शिनीम् ७
वाञ्छितार्थान्प्रसीदन्तीं वैश्यानां कुलदेवताम्
त्रिमूर्तिभिर्दत्तवरां सर्वसिद्धिप्रदायिकाम् ८
कन्यकापरमेश्वर्या नाम लोके प्रसिद्धितम्
सव्यहस्ते पद्मधरा वामहस्ते च लम्बनम् ९
सर्वलोकेष्विति ख्याता कन्यकापरमेश्वरी
अष्टकन्यासमायुक्ता तत्तन्नाम तु कथ्यते १०
गगनी घाननी वैश्वी सजीवी पितृरूपिणी
सोमसूर्यवती हृष्टिरष्टशक्तिर्यथाक्रमम् ११
अष्टकन्याः समरूपा द्विभुजाश्च द्विनेत्रकाः
अभयालम्बितहस्ताः पूर्वादिपरितः स्थिताः १२
सर्वलक्षणसंयुक्ताः सर्वाभरणभूषिताः
विचित्रवर्णशोभाढ्याः कन्यकाः परिचारिकाः १३
एतादृक्समरूपा च कन्यकापरमेश्वरी
कन्यकापरमेश्वर्याः स्थापनं वक्ष्यतेऽधुना १४
सर्वमासेषु कर्तव्यं शुक्लपक्षे शुभे दिने
अङ्कुरार्पणपूर्वं तु पालिका नव पञ्च वा १५
रत्नन्यासं ततः कुर्यान्नवकोष्ठेषु विन्यसेत्
कोष्ठपूजासमायुक्तं वैडूर्यादि क्रमाद्बुधः १६
सौवर्णं रजतं ताम्रं स्थापयेन्नवकोष्ठके

आवाहाद्युपचारैस्तु पायसादीन्बलिं ददेत् १७
नयनोन्मीलनं कृत्वा पुण्याहं वाचयेद्गुरुः
कांस्यताम्रादिपात्रेषु घृतक्षौद्रं न्यसेत्क्रमात् १८
हेमसूचीहेमचूर्वाः कोट्टलायुधनिर्मिताः
कलशस्थापनं कृत्वा पूर्वोक्तविधिना सह १९
प्रच्छन्नपटमाहृत्य दिग्दर्शनं यथाक्रमम्
दर्पणं दर्शनं कृत्वा कन्यादर्शनमेव च २०
गोब्राह्मणजनांश्चापि दर्शयेद्धोमकर्मणि
नेत्रमन्त्रं समुच्चार्य शतमष्टोत्तरं हुनेत् २१
अग्निमन्त्रेण संयुक्तं सूर्यसोमाभिमन्त्रयेत्
प्रतिमां शुद्धतोयेन पञ्चगव्यैश्च सेचयेत् २२
काषायफलपुष्पैश्च रत्नस्वर्णोदकैः कुशैः
गन्धतोयाभिषेकेन शुद्धतोयाभिषेचनम् २३
सर्वालंकारसंयुक्तं ग्रामप्रदक्षिणं कुरु
जलाधिवासनं कुर्याद्यामं यामर्धमेव वा २४
गङ्गादिसर्वनद्यादिविनियोगं विशेषतः
गुडलवणतीर्थे च वासयेदवभृथं कुरु २५
उद्धृत्य यागाशालां च प्रविशेत्स्नानमाचरेत्
षोडशस्तम्भसंयुक्तं मध्यवेदिं प्रकल्पयेत् २६
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
योनिकुण्डमथैशान्यं पूर्वोक्तविधिना कुरु २७
सौरपूजां समारभ्य पूर्वोक्तविधिपूर्वकम्
द्वारशक्तेर्वर्धनीषु अष्टशक्तीस्तु पूजयेत् २८
जया च विजया चैव योगिनी मोहिनी तथा

माधवी मालिनी चैव भोगी भोगवती तथा २९
द्वारशक्तीस्तु संपूज्य गन्धपुष्पाक्षतादिभिः
नैर्ऋते वास्तुपूजां च लक्ष्म्याः पश्चिमपूजनम् ३०
वायव्ये विघ्नराजं च ऐशान्यां गुरुपूजनम्
दशायुधानि संपाद्य तत्तत्स्थानेषु पूजयेत् ३१
अस्त्रवर्धनीं संपूज्य ईशाने स्थिरपूजनम्
यवतण्डुलदर्भैश्च अष्टद्रोणैश्च शालिभिः ३२
वेदिमध्ये तु संस्थाप्य अण्डजाद्युपरि न्यसेत्
अण्डजं मुण्डजं चर्म रक्तवस्त्रं च कम्बलम् ३३
तदूर्ध्वे प्राक्शिरः स्थाप्य वक्त्रेण शाययेत्तु ताम्
शिरःस्थाने पूर्णकुम्भं स्थापयेद्वर्धनीं घटान् ३४
शक्त्यष्टकपरिवृतान् वेदिकोपरि संस्थितान्
आवाहनादि संपूज्य धूपदीपोपचारकैः ३५
गजं कुम्भं ध्वजं दीपं चामरं शङ्खपद्मकम्
स्वस्तिकं च समायुक्तमष्टमङ्गलमर्चयेत् ३६
हेमप्रतिसरं बद्ध्वा रक्षामन्त्रपुरःसरम्
शान्तिकुम्भाम्भसा प्रोक्ष्य बिम्बरक्षावकुण्ठनम् ३७
त्रिखण्डं पूजयेत्तत्र आत्मविद्याशिवात्मकम्
आत्मानमन्तरात्मानं परमात्मानं विन्यसेत् ३८
चतुर्विंशतितत्त्वानि विन्यसेद्बिम्बमध्यमे
खण्डं प्रति विशेषेण मूर्तिमूर्तीश्वरीर्यजेत् ३९
मूर्तिमूर्तीश्वरीन्र्यस्त्वा होमयेत्तु विशेषतः
अग्निकार्योक्तमार्गेण दीपनान्तं समाचरेत् ४०
तिलतण्डुलमुद्गं च लाजं माषं च होमयेत्

गोधूमसर्षपं क्षीरं गुलं क्षौद्रं फलं तथा ४१
नारिकेलं घृतं चैव मूलमन्त्रैश्च होमयेत्
शतं वाथ सहस्रं व होमयेद् देशिकोत्तमः ४२
प्रायश्चित्तं ततो हुत्वा पूर्णाहुतिमथाचरेत्
रात्रौ जागरणं कृत्वा प्रभाते स्नानमाचरेत् ४३
मण्डपं पूर्ववत्पूज्य होमयेत्तु यथाक्रमम्
नवग्रहादिहोमं च प्रायश्चित्तं विशेषतः ४४
बिम्बमुद्धृत्य संपूज्य गन्धपुष्पाद्यलंकृतम्
ग्रामप्रदक्षिणं कृत्वा यजमानपरःसरम् ४५
सुमुहूर्ते सुलग्ने च स्थापयेदासनोपरि
मन्त्रन्यासादिकं कृत्वा जीवन्यासमथाचरेत् ४६
स्पृष्ट्वा जप्त्वा च हुत्वा च पूर्णाहुतिमथाचरेत्
कुम्भानुद्धृत्य शिरसा वाद्यघोषसमन्वितम् ४७
आलयप्रदक्षिणं कृत्वा गर्भगेहं प्रविश्य च
अकारादिक्षकारान्तमक्षरं विन्यसेत्क्रमात् ४८
आवाहनादि संपूज्य अभिषेकं यथाक्रमम्
तिलतैलाभिषेकं च पञ्चगव्याभिषेचनम् ४९
क्षीरदधिफलक्षौद्रैः सुगन्धादिभिः पूजयेत्
वस्त्राभरणगन्धैश्च पुष्पदामैरलंकुरु ५०
धूपदीपं ददेत्पश्चान्नैवेद्यं भक्ष्यभोज्यकैः
आचार्यं पूजयेत्कर्ता वस्त्रहेमाङ्गुलीयकैः ५१
गाश्च दद्याद्विशेषेण दक्षिणां दापयेत्सुधीः
यजमानोऽभिषिक्तस्तु गन्धपुष्पाद्यलंकृतः ५२
दीनान्धकृपणादीनां दानं वित्तानुसारतः

एवं यः कुरुते भक्त्या इष्टकामार्थसिद्धये
सोऽभीष्टसिद्धिं संप्राप्य चिरकालं प्रमोदते ५३
इत्यजितागमे प्रतिष्ठातन्त्रे क्रियापादे त्रिनवतितमः
कन्यकापरमेश्वरीस्थापनपटलः

## चतुर्नवतितमः पटलः

### जीर्णोद्धारविधिः

जीर्णोद्धारविधिं वक्ष्ये सर्वसंपत्करं नृणाम्
प्रासादलिङ्गपीठानां जीर्णकाले समुद्धरेत् १
ग्रामे वा नगरे वापि अरण्ये पर्वतेऽपि वा
शिवलिङ्गं विना यत्र तत्र जुष्टं च शत्रुणा २
तस्मात्सर्वप्रयत्नेन शिवधामसमन्वितम्
कालक्षेपेण जीर्णं हि भिन्नं स्फुटितं पातितम् ३
पुराकृतं परित्यज्य लिङ्गं पीठं निकेतनम्
प्रासादे गोपुरे चैव आलये ध्वजदण्डके ४
शिखरे चित्रकूटे च नृत्तमण्टपसालके
चित्रशालासभास्थाने आस्थानमण्टपे तथा ५
जीर्णकाले तु तद्भेदे महाजीर्णैः सरन्ध्रकैः
शैलजैर्लोहजैश्चैव दारुमृण्मयकेष्टकैः ६
शिखरे गतमाने च आयतस्तम्भशोभिते
चित्रशाले सरन्ध्रे च मकुटकर्णे चोन्नते ७
पद्मकर्णे गते चैव कुम्भकर्णे च कुब्जके
प्रतिमाशोभके चैव सिंहकन्दरपट्टिके ८
गजाष्टके च नागेषु कर्णकूटकशालके

चतुर्द्वारसमायुक्ते चतुर्देवसमावृते ९
पूर्वदक्षिणशालायां पश्चिमोत्तरशालयोः
इन्द्रे च दक्षिणामूर्तौ विष्णुब्रह्मवृषेषु च १०
ईशादिस्थूपिपर्यन्ते जगतीकण्ठपट्टिके
मध्यस्तम्भसमायुक्ते शृङ्गारभृतशालके ११
सिंहशाले प्रभाशाले दिक्शाले द्वारशालके
उपशाले च कर्णे च मध्यमे मूलपादके १२
एतेषु भेदे जीर्णे च पुनः कल्पनमाचरेत्
पूर्ववत्कल्पने शिल्पशास्त्रमार्गेण निर्मितिः १३
यथापूर्वं च तद्रूपं तथैव कल्पयेत्पुनः
मूललिङ्गे च बेरे च भित्तिचित्रे च पीठके १४
इष्टिकाचूर्णसंयुक्ते बिम्बरूपेण कल्पिते
गर्भालये च भित्तौ तु पाषाणे छिन्नभिन्नके १५
एतेषु भेदे जीर्णे च पूर्ववत्कल्पयेत्पुनः
मूललिङ्गस्य मूर्तिं च दारुलिङ्गे तु योजयेत् १६
मण्टपे पूजयेत्तत्र स्थापनावाहनपूर्वकम्
अष्टविद्येश्वरकुम्भान्वर्धनीमूलकुम्भकौ १७
मूर्तिहोमं ततः कुर्यात्षडध्वाङ्गार्चनं क्रमात्
जीवन्याससमायुक्तं शिवमन्त्रेण योजयेत् १८
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
पञ्चशुद्धिसमोपेतं पञ्चावरणं पूजयेत् १९
आवाहनं स्थापनं स्यादर्चनाङ्गं विधीयते
दारुलिङ्गे प्रतिष्ठाप्य अभिषेकमथाचरेत् २०
यथापूर्वोक्तमार्गेण पूजयेद्दारुलिङ्गकम्

मगडलान्ते तु लिङ्गं च पुनः प्रोन्नणमाचरेत् २१
यथाशास्त्रोक्तमार्गेण संप्रोन्नणमथाचरेत्
गर्भालये चेदुद्धारः पुनर्निर्माय मगटपम् २२
मगडलात्पूर्वं संस्थाप्यं राजराष्ट्राभिवृद्धये
षगमासे चेद्वत्सरान्ते राजराष्ट्रं विनश्यति २३
मगडलान्ते प्रतिष्ठाप्यं यथापूर्वविधिक्रमात्
यागशालां समापाद्य पञ्चाग्निं स्थापयेद्गुरुः २४
यथापूर्वं तु नित्यं स्यात्तथा नैमित्तिकं तथा
द्विगुणं पूजयेत्तत्र द्विगुणं होममाचरेत् २५
ब्राह्मणान्भोजयेत्तत्र जपहोमौ विधिक्रमात्
लिङ्गे च प्रतिमायां च बिम्बबाहुकिरीटयोः २६
कगठे श्रोत्रे च जान्वोश्च पादस्थले द्विहस्तयोः
हस्तमूले च अङ्गुल्यौ नास्यामोष्ठे च नेत्रयोः २७
कगठस्य पृष्ठभागे तु स्तनमध्ये च गुह्यके
एतेषु जीर्णे भेदे च पुनर्निर्माय कारयेत् २८
एवं महेशबिम्बेषूत्सवोद्धरणकालके
वाहनेषु चैव तथा दारुपीठे विमानके २९
सूत्रबन्धे च नाराचे ऊर्ध्वबिम्बे च भिन्नके
महोत्सवस्य काले वै बिम्बोद्धारणपूर्वकम् ३०
त्रिरात्रे पञ्चरात्रे वा अथवा सप्तरात्रके
निर्माय पूर्ववद् बिम्बं संप्रोन्नणमथाचरेत् ३१
ध्वजारोहादितीर्थान्तदिनकर्म समाचरेत्
रत्नजे हेमजे वापि राजते ताम्र एव च ३२
लोहजे दारुजे चैव इष्टके बिम्बरूपके

प्रायश्चित्तोक्तमार्गेण यथापूर्वं तथा नयेत् ३३
शैलजस्तम्भकैश्चैव दारुजस्तम्भकैस्तथा
इष्टिकाचूर्णसंयुक्तचित्रशालाभिशोभिते ३४
चतुर्वेदचतुःस्तम्भैः षट्शास्त्रोपरिस्तम्भकैः
शिवतत्त्वस्वरूपकशिवरूपककूटकैः ३५
वर्णपदाध्वतत्त्वाध्वमन्त्राध्वपरिवेष्टिते
कलाभुवनरूपैश्च मध्यनृत्तसुशोभिते ३६
यक्षगन्धर्वसिद्धाद्यैः किन्नरैर्मुनिसेविते
त्रयस्त्रिंशत्कोटिदेवैः सेव्यभक्तैः परिवृते ३७
तत्तत्स्थानस्थितैर्देवैस्तत्तद्देवैः पृथक् पृथक्
भित्तिचित्रेण लिखितैः शिल्पशास्त्रोक्तमार्गतः ३८
देवदुन्दिभिघोषैश्च हरिब्रह्मसुतालकैः
शङ्ककाहलझल्लरीवाद्यघोषसमन्विते ३९
भूतवैतालपैशाचयक्षरक्षःपरिवृते
सभास्थाने च बाह्ये च विचित्रैश्च समावृते ४०
देवघोषब्रह्मघोषवाद्यघोषैश्च शोभिते
हेमवर्षपुष्पवर्षैर्देवासुरनमस्कृते ४१
द्वारशालाद्वारदेवनन्दिकेश्वरसेविते
विघ्नेशस्कन्ददेवेशवृषभबलिपीठके ४२
ध्वजदण्डादिदिक्पीठे महोत्सवसभापतिम्
सभाकूटे स्थितं नृत्तं रत्नसिंहासनस्थितम् ४३
वामभागस्थितदेवीसमालोकनतत्परम्
कुञ्चितपादसंकाशकिङ्किणीजालसंनिभम् ४४
आनन्दताण्डवं पूर्वं संध्याताण्डवं तत्परम्

गौरीताण्डवमेवं तु तथा त्रिपुरताण्डवम् ४५
कालीताण्डवमेवं तु मुनीनां ताण्डवं तथा
सभाताण्डवमेवोक्तमित्येतत्सप्तताण्डवैः ४६
संयुक्ते च सभामध्ये देवानां मोक्षदायकम्
सकृद्दर्शनमात्रेण शिवसायुज्यदायकम् ४७
सभाकूटे च शिखरे दण्डपट्टिकाकण्ठके
चित्रशाले च प्रतिमाभित्तिचित्रकदैवते ४८
एतेषु भेदे जीर्णे च पुनः कल्पनमाचरेत्
जीर्णोद्धारे च पूर्वं यत्तद्रूपं प्रतिबिम्बके ४९
पूर्वस्थाने च ईशाने दक्षिणोत्तरपश्चिमे
बालालयं च कर्तव्यं पूर्ववत्कारयेत्क्रमात् ५०
बालालये च शालायां दारुमृण्मयनिर्मितान्
भित्तिचित्रादिदेवेशांस्तत्तत्स्थानेषु निक्षिपेत् ५१
देवानावाह्य तत्पूर्वे कुम्भमध्ये नियोजयेत्
मूर्तिहोमं ततः कुर्याद्यात्राहोमममतः परम् ५२
मण्टपे स्थलशुद्धिः स्याद्वास्तुपूजाविधिक्रमात्
पुण्याहं वाचयेद्धीमान्पञ्चगव्यं ततः परम् ५३
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः
कटकं हेमसूत्रं च कर्णभूषणं धारयेत् ५४
आत्मशुद्धिस्ततः पूर्वा स्थानशुद्धिर्द्वितीयिका
तृतीया द्रव्यशुद्धिः स्याच्चतुर्थं मन्त्रशोधनम् ५५
पञ्चमी कुम्भशुद्धिः स्यात्षष्टकं कुम्भपूजनम्
सप्तमो देवतावाहो ह्यष्टमश्चार्चनाविधिः ५६
नवममग्निकार्यं स्याद्दशमं दर्पणार्चनम्

एकादशश्चाभिषेको द्वादशं प्रतिमार्चनम् ५७
त्रयोदशी सभापूजा चतुर्दशो न्यास एव च
पञ्चशं तु नैवेद्यं षोडशश्चोपचारकः ५८
नटेशशालामध्ये तु रक्षाबन्धनपूर्वकम्
पुनःप्रोक्षणपर्यन्तं नित्याग्निहवनं तथा ५९
प्रायश्चित्तादिहोमश्च बलिदानं विशेषतः
आचार्यो दीक्षितैस्तत्र नित्यपूजां विधाय तु ६०
पुनःप्रोक्षणपर्यन्तं जपं पूजां च होमयेत्
ब्राह्मणान्भोजयेत्तत्र दक्षिणाभ्यङ्गपूर्वकम् ६१
उत्तमं मण्डलान्तं स्यान्मध्यमं वत्सरार्धकम्
अधमं वत्सरान्तं स्यात्त्रिविधं परिकीर्तितम् ६२
जीर्णनिमित्तकुम्भं च पूर्ववत्कल्पयेत्प्रभोः
भित्तिचित्रादिदेवेशान्यथापूर्वं प्रकल्पयेत् ६३
पुनःप्रोक्षणकालश्च मुहूर्ते स्थिरलग्नके
सप्ताहे वा त्र्यहे वापि पञ्चाहे वा विधीयते ६४
मृत्संग्रहणमारभ्य द्वितीयमङ्कुरार्पणम्
तृतीया वास्तुपूजा च चतुर्थं नयनमोचनम् ६५
पञ्चमी प्रतिमाशुद्धिः षष्ठकं मण्टपार्चनम्
सप्तमग्निकार्यं च अष्टमं मन्त्रपूजनम् ६६
नवमी दर्पणपूजा दशमं चाभिषेचनम्
एकादशो जीवन्यासो द्वादशं मूर्तिपूजनम् ६७
त्रयोदशं षडध्वाङ्गं नैवेद्यकं चतुर्दशम्
पञ्चदशे परीवारमर्चयेद्देशिकोत्तमः ६८
उपचारः षोडशः स्यात्प्रोक्षणे विधिरुच्यते

यथाशास्त्रोक्तमार्गेण पुनरावर्तनं प्रभोः ६९
आचार्यं पूजयेत्तत्र सर्वालंकारशोभितम्
दशनिष्केण हेम्ना च ताम्बूलं दापयेद्गुरोः ७०
आचार्यमनसस्तृप्तिर्देवसान्निध्यकारणम्
चित्रकूटं प्रतिष्ठाप्य शिवलोके महीयते ७१
सभापतिं प्रतिष्ठाप्य स पुण्यां गतिमाप्नुयात्
सजीवः सन्स धन्यश्च मोक्षपदं स वीक्षते ७२
तृणकोटिशतैर्वापि मृण्मयदशकोटिकैः
इष्टिकाशतकोट्या वा शिलया दारुणाथवा ७३
चित्रकूटस्य निर्माणं युक्त्या भक्त्या च कल्पयेत्
शिवालयसहस्रे च मुक्तिक्षेत्रे प्रतिष्ठिते ७४
यत्फलं तत्कोटिगुणितं चित्रकूटस्य निर्मितौ
तस्य दर्शनमात्रेण शिवलोके महीयते ७५
सभापतौ प्रतिष्ठिते सर्वे देवाः प्रतिष्ठिताः
सकृद्दर्शनमात्रेण कोटियज्ञफलं लभेत् ७६
नटेशाय च ताम्बूलं यो दद्यान्नृत्तमूर्तये
कल्पकोटिसहस्रं स्याच्छिवलोके महीयते ७७

इत्यजिताख्ये महातन्त्रे क्रियापादे जीर्णोद्धारविधिः चतुर्नवतितमः पटलः

## पञ्चनवतितमः पटलः

## कलाकर्षणविधिः

अथातः संप्रवक्ष्यामि विधानं गुरुपुङ्गव
कलाकर्षणके सम्यक् शृणु श्रद्धापुरःसरम् १

कलाकर्षणमेतत्तु शाक्तं शैवमिति द्विधा
दूतिका च तथा प्राणप्रतिष्ठाद्यैश्च शाक्तके २
दूतिकाप्रकृतिशक्तित्वात् प्राणस्य जडधर्मतः
चिदात्मनि परेशे तु कल्पना नोपपद्यते ३
अकारं च उकारं च मकारं बिन्दुमेव च
अर्धचन्द्रनिरोधी च नादं चेति त्रयं गुरो ४
नादनामकलायां तु संमितं नादमुच्यते
कलापञ्चकमित्युक्तमेतदाकर्षयेद्गुरो ५
एवमाहुः कलाकर्षं शैवस्य गुरुसत्तम
कलातीतं शिवं साक्षादावाहनविधानतः ६
आवाहयेद्विशेषेण कलाकर्ष उदीरितः
शाक्तं शाक्तेन कर्तव्यं शैवं शैवेन कारयेत् ७
अन्यथा कुरुते मोहाद्यदि तत्कर्म निष्फलम्
शिवस्य नवधा मूर्तिर्भाव्यते गुरुसत्तम ८
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
बिन्दुर्नादश्च शक्तिश्च शिवश्चेति प्रकीर्तिता ९
एषा नवविधा मूर्तिस्त्रिधा भोगादिकैर्मता
ब्रह्मा विष्णुश्च रुद्रश्च भोगाङ्गत्वेन कीर्तिता १०
अभिकाराङ्गकावेतौ महेश्वरसदाशिवौ
बिन्दुर्नादः शक्तिशिवौ लयाङ्गत्वेन कीर्तितौ ११
कुम्भे चावाहयेच्छम्भोस्तनुं भोगलयाह्वयाम्
आवाहयेत्तथा वह्नौ तनुं चैवाधिकारिकाम् १२
कलाकर्षणमेतत्तु निशीथे चोत्तमं स्मृतम्
दशनाड्यां मध्यमं स्यादधमं पञ्चनाडिके

दिवा चापररात्रे वाकर्षणं नैव कारयेत् १३

इत्यजिताख्ये महातन्त्रे क्रियापादे कलाकर्षणविधिः पञ्चनवतितमः पटलः

## षण्णवतितमः पटलः

## शक्तिकलाकर्षणविधिः

शक्तिश्चतुर्विधा ज्ञेया तासां भेदं शृणुश्व वै
स्वतन्त्रा केवला शक्तिः सहजा गुरुपुङ्गव १
मिश्रा चेति महेशस्य शक्तिर्भिन्ना चतुर्विधा
परमेश्वरस्य या शक्तिर्द्विधा संपरिकीर्तिता २
स्वशक्तिः प्रथमा प्रोक्ता द्वितीया तु परिग्रहा
शिवादभिन्ना या शक्तिः सा स्वशक्तिः प्रकीर्तिता ३
कार्यमात्रे प्रक्लृप्ता या सा शक्तिर्वै परिग्रहा
शिवालयेषु सर्वत्र शिवलिङ्गेन वै सह ४
प्रतिष्ठिता पराशक्तिः स्वशक्तिरिति संमता
शिवालये प्रधानायाः शक्तेरन्यत्र वै गुरो ५
सा परिग्रहशक्तिः स्यादावृतौ स्थापिता गुरो
स्वतन्त्रा केवला चैव सहजेति प्रकीर्तिता ६
शक्तयस्तिस्त्र आख्याताः स्वशक्तेर्भेदतो गुरो
मिश्रेति कथिता शक्तिः परिग्रह इतीरिता ७
स्वतन्त्राख्या तु या शक्तिर्द्विधा सा परिकीर्तिता
स्वप्रधानं तथा स्वाङ्गमिति देशिकसत्तम ८
प्राकारस्य तृतीयस्य द्वितीयस्याथवा गुरो
प्राकारगोपुरैर्युक्तं दिव्यमण्टपसंवृतम् ९

शिखरेण ध्वजेनापि बलिपीठेन संयुतम्
वृषेण सहितं रम्यं देव्यागारं सलक्षणम् १०
तस्मिन्प्रतिष्ठिता शक्तिः स्वप्रधाना भवेद्गुरो
शिवागारपुरद्वारं यस्यां दिशि प्रकल्पितम् ११
तादृक् चैव भवेत्तत्र देव्यागारस्य संनिधिः
पूर्वाभिमुखमीशस्य संनिधानं भवेद्यदि १२
संनिधिः पश्चिमे वा स्याद् वामे दक्षिणतोऽपि वा
स्वप्रधानपराशक्तेर्नियमो नास्ति संनिधौ १३
पश्चिमाभिमुखमीशस्य संनिधिर्यदि देशिक
स्वप्रधानपराशक्तेः संनिधिः पूर्वके भवेत् १४
स्वप्रधानमिव स्वाङ्गमीशागारे विशेषतः
स्वाङ्गस्यापि तथा शक्तेः प्रधानस्येव देशिक १५
पृथगालयसंयुक्तं वृषभध्वजसंयुतम्
परिवारविहीनं च भवेत्प्रासादमुत्तमम् १६
सहजायाः पराशक्तेर्गर्भावरणतोऽथवा
अन्तर्हारि महेशस्य संनिधौ पुरतो दिशि १७
दक्षिणाभिमुखसान्निध्यमुन्मुखीकृत्य देशिकः
शिवागारे वामपार्श्वे पुरोऽगारं प्रकल्पयेत् १८
केवलायास्तथा शक्तेः शिवागारात्पृथक् स्थले
प्राकाराद् बाह्यदेशे तु कल्पयेदालयं शुभम् १९
गोपुरध्वजसंयुक्तं प्रासादावरणैर्युतम्
मिश्रायास्तु पराशक्तेः शिवागारे गुरूत्तम २०
स्वशक्तेरन्यतोऽगारं प्रावृतौ कारयेद्वरम्
परिग्रहशक्तिरेषा स्यादीशस्य गुरुसत्तम २१

शिवालयादन्यदेशे पृथक्प्रासादसंयुतम्
गोपुरध्वजसंयुक्तं प्राकारैर्मण्टपैर्वृतम्  २२
सिंहेन वाथ हंसेन युतं लक्षणसंयुतम्
बलिपीठेन सहितं कारयेदालयं शुभम्  २३
शिवालयस्थापितायाः शक्तेर्न पृथगुत्सवः
स्वप्रधानं तथा स्वाङ्गं पृथगुत्सवमर्हति  २४
एतासां शिवशक्तीनामावृतेः पूजनं शृणु
स्वप्रधाना तथा स्वाङ्गा सहजा केवला तथा  २५
एतासां शिवशक्तीनां प्रथमावरणे गुरो
परामादिं तथैवेच्छां क्रियां ज्ञानाभिधां तथा  २६
पञ्चशक्तीः समावाह्य पूजां कुर्याद्विशेषतः
हृदयादिषडङ्गानि विद्यादेहं च देशिक  २७
नेत्रन्यासं च विन्यस्य पूजयेद् गुरुपुङ्गव
धारिकाद्यास्तथा शक्तीर्द्वितीयावरणे तथा  २८
ध्यात्वावाह्य ततो पूजां कारयेद् गुरुपुङ्गव
तृतीयावरणे पूजां कुर्याद्वामादिका अनु  २९
शचीमुख्यास्तथा शक्तीः समावाह्य यथाविधि
चतुर्थावरणे पूजां कारयेद्गुरुसत्तम  ३०
शचीमुखानां शक्तीनामायुधानि यथाविधि
पञ्चमावरणे ध्यात्वा पूजां कुर्याद् गुरूत्तम  ३१
मिश्रा शक्तिर्यदि भवेत्प्रथमावरणे तदा
उमाम्बिकामुखाः शक्तीर्हृदयादीनि सादरम्  ३२
विद्यादेहं च नेत्रं च न्यसन्पूजां समाचरेत्
वामादिकास्तथा शक्तीः पूजयेद् द्वितयावृतौ  ३३

न्त्रोभिरण्यादीस्तथा शक्तीः समावाह्य यथाविधि
तृतीयावरणे पूजां कारयेद् गुरुसत्तम ३४
शचीमुख्यास्तथावाह्य शक्तीश्चैव यथाविधि
चतुर्थावरणे ह्यर्चां कारयेद् गुरुवल्लभ ३५
शचीमुखानां शक्तीनामायुधानि क्रमेण च
पञ्चमावरणे ध्यात्वा पूजां वै परिकल्पयेत् ३६

इत्यजिताख्ये महातन्त्रे क्रियापादे शक्तिकलाकर्षणविधिः
षण्णवतितमः पटलः

## सप्तनवतितमः पटलः
## गौर्युत्सवविधिः

गौर्युत्सवविधिं वक्ष्ये नृपराष्ट्रविवर्धनम्
सर्वसंपत्समृद्ध्यर्थं यशोवृद्धिकरं शुभम् १
सवो दुःख इति ख्यातः सर्वसंपन्निवारकः
उद्गतस्तु सवो यस्मात्तस्मादुत्सव उच्यते २
उत्सवस्त्रिविधः प्रोक्तः स नित्यादिसमन्वितः
एतेषां शैववत्कालः केतुताडनमङ्कुरम् ३
ध्वजदण्डप्रमाणं च शिखरादिप्रमाणकम्
आदिशक्तिरधोभागं तत्त्रिकोणसमन्वितम् ४
रसकोणसमायुक्तमादिशक्तेरतः परम्
चतुरश्रसमायुक्तमूर्ध्वं तच्छक्तिरूपकम् ५
स्कन्धत्रयसमायुक्तं चोपदण्डसमन्वितम्
प्रमाणमुक्तवत्कुर्याद्दण्डभागे च शैववत् ६
अणुशक्तिः पटः प्रोक्तः सरोमदर्भमाल्यकः

पटस्य दीर्घतारं च शैववत्समुदाहृतम् ७
एकैकाङ्गुलहीनं तु कुर्यात्तच्छिल्पवित्तमः
तत्पटे मध्यभागे तु कृष्णसारं लिखेत्क्रमात् ८
इतरं शैववल्लिख्य चोत्पलं तु समालिखेत्
कृष्णसारः शक्तिराद्या शान्ता चेति वरा शुभा ९
तिग्मशृङ्गाय विद्महे वेदपादाय धीमहि
तन्नः सारः प्रचोदयात्
तीक्ष्णकर्णाय विद्महे वेदपादाय धीमहि
तन्नः एणः प्रचोदयात्
तत्पटे मध्यभागे तु वृषभं वा समालिखेत्
शान्तश्च सत्कलश्चैव सारश्च तरुणस्तथा १०
साक्षी च समिधश्चैव सद्गिमिश्च ततो वरः
लोकेशांस्तान्विशेषेण परिवारकमुच्यते ११
कामी गमीका मोही च नीली बाला विचारिणी
दामी चैव तथा चेता परिवारकमुच्यते १२
कृष्णसारश्च वृषभो विष्णुमूर्तौ प्रकीर्तिते
मोक्षावतारे कृष्णस्तु वृषः सुखावतारके १३
शम्भुवास्तुप्रदेशे चेच्छक्त्युत्सवं कृतं यदि
वृषभं चैव सिंहं च मतिमान्विलिखेत्पटे १४
शक्त्यग्रे संस्थितमुक्षं विलिखेत्तदा मन्त्रवित्
सुस्निग्धं कृष्णसारं च लिखेत्तु देशिकाज्ञया १५
शक्तेर्वास्तुप्रदेशे चेत्तच्छक्तेरुत्सवे कृते
वृषभं वाथ सिंहं वा पटे सम्यग्लिखेद्बुधः १६
तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि

तन्नो वृषः प्रचोदयात्
वृषस्य शक्तिराख्याता वृषाणी चेति निर्मला
वीरोन्नो निर्मलोन्नश्च विजयोन्नस्तथैव च १७
शूरोन्नको द्रुतोन्नश्च सरोन्नः सम्यगुन्नकः
नयोन्नो ह्येवं नामानि वृषस्य परिवारकाः १८
शान्तिकर्णायै विद्महे वेदपादायै धीमहि
तन्नो वृषाणी प्रचोदयात्
दुग्धा सारा रसा कामा दात्री दामा सुखावहा
तथैव विजयी चैव वृषाण्याः परिवारिकाः १९
तीव्रकर्णाय विद्महे धर्मपिण्डाय धीमहि
तन्नः सिंहः प्रचोदयात्
हास्यसिंहीति विख्याता सिंहस्य शक्तिरुत्तमा
क्वणत्सिंहो लसत्सिंहो नारसिंहस्तथैव च २०
नदत्सिंहो नादसिंहो द्रुतसिंहोऽरसिंहकः
कामसिंहस्तु वै ह्येते सिंहस्य परिवारकाः २१
वस्त्रोत्रायै विद्महे धर्मपुष्ट्यै च धीमहि
तन्नः सिंही प्रचोदयात्
कोपा च मारुता मर्त्या तारकी सर्वमोहिनी
क्रुद्धी कुहू वली वक्री सिंह्यष्टपरिवारिकाः २२
वारा च वकुली माली मायी सोमी विलासिनी
मुदती कुन्ददन्ती च सिंह्यष्टपरिवारकाः २३
ग्रहाहे धात्वहे वाथ बाणाहे त्रिदिनेऽथवा
मोन्नाहे वाथ कर्तव्यमुत्सवं विधिपूर्वकम् २४
मन्वहे वाथ रन्ध्राहे ध्वजारोहणमारभेत्

चम्पकं चन्दनं चैव खदिरं सरलं तु वा २५
असनं वैणवं चैव मधूकं क्रमुकं तथा
अशोकं चैव बिल्वं च कीर्तिताः केतुदारवः २६
स्थानानि शैववत्प्रोक्तमेवं वै केतुदारुणाम्
तत्पटं रज्जुना युक्तं रोपयेच्छैवकर्मवित् २७
भेर्युत्सवं ततः कृत्वा उत्सवं पुनरारभेत्
योनिकुण्डं चतुर्दिक्षु तुर्याश्रं त्वीशगोचरे २८
योगेशस्थापनं कृत्वा स्वस्वमन्त्रैश्च होमयेत्
सायं प्रातर्बलिं दत्त्वा अन्त्ये चोत्सवमारभेत् २९
अन्नशक्तिसमायुक्तं शक्तिमूर्तिसमायुतम्
रुद्राङ्गुलसमायुक्तमुत्तमं तत्प्रकीर्तितम् ३०
अद्व्यङ्गुलविहीनं तु मध्यमस्याधमस्य तु
प्रतिमालक्षणोक्तेन कारयेच्छक्तिरूपकम् ३१
एतदुत्सेधमानेन चान्नशक्तिस्वरूपकम्
बलिरूपं ततो ध्यात्वा यजेच्छक्तिं तु मध्यमे ३२
द्विनेत्रं द्विभुजं शान्तं कोटिकोटिसमुज्ज्वलम्
ब्रह्मादीशानपर्यन्तं ब्रह्मदेव्यादिदेवताः ३३
क्षीरान्नमाज्यसंयुक्तमावाहनबलिं ददेत्
पूर्वे गणेशशक्तिः स्यात्पिशाची स्याद्द्वितीयके ३४
तृतीये वह्निदेवी स्याच्छर्वशक्तिश्चतुर्थके
पञ्चमे भूतशक्तिः स्याद्वल्लीरात्रं तु षष्ठकम् ३५
सप्तमे ऋषिदेवः स्यान्नागेशी वसुरात्रके
इन्द्राणिरात्रं नवमं भूमिदेवी ततः परम् ३६
एकादशे च रुद्राणी तत्परे तु परानिशा

मुद्गान्नं पनसं चैव दाडिमं घृतसंयुतम् ३७
प्रथमेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
सर्षपान्नं घृतोपेतं कदलीफलसंयुतम् ३८
द्वितीयेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
पायसान्नं गुलोपेतं सघृतं लाजसंयुतम् ३९
तृतीयेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
तिलान्नं घृतसंयुक्तं गोदध्ना तु समन्वितम् ४०
चतुर्थेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
हरिद्रान्नं घृतोपेतं पिशाचफलसंयुतम् ४१
पञ्चमेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
गुलोदनं घृतोपेतं नालिकेरसमन्वितम् ४२
षष्ठे चाहनि दद्याच्च वल्लीमन्त्रमनुस्मरन्
गुलोदनं घृतोपेतं पयसा च परिप्लुतम् ४३
सप्तमेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
शुद्धान्नमाज्यसंयुक्तमिक्षुदण्डसमन्वितम् ४४
अष्टमेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
रक्तान्नं मधुसंयुक्तमपूपं घृतसंयुतम् ४५
नवमेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
घृतान्नं गुलसंयुक्तं कदलीफलसंयुतम् ४६
दशमेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
मध्वन्नमाज्यसंयुक्तं कृसरापूपसंयुतम् ४७
एकादशाहे दद्याच्च तच्छक्तिमन्त्रमुच्चरन्
शाल्यन्नं च घृतोपेतं तिलचूर्णसमन्वितम् ४८
द्वादशेऽहनि दद्याच्च तच्छक्तिमन्त्रमुच्चरन्

प्रणवादि चतुर्थ्यन्तं स्वनामपदमध्यमम्  ४९
स्वाहान्तं बलिनिर्देशे सर्वेभ्य इति निर्दिशेत्
श्रेष्ठं करतलं प्रोक्तं मध्यमं मुष्टिमात्रकम्  ५०
कन्यसमक्षमात्रं स्यादेवमेवं बलिं क्षिपेत्
करवीरं पद्मपुष्पं पुन्नागं पाटली तथा  ५१
द्रोणपुष्पं च मन्दारं नंद्यावर्तं च पट्टिका
मालती मल्लिका चैवमुत्पलं केतकी तथा  ५२
एवमेवं विशेषेण द्वादशे द्वादशं तथा
प्रथमे चार्कपत्रं च कोलके हंसवाहनम्  ५३
शूले हरिणवाहं च चतुर्थे कृष्णसारकम्
पञ्चमे स्यात्पुष्पधाम गवयो रस एव च  ५४
पाताले शेषमध्ये तु लोकेशे व्याघ्रवाहनम्
ग्रह एव रथः प्रोक्तो दशाहे तीर्थमाचरेत्  ५५
भोगशक्त्या विरोधश्च चतुर्थदिवसे ततः
प्रवृत्तो बहुविधः कार्यं संधानद्रव्यहेतुना  ५६
संधिकर्म च कर्तव्यं ततो भूतदिने क्रमात्
देवदास्येति तत्प्रोक्तं भोगशक्त्यनुसारिणा  ५७
तैर्विरोधः प्रकर्तव्यश्चारु भक्तसमन्वितम्
व्यञ्जनं भोजनं भज्य भक्तद्रव्यं क्रमाद्ददेत्  ५८
षष्ठे क्षपणसंहारं परमेश्वरवत्कृतम्
सर्वभक्तजनैर्युक्तं मुकुलाञ्जलिभिस्ततः  ५९
गरुकर्दमजं कार्यं मारशत्रुं भजेद्वरम्
मुकुलाञ्जलिभिश्चैव सर्वभक्तजनैस्ततः  ६०
मासर्क्षाणि च सर्वाणि शंकरोक्तवदाचरेत्

यत्रास्ति मन्त्रभेदश्च क्रियाभेदो न विद्यते ६१
बलिं दद्यात्क्रमेणैव शंकरस्य च वास्तुनि
अथवा विधिवद्धीमान्न तु ग्रामादिभेदतः ६२
अनुक्तं चेद्भवेत्किंचिच्छंकरोक्तवदाचरेत्
विपरीतं न कर्तव्यं कृतं चेत्कर्तृनाशनम् ६३
तद्दोषशमनार्थाय महाशान्तिं समाचरेत्
एवमुक्तक्रमेणैव पुनरुत्सवमाचरेत् ६४

इत्यजिताख्ये महातन्त्रे क्रियापादे गौर्युत्सवविधिः सप्तनवतितमः पटलः

## अष्टनवतितमः पटलः

## यागशालालक्षणविधिः

अथातः संप्रवक्ष्यामि यागशालाविधिं शृणु
यकारो यजनार्थश्च गमनार्थो गकारकः १
शकारश्च सुखार्थः स्याल्लकारो लय इत्यपि
सुखार्थं च लयस्थाने गमनार्थं सुयागकः २
यानयागमयी यागशालेति परिगीयते
यागार्थं मण्टपं कुर्याद्धर्म्याग्रे वाथ पार्श्वयोः ३
पञ्चप्राकारसंयुक्ते चालये च मखालयम्
गर्भावरणके चापि अन्तर्हारेऽथवाचरेत् ४
अथवा मध्यहारे चाप्यग्रयोः पार्श्वयोरपि
यागशालां प्रकल्पेत तद्बाह्यं परिवर्जयेत् ५
व्यामोहात्कुरुते पुंसां राजराष्ट्रस्य दोषकृत्
तस्मात्सर्वप्रयत्नेन उक्तमार्गेण कारयेत् ६

चतुःप्राकारके चापि त्रिप्राकारे त्वथापि वा
द्विप्राकारके त्वथवाप्येकप्राकारकेऽपि च ७
प्राकाराभ्यन्तरे चैव यागशालां प्रकल्पयेत्
प्राकारबाह्यदेशे तु यागशालां न कारयेत् ८
ईशाने चैन्द्रदेशे च कुबेरे च मखालयः
उत्तमश्चेति विख्यातो वारुणो मध्यमो भवेत् ९
आग्नेये नैर्ऋते वायावधमश्च प्रकीर्तितः
अधमाचाधमः प्रोक्तो दक्षिणे तु प्रदेशके १०
अथवा रम्यदेशे तु यागशालां प्रकल्पयेत्
उत्तमं पीठमानं चाप्याचार्यहस्तमानकम् ११
मध्यमं चेति विख्यातं हस्तमानं द्विधा मतम्
मानं मात्राङ्गुलं चैव देहलब्धं त्रिधा भवेत् १२
अङ्गुलत्रितयं प्रोक्तं मानायामं यवाष्टकम्
यवोदरेण गुणितं मानाङ्गुलमिति स्मृतम् १३
आचार्यदक्षिणे हस्ते कनिष्ठाङ्गुलिमध्यके
पर्वादूर्ध्वं समारभ्य तत्पर्वाग्रान्तकं क्रमात् १४
आयामं च यथाप्रोक्तं मात्राङ्गुलमिति स्मृतम्
मध्यमाङ्गुलिमध्ये तु पर्वदीर्घस्य तारकम् १५
आयामं च यथाप्रोक्तं मात्राङ्गुलमथापि वा
यल्लब्धोत्सेधमानं तु चतुर्विंशच्छतं कुरु १६
तेष्वेकभागमङ्गुल्यं देहलब्धमिति स्मृतम्
प्रासादं मण्डपं चैव विमानं गोपुरादिकम् १७
प्राकारस्तम्भशालां च नदीं चाध्वानदुर्गकम्
ग्रामादीनां तटाकं च मानाङ्गुलेन कारयेत् १८

यागोपकरणं चैव यागशालादिकं क्रमात्
मात्राङ्गुलेन कर्तव्यं मानाङ्गुलं न कारयेत्  १९
मात्राङ्गुलचतुर्विंशत्यङ्गुलं हस्तमानकम्
तेन हस्तेन कर्तव्यं यागशालादिकं चरेत्  २०
मूलपीठस्य नाहं च त्रिविधं च विभाजितम्
तेष्वेकभागहस्तं च उत्तमं चेति कीर्तितम्  २१
आचार्यहस्तमानं च मध्यमं समुदाहृतम्
आचार्यदक्षिणे हस्ते मध्याङ्गुलिसमाग्रके  २२
सप्तविंशत्यङ्गुलं च मध्यमं हस्तमानकम्
आचार्यदक्षिणे हस्ते मध्यमाङ्गुलिमध्यमे  २३
पर्वदीर्घायतं चाथाप्यधमं हस्तमानकम्
चतुर्विंशत्यङ्गुलाच्च न्यूनहस्तं न कारयेत्  २४
सकलादीनि बेराणि बाललिङ्गानि वै शृणु
देहलब्धेन कर्तव्यमन्यथा राष्ट्रनाशनम्  २५
तस्मात्सर्वप्रयत्नेन उक्तमार्गेण कारयेत्
यागशालां प्रवक्ष्यामि आयामं च शृणुष्व वै  २६
पञ्चाशद्धस्तमानं च उत्तमं चेति कीर्तितम्
चत्वारिंशन्मध्यमं च अधमं त्रिंशतिस्तथा  २७
अधमाच्चाधमं प्रोक्तं पञ्चादशकरं तथा
अथवा द्वादशं हस्तं तस्मान्नयूनं न कारयेत्  २८
एकादशत्रिहस्तान्तं प्रायश्चित्ते च संग्रहेत्
हस्तमात्रं खनेद्भूमिं वीक्षेत देशिकोत्तमः  २९
सुवर्णं रजतं ताम्ररत्नाद्यादि च द्रव्यकम्
वापीकूपतटाकं चापीष्टिका शैलमेव च  ३०

दृश्यं चेच्छुभदं प्रोक्तमशुभं च ततः शृणु
वृश्चिकं सर्पमण्डूकं वल्मीकं तु पिपीलिका  ३१
अङ्गारनखभस्मानि रोमास्थिचर्मकं तथा
अन्येषां विषजन्तूनां दर्शनं चाशुभावहम्  ३२
वृश्चिकादीन्परित्यज्य पुनर्वास्तुं समाचरेत्
अन्यथा शिवतुल्योऽपि विघ्नैरेवाभिभूयते  ३३
मृत्तिकां पूरयेत्पश्चान्नव रत्नानि विन्यसेत्
तद्वेद्याश्चाप्यधोभागे रत्नन्यासं च कारयेत्  ३४
समीकृत्योपलिप्याथ दर्पणोदरसंनिभम्
तस्योर्ध्वे सूत्रविन्यासमुत्तमादिक्रमेण तु  ३५
शालापञ्चविधं सूत्रं रुद्रं विष्णुं च ब्रह्मकम्
मनुं रविं च पञ्चैतत्सूत्रभेदाः प्रकीर्तिताः  ३६
चतुश्चत्वारिंशतिश्च रुद्रसूत्रमिति स्मृतम्
चतुस्त्रिंशतिसूत्रं च विष्णुसूत्रं प्रकीर्तितम्  ३७
चतुर्विंशतिसूत्रं च ब्रह्मसूत्रमुदाहृतम्
चतुर्दशं च सूत्रं च मनुसूत्रं प्रकीर्तितम्  ३८
द्वादशं रविसूत्रं च पञ्चसूत्रं क्रमात्कुरु
अथातः संप्रवक्ष्यामि रुद्रसूत्रपदक्रमम्  ३९
मध्ये शिवपदं प्रोक्तमेकं वै चतुरश्रकम्
परितस्तस्य चाष्टासु पदान्यष्टौ प्रकल्पयेत्  ४०
एतच्छक्तिपदं नाम समदीर्घायतं शुभम्
परितस्तस्य वै कुर्यात्पदानां षोडशं गुरो  ४१
एतद्बिन्दुपदं नाम्ना प्रोक्तं देशिकसत्तम
परितश्च ततः कुर्यात्पदानां च चतुर्वसु  ४३

सदाशिवपदं प्रोक्तं शृणु तत्परितस्तथा
चत्वारिंशत्पदेनैव माहेश्वरमुदाहृतम् ४४
अष्टाचत्वारिंशकैश्च पूर्ववत्परितः कृतैः
अष्टविद्येश्वराणां च पदं प्रोक्तं गुरूत्तम ४५
षट्पञ्चाशत्पदं प्रोक्तमैशं वै परिकीर्तितम्
चतुष्षष्टिपदैस्तद्वच्छुद्धमायापदं स्मृतम् ४६
द्विसप्ततिपदैश्चैव मान्त्रं पदमुदाहृतम्
तथाशीत्या पदेनैव वर्णपदमुदीरितम् ४७
अष्टाशीतिपदेनैव पदं गणपदं स्मृतम्
षण्णवत्या पदैः कुर्यात्प्रकृतेः पदमुत्तमम् ४८
तथा कालपदं प्रोक्तं चतुर्भिः सहितं शतम्
कलापदं ततः कुर्याच्छतं द्वादशसंयुतम् ४९
विद्यापदं ततः कुर्याच्छतं विंशतिमिश्रितम्
पदं च वैष्णवं प्रोक्तमष्टाविंशतिकैः शतम् ५०
विद्यापदं ततः कुर्याच्छतं विंशति मिश्रितम्
पदं च वैष्णवं प्रोक्तमष्टा विंशतिकैः शतम् ५१
ततोऽविद्यापदं प्रोक्तं पदैः षट्त्रिंशकैः शतम्
चतुश्चत्वारिंशकैश्च शतं च विकृतिर्भवेत् ५१
द्विपञ्चाशैः शतं ब्राह्मं पदं प्रोक्तं गुरूत्तम
षष्ट्या शतैः पदैः कुर्याद् दैवं देशिकसत्तम ५२
अष्टषष्ट्या शतं प्रोक्तं राक्षसं गुरुसत्तम
प्रधानकुम्भस्थानं हि पदं शैवं समीरितम् ५३
शक्तेः पदे न्यसेत्पद्मं नादस्य परितः पदे
चतुष्कोणे चतुस्तम्भान् निखनेच्छेषमध्यके ५४

अष्टमङ्गलकान्यन्तःसंचारं द्वादशे पदे
बिन्दोः सदाशिवस्यापि पदयोरन्तरे गुरो ५५
कुण्डं कुर्याद् विधानेन रुदिरं परितः क्रमात्
माहेश्वरपदे चैव बहिःसंचारमीरितम् ५६
अष्टविद्येश्वरस्याथ पदेषु परितो गुरो
पदमात्रप्रमाणेन पदार्धमिततोऽथवा ५७
भित्तिं प्रकल्पयेत्सम्यगुत्सेधाद् द्वादशाङ्गुलम्
पूर्वादिषु दिक्षु मध्ये पदं च द्विपदं क्रमात् ५८
द्वारार्थं कल्पयेत्तत्र चतुष्कोणेषु देशिक
निखनेच्चतुरः स्तम्भान् तथा द्वारेषु पार्श्वतः ५९
द्विद्वि स्थूणांश्च निखनेत् सुदृढं च मनोहरम्
द्वादशानामधस्तेषां स्तम्भानां च ततः शृणु ६०
दशहस्तसमुत्सेधमुत्तमं परिकीर्तितम्
सप्तहस्तं मध्यमं स्यादधमं पञ्चहस्तकम् ६१
सप्तहस्तमितोत्सेधं तदर्धायामसंयुतम्
द्वारमुत्तममेतद्वै रुचिरं साधु कल्पितम् ६२
पञ्चहस्तमितोत्सेधं तदर्धायामसंमितम्
द्वारेषु मध्यमं द्वारं तदन्यदधमं भवेत् ६३
द्वारस्योर्ध्वे द्विपार्श्वेऽपि द्विशूलं परिकल्पयेत्
द्वारस्योर्ध्वे तथा मध्ये शूलमेकं प्रकल्पयेत् ६४
अष्टविद्येश्वरान्कुम्भान्स्थापयेद् भित्तिमस्तके
भित्तौ च परितश्चाष्टविद्येश्वरघटान्न्यसेत् ६५
तथा चैशं पदं चान्तःसंचारपदमीरितम्
शुद्धमायापदस्यापि तथा मन्त्रपदस्य च ६६

मध्ये कुराडं विधानेन कारयेद् गुरुपुङ्गव
ततो वर्णपदं प्रोक्तं बहिःसंचारसंज्ञिकम् ६७
तृतीयावृतिके भित्तिं पदं गणमुदाहृतम्
पदमात्रं पदार्धं वा भित्तिं सम्यक्प्रकल्पयेत् ६८
द्वादशाङ्गुलकोत्सेधां रुचिरां दृढसंधिकम्
पूर्वादिषु चतुर्दिक्षु मध्ये च द्विपदं क्रमात् ६९
द्वारार्थं कल्पयेद्वाथ चतुष्कोणेषु देशिक
निखनेच्चतुरः स्तम्भान् द्वारेषु च द्विपार्श्वयोः ७०
द्विद्विस्तम्भांश्च निखनेद् दृढं च रुचिरं गुरो
द्वितीयावृतिकोणस्थस्तम्भे रेखाश्रके पदे ७१
स्थापयेत्स्तम्भमेकैकं क्रमादष्टौ गुरूत्तम
तृतीयावरणे चेत्थं स्तम्भानां विंशतिर्मता ७२
भित्तौ च परितश्चाष्टघटान् संस्थापयेद्गुरो
नंद्यादीनष्टकान् स्थाप्य भित्तिं च परितः क्रमात् ७३
प्रकृतेः पदमन्तस्थसंचारपदमीरितम्
कालाख्यस्य पदस्यापि कलायाश्चैव मध्यतः ७४
यथाविधि समुद्दिष्टं कुराडं साधु प्रकल्पयेत्
विद्यापदं ततश्चैव बहिःसंचारमीरितम् ७५
ततो विष्णुपदं प्रोक्तं चतुर्थावृतिभित्तिकम्
पूर्ववच्चतुरः स्तम्भान् चतुष्कोणेषु कारयेत् ७६
पूर्ववद् द्वाररेखायां कुर्यात्तु द्विपदं तथा
तृतीयावरणस्थानं कोणमध्यमवर्तिनाम् ७७
स्तम्भांश्च निखनेत्स्तम्भांस्तथा रेखापदे दृढम्
इन्द्रादीशान्तकलशान् परितो भित्तिमस्तके ७८

तत्तद्दिक्षु न्यसेदेवं क्रमेण गुरुसत्तम
ईशानदक्षिणस्तम्भपार्श्वे ब्रह्मघटं न्यसेत्  ७९
निर्ऋत्युत्तरतः स्तम्भपार्श्वे विष्णुघटं न्यसेत्
ततोऽविद्यापदं प्रोक्तमन्तःसंचारसंज्ञया  ८०
विकृतेर्ब्रह्मणश्चैव मध्ये कुण्डं प्रकल्पयेत्
ततो दैवं पदं प्रोक्तं बहिःसंचारमानतः  ८१
ततो वै राक्षसं प्रोक्तं पञ्चमावृतिभित्तिकम्
पूर्ववद् द्वाररेखायां द्वारदेशं प्रकल्पयेत्  ८२
चतुःकोणे चतुःस्तम्भान्निखनेद् दृढमेव हि
पूर्वोक्तवच्चतुर्द्वारि द्विर्द्विःस्तम्भं प्रकल्पयेत्  ८३
चतुर्थावरणे खातः स्तम्भरेखानुसारतः
षट्षट्स्तम्भान् चतुःपार्श्वे निखनेद्गुरुपुङ्गव  ८४
पुरन्दरादिविष्णवन्तदेवानामायुधानि हि
तत्तद्रेखानुसारेण पञ्चमावृतिभित्तिके  ८५
स्तम्भपार्श्वे स्थापयेत् सादरं गुरुसत्तम
प्रथमावरणे प्रोक्तं स्तम्भानां तु चतुष्टयम्  ८६
द्वितीयावरणं चैव द्वादशस्तम्भमण्डितम्
तृतीयावरणं चैव विंशतिस्तम्भसंकुलम्  ८७
चतुर्थावरणस्थानामष्टाविंशतिरीरिता
पञ्चमावरणं प्रोक्तं षट्त्रिंशत्स्तम्भमण्डितम्  ८८
पदे चैकोनपञ्चाशदष्टशतसहस्रके
पञ्चावरणसंयुक्तं स्तम्भानां शतमीरितम्  ८९
रुद्रसूत्रक्रमं प्रोक्तं विष्णुसूत्रं ततः शृणु
विष्णुसूत्रे क्रमात्प्रोक्तं पदानां तु वसुद्वयम्  ९०

शैवं पदं समारभ्य सर्वं विष्णुपदान्ततः
पूर्वोक्तवत् प्रकर्तव्यं पदावरणपूर्वकम् ९१
रुद्रसूत्राद् विष्णुसूत्रे भेदमेतद् निबोधताम्
अविद्यादिराक्षसान्तैः पञ्चमावरणं पुरा ९२
रुद्रसूत्रे किल प्रोक्तं विष्णुसूत्रे न कल्पयेत्
चतुष्टयैरावरणैः कल्पितं वैष्णवं गुरो ९३
पञ्चमावृतिके प्रोक्तान्यायुधानि क्रमेण हि
तत्तद्देवघटांश्चैव युक्त्या स्थाने प्रकल्पयेत् ९४
चतुष्षष्टिः समाख्याताः स्तम्भानामत्र देशिक
त्रयस्त्रिंशत्पदं प्रोक्तं दशसप्तावृतौ पदे ९५
नवाशीतिसहस्रं च पदमत्र समीरितम्
विष्णुसूत्रक्रमं प्रोक्तं ब्रह्मसूत्रं ततः शृणु ९६
ब्रह्मसूत्रे किल प्रोक्तं पदमेकादशं गुरो
शैवं पदं समारभ्य सर्वं गणपदावधि ९७
पूर्वोक्तविधिना कुर्यात् पदावरणपूर्वकम्
विष्णुसूत्राद् ब्रह्मसूत्रे भेदं शृणु गुरूत्तम ९८
प्रकृतेः पदमारभ्य ततो विष्णुपदान्तकम्
चतुर्थावरणं प्रोक्तं ब्रह्मसूत्रे न कारयेत् ९९
आवृतित्रितयाद्ब्रह्मसूत्रमेतत्प्रकीर्तितम्
पूर्ववत्कल्पिते चात्रावरणेऽथ तृतीयके १००
विष्णुसूत्रान्तिमे न्यस्तं सर्वमावरणे गुरो
तृतीयावरणे ह्येवं तत्तद्देशानुसारतः १०१
स्तम्भपार्श्वे भित्तिशीर्षे स्थापयेद्धरिमीश्वरम्
नवविंशतिभिश्चैव तथा पञ्चशतैः पदैः १०२

त्रयस्त्रिंशत्स्तम्भकैश्च त्रयोविंशतिभिः पदैः
द्वादशावृतिपादैश्च ब्रह्मसूत्रं प्रकीर्तितम्  १०३
मनुसूत्रविधिं वक्ष्ये सादरं शृणु देशिक
मानवे हि किल प्रोक्तं पदानां सप्तकं क्रमात्  १०४
शैवं पदं समारभ्य विद्येश्वरपदावधि
सर्वं पूर्वोक्तविधिना कार्यं देशिकसत्तम  १०५
आवृतेर्द्वितयं प्रोक्तं मध्ये शैवपदे तथा
प्रधानकुम्भं विन्यस्य तस्य वामे तु वर्धनीम्  १०६
बाह्ये शक्तिपदे चैव विद्येश्वरघटानपि
ब्रह्मसूत्रोक्तविधिना तृतीयेऽथ निवेशयेत्  १०७
शस्त्रेन्द्रनन्दिकुम्भादिस्थापनं कारयेदिह
तत्तद्देशे क्रमेणैव तत्तद्दक्षिणपार्श्वतः  १०८
अथवान्यप्रकारेण मनुसूत्रविधिं शृणु
चतुर्दशसमं सूत्रं प्रागुदक्च विलेखयेत्  १०९
मध्ये नवपदां वेदीं तद्बाह्ये षोडशं पदम्  ११०
तद्बाह्ये च चतुर्विंशत्पदं चेति प्रकीर्तितम्
द्वात्रिंशच्च पदं प्रोक्तं वेदिकायास्तृतीयके  १११
चत्वारिंशत्पदं प्रोक्तं वेदिकायाश्चतुर्थके
अष्टाचत्वारिंशतिश्च पञ्चमावरणे पदम्  ११२
पञ्चमावरणस्थानं परितो भित्तिकं कुरु
द्वारार्थं त्रिपदं त्यज्य चतुर्दिक्षु विशेषतः  ११३
चतुर्दिक्षु चतुर्द्वारं कल्पयेत्तादृशं गुरो
शेषं भित्त्याकृतिः प्रोक्तं पदायामं प्रकल्पयेत्  ११४
पदार्धमथवा कुर्याद् वस्त्राङ्गुलसमुन्नतिम्

वेदिभित्त्यन्तराले तु तुरीयपदमध्यके ११५
कुण्डानि परितः कुर्यात्पूर्वोक्तविधिमार्गतः
किंचिदीशानमाश्रित्य प्रधानं च विशेषतः ११६
वामभागे नवाङ्गुल्यं त्यक्त्वा कुण्डस्य कल्पनम्
अष्टाश्रं च तथा प्रोक्तमीशानाश्रितदृष्टिकम् ११७
ईशानदृष्टिहीनं चेत्कर्ता कर्म च नश्यति
तस्मात्सर्वप्रयत्नेन उक्तमार्गेण कारयेत् ११८
मध्ये शिवपदं विद्याद् विद्येशादीन् ततः परम्
तद्बाह्ये चैशकं प्रोक्तं शुद्धमायापदं ततः ११९
तद्बाह्ये च गणं विद्यात्ततो दैवपदं क्रमात्
अशुद्धाख्ये तथा मायापदे बाह्ये प्रकीर्तितम् १२०
मध्ये च शिवकुम्भं च वर्धनीं तस्य वामके
तद्बाह्ये चाष्टविद्येशान् स्थापयेद् गुरुसत्तम १२१
ततश्चैशे पदे कुर्याच्चतुष्कोणेषु सादरम्
चतुःस्तम्भमिदं ह्यन्तःसंचारपदनामकम् १२२
शुद्धमायापदस्यापि तथा गणपदस्य च
मध्ये कुण्डानि वै कुर्यादागमोद्दिष्टमार्गतः १२३
तद्बाह्ये बाह्यसंचारपदं चेति प्रकीर्तितम्
अशुद्धे द्वादशस्तम्भं तोरणं च घटस्थितिः १२४
मनुसूत्रमिदं प्रोक्तं रविसूत्रं ततः शृणु
अथातः संप्रवक्ष्यामि रविसूत्रं विधानतः १२५
विधानं यागशालायाः शृणु देशिकपुङ्गव
प्रागुदक्समरेखां वै कुर्याद् द्वादशसूत्रकम् १२६
एकविंशाधिकशतं पदमत्र समीहितम्

मध्ये ब्रह्मपदं चैकं प्रोक्तं तत्परितो ह्यथ १२७
अष्टविद्येश्वरस्थानं पदान्यष्टौ हि दैविकम्
पैशाचं च ततः प्रोक्तं पदं षोडशसंमितम् १२८
ततो मानुषमाख्यातं चतुर्विंशतिकैः पदैः
ततोऽशुद्धं मायिकं च द्वात्रिंशत्पदमण्डितम् १२९
चत्वारिंशत्पदं प्रोक्तं राक्षसे तु पदे गुरो
ब्राह्मे तु कल्पयेत्कुम्भं प्रधानं वर्धनीं तथा १३०
तद्बाह्ये चाष्टविद्येशान्स्थापयेद्दैविके पदे
पैशाचे तु ततो बाह्ये चान्तःसंचारसंज्ञके १३१
चतुःस्तम्भांश्चतुष्कोणे कारयेच्चाष्टमङ्गलम्
ततो मानुष्यके चैव पदे कुण्डानि कल्पयेत् १३२
प्रतिष्ठादौ क्रियाकाले मानुषं च परित्यजेत्
ततोऽशुद्धं पदं प्रोक्तं बहिःसंचारनामतः १३३
राक्षसे तु पदे कुर्यात्परितो भित्तिमण्डलम्
पदस्यार्धप्रमाणेन परितः सादरेण हि १३४
सप्ताङ्गुलसमुत्सेधां भित्तिं साधु निवेशयेत्
पूर्वादिषु चतुर्दिक्षु मध्ये सार्धद्वयं पदम् १३५
द्वारार्थं कल्पयेत्तत्र चतुष्कोणेषु सादरम्
निखनेच्चतुरः स्तम्भांस्तथा द्वारेषु पार्श्वतः १३६
द्विद्विस्तम्भांश्च निखनेद्दृढं देशिकपुङ्गव
नंद्यादीन्यष्टकुम्भांश्च इन्द्रादीनि तथैव च १३७
वज्राद्यायुधजालानि भित्त्यूर्ध्वे परितः क्रमात्
स्थापयेत्तु विशेषेण पूजयित्वा यथाविधि १३८
षोडशस्तम्भसंयुक्तं षड्भागसहितं तथा

रविसूत्रं समाख्यातं कल्पयेद्देशिकोत्तम १३९
स्थापने शान्तिहोमे च प्रायश्चित्ते तथैव च
दीक्षायामुत्सवे चैव रविसूत्रं प्रकीर्तितम् १४०
प्रतिष्ठादिषु कालेषु रविसूत्रं विवर्जयेत्
अन्यथा कुरुते मोहाद्राजा राष्ट्रस्य दोषकृत् १४१
तस्मात्सर्वप्रयत्नेन उक्तमार्गेण कारयेत्
त्रयस्त्रिंशतिकुण्डानि चोत्तमं चेति कीर्तितम् १४२
पञ्चविंशतिकुण्डानि मध्यमं च प्रकीर्तितम्
दशसप्त च कुण्डान्यप्यधमं च प्रकीर्तितम् १४३
अधमाधममेवोक्तं नवकुण्डस्य कल्पने
त्रयस्त्रिंशतिकुण्डानि रुद्रसूत्रे प्रकल्पयेत् १४४
पञ्चविंशतिकुण्डानि विष्णुसूत्रे सुयोजयेत्
दशसप्तककुण्डानि ब्रह्मसूत्रे प्रकल्पयेत् १४५
नवकुण्डं मनोःसूत्रे कल्पयेद् देशिकोत्तम
दीक्षायामुत्सवे चैव प्रायश्चित्तादिकर्मणि १४६
रविसूत्रं प्रकर्तव्यं प्रतिष्ठादौ न कारयेत्
पञ्चाग्न्यायतनं कुण्डमेकाग्न्यातनं तु वा १४७
प्रायश्चित्तेषु कर्तव्यं प्रतिष्ठादौ विवर्जयेत्
अनावर्ते तथावर्ते पुनरावर्तकेऽपि च १४८
उत्तमं मध्यमं चैवाप्यधमं चाधमाधमम्
चतुर्भेदयुतान्कुण्डान्कल्पयेत्कल्पवित्तमः १४९
वेदिकाङ्गं प्रकल्प्याथ समायतसमुच्छ्रयम् १५०
प्रतिष्ठादौ प्रकल्पेत दीक्षाद्युत्सवकर्मणि
विस्तारार्धसमोत्सेधं वेदिकाङ्गं सुनिर्मितम् १५१

प्रायश्चित्तादिके चैव वास्तुशान्तौ क्रमाच्छृणु
उत्सेधवेदभागं चाप्येकभागेन कल्पितम्  १५२
तस्मात्सर्वप्रयत्नेनाप्युक्तमार्गेण कारयेत्
अन्यथा कुरुते मोहात्कर्ता कर्म च नश्यति  १५३
वेद्याश्च परितश्चापि तुरीयपदमध्यमे
पूर्वादीशानपर्यन्तमष्टौ कुण्डान् क्रमाद्गुरो  १५४
पदैकांशे मध्यमे च कल्पयेद्गुरुपुङ्गव
इन्द्रईशानयोर्मध्ये वृत्तकुण्डं प्रधानकम्  १५५
चतुष्पदानां बाह्ये तु पदैके भित्तिकं कुरु
पदार्धे चाथवा कुर्याद् भित्तिं चैव विशेषतः  १५६
तद्बाह्ये तु तुरीये च पदमध्ये तथा पुनः
कुण्डान्यष्टौ प्रकल्प्याथ तद्बाह्ये भित्तिकं क्रमात्  १५७
तद्बाह्ये चाष्टकुण्डं च बाह्ये भित्त्यावृतं कुरु
तद्बाह्ये चाष्टकुण्डानि बाह्ये भित्तिं प्रकल्पयेत्  १५८
वेद्यादिबाह्यभित्त्यन्तं पञ्चावरणकल्पितम्
भित्तेश्च मध्यभागे तु चतुर्द्वारं पृथक् पृथक्  १५९
पञ्चमावरणस्यान्तश्चतुर्थावरणस्थलम्
उत्सेधं द्वादशाङ्गुल्यं तस्यान्ते च तृतीयके  १६०
उसेधं च तथा प्रोक्तं द्वितीयावरणे तथा
प्रथमावरणे तद्वदौन्नत्यं च प्रकल्पयेत्  १६१
अथातः संप्रवक्ष्यामि वेदिकालक्षणं शृणु
अश्रं वा वृत्तमेवाथ वस्वश्रं च षडश्रकम्  १६२
चतुर्भेदैश्च विधिवद्वेदिकाङ्गं प्रकल्पयेत्
अष्टाश्रं शयनं प्रोक्तमश्रवेदिस्थितिर्भवेत्  १६३

षडश्रं यानमेवोक्तमासनं वर्तुलं स्मृतम्
अश्रपीठेऽश्रवेदिश्च वर्तुले वर्तुलं शुभम् १६४
अष्टाश्रे पद्मपीठं च त्र्यश्रे चैव षडश्रकम्
पिण्डिकाङ्गं प्रकल्पेत नान्यथा परिकल्पयेत् १६५
अधःपट्टे कुर्ममूर्तिं मध्यपट्टे तु धारिकाम्
भुजाष्टकमतो वापि शुद्धमायास्वरूपकम् १६६
तस्योर्ध्वे चाष्टनागं चाप्यूर्ध्वपट्टे तु केसरी
कारयेत्कुम्भकण्ठे च धर्मादीनां प्रकल्पयेत् १६७
युगानामूर्ध्वपट्टे च तदूर्ध्वे जघनत्रयम्
तथोर्ध्वे पङ्कजं कल्प्यं मध्यदेशे शिवासनम् १६८
वेदिकोत्सेधसूत्रं चाप्यष्टाचत्वारि संख्यया
विभजेद्वेदिकावर्गांस्तत्तद्भागान्क्रमाच्छृणु १६९
द्व्यांशमधःपट्टी च दलवेदी षडंशकम्
एकांशमूर्ध्वपट्टी च अनुकण्ठं त्रयांशकम् १७०
इत्येवं वेदिकावर्गाः कर्णवर्गाकृतिं शृणु
कर्णाविस्तारसूत्रं च चतुर्भागं प्रकल्पयेत् १७१
एकांशं वेदसंख्यां च विभजेत्कर्णकल्पने
द्विकर्णं मध्यदेशे तु द्विकर्णं कोणदेशयोः १७२
अन्यांशमन्तराले च कारयेत्कल्पवित्तमः
एवं कर्णाकृतिः प्रोक्ताः कपोताङ्गं ततः शृणु १७३
तत्क्षेत्रे कर्णवत्कृत्वा नासिकाङ्गानि कारयेत्
कर्णोर्ध्वे नासिकां कृत्वा ह्यन्यान्युक्त्या प्रकल्पयेत् १७४
इत्येवं वेदिकावर्गमश्रं वा वृत्तमेव वा
अन्यच्च वेदिकारूपं कल्पयेत्कल्पवित्तमः १७५

अथवान्यप्रकारेण वेदिकाङ्गं शृणुष्व हि
विस्तारस्य समोत्सेधं कल्पयेत्तु विशेषतः १७६
वेदिकामध्यभागे तु रत्निमात्रं समं भवेत्
विस्तारमिति विज्ञेयमुत्सेधं च षडङ्गुलम् १७७
दर्पणोदरसंकाशमुपवेदीं प्रकल्पयेत्
पूर्वे तु चतुरश्रं स्यादाग्नेय्यां वै भगाकृति १७८
दक्षिणे चार्धचन्द्रं च नैर्ऋते तु त्रिकोणकम्
पश्चिमे वृत्तकुण्डं च वायुदेशे षडश्रकम् १७९
उत्तरे पद्मकुण्डं च ईशाने चाष्टकोणकम्
इन्द्रईशानयोर्मध्ये वृत्तकुण्डं प्रधानकम् १८०
चतुरश्रचतुष्कं च चतुष्टयभगाकृति
अर्धचन्द्रचतुष्कं च त्रिकोणचतुष्कं भवेत् १८१
चतुर्वृत्तं समालिख्य षडश्रस्य चतुष्टयम्
पद्मकुण्डचतुष्कं च अष्टाश्रस्य चतुष्टयम् १८२
एवंविधं त्रयस्त्रिंशत्कुण्डानि परिकल्पयेत्
चतुरश्रत्रयं चैव त्रयं पिप्पलपत्रवत् १८३
अर्धचन्द्रत्रयं चैव त्रिकोणं च तथा भवेत्
वृत्तत्रयं त्रयं चापि षडश्रस्य प्रकल्पयेत् १८४
पद्मकुण्डत्रयं प्रोक्तमष्टाश्रं च तथा भवेत्
प्रधानकुण्डसहितं पञ्चविंशतिकुण्डकम् १८५
द्विद्विकुण्डं प्रकल्प्याथ प्रधानकुण्डसंयुतम्
दश सप्त च कुण्डानि कल्पयेद्देशिकोत्तमः १८६
पृथिवी चतुरश्रं च यजमानं भगाकृति
आप्यस्थानं चार्धचन्द्रं तेजःस्थानं त्रिकोणकम् १८७

वृत्ताकारं तथाकाशं वायुतत्त्वं षडश्रकम्
सौरं पद्माकृति प्रोक्तं सौम्यमष्टाश्रकं तथा १८८
प्रधानं च चिदाकाशं शिवस्थानं प्रकीर्तितम्
तन्वष्टकं चाष्टकुण्डमङ्गरूपेण कीर्तितम् १८९
चिदाकाशस्वरूपं च कुण्डमङ्गीति कथ्यते
अङ्गाङ्गिभावभेदेन कुण्डं तन्नवधोच्यते १९०
मूर्तिं मूर्तीश्वरं चैव ह्यष्टकुण्डेषु होमयेत्
प्रधाने तु शिवं ध्यात्वा पराशक्त्यादिभिः क्रमात् १९१
विद्यादेहं च नेत्रं च अस्त्रं चैव प्रधानके
तद्बाह्ये चाष्टकुण्डेषु तथा मूर्तीश्वरीं क्रमात् १९२
तत्त्वं तत्त्वेश्वरं चैव तद्बाह्ये विन्यसेत्क्रमात्
तत्त्वेश्वरीं ततो बाह्ये विन्यसेत्तु विशेषतः १९३
त्रयस्त्रिंशत्कुण्डकेषु तत्तन्मूर्तिं हुनेत्क्रमात्
मूर्तीश्वरं च मूर्तिं च प्रथमावरणे न्यसेत् १९४
मूर्तीश्वरीं तथा बाह्ये तद्बाह्ये तत्त्वकं तथा
तत्त्वेश्वरं च तत्त्वेशीं विन्यसेत्तु विशेषतः १९५
पञ्चविंशतिकुण्डेषु तत्तन्मूर्तिं च विन्यसेत्
मूर्तीश्वरीं च मूर्तीशं मूर्तिं चैव क्रमान्न्यसेत् १९६
प्रथमावरणे न्यस्त्वा तत्त्वादींश्च द्वितीयके
कुण्डेषु सप्तदशसु तत्तन्मूर्तिं विभावयेत् १९७
मूर्तीश्वरीं च मूर्तीशं मूर्तितत्त्वं तथैशकम्
तत्त्वेश्वरीं षडेतानि नवकुण्डेषु होमयेत् १९८
पृथिव्यादि यजमानान्तं तत्त्वं चेति प्रकीर्तितम्
भवादि च महेशान्तं तत्त्वेश्वरमुदाहृतम् १९९

वामादि च दमन्यन्तं तत्त्वेश्वर्या उदाहृतम्
पृथिवीमूर्तिमारभ्य यजमानान्ततो गुरो २००
मूर्त्यष्टकमिति ख्यातं मूर्तीशं च ततः शृणु
पुरुषादि समारभ्य कवचान्तं क्रमाच्छृणु २०१
मूर्तीशमिति विख्यातं ततो मूर्तीश्वरीं शृणु
धारिकादि समारभ्य विभ्व्यन्तं च तथेश्वरीम् २०२
पूर्वे तु पृथिवीस्थानमाग्नेय्यां यजमानकम्
जीवस्थानमिति ख्यातं तदूर्ध्वे चाम्बुतत्त्वकम् २०३
त्रिकोणे चाग्नितत्त्वं च तत्परं वायुतत्त्वकम्
जडाकाशं च तत्पश्चात् सौरतत्त्वं ततः परम् २०४
तत्परं सौम्यमित्युक्तं चिदाकाशं प्रधानकम्
शिवतत्त्वमिति ख्यातमीशानादीन्क्रमाद्धुनेत् २०५
शिवतत्त्वं महादेवं तत्त्वेशीं च मनोन्मनीम्
चिदाकाशं च मूर्तिं च ईशानं मूर्तिमीशकम् २०६
विद्यादेहं च नेत्रं चाप्यस्त्रं शक्तिः शिवस्तथा
तत्त्वं तत्त्वेशतत्त्वेशीं मूर्तिमूर्तीशकं भवेत् २०७
मूर्तीशांश्च पराशक्तिं सर्वव्यापकमीश्वरम्
विद्यादेहं च नेत्रं च प्रधाने विन्यसेत्क्रमात् २०८
पृथिवीं पुरुषं चैव ऋम्बुस्थानमघोरकम्
तेजःस्थाने शिखां चैव कवचं वायुतत्त्वके २०९
सद्योजातं तथाकाशे सौरे वै वामदेवकम्
शिरश्चैव तथा सौम्ये हृदयं यजमानके २१०
ईशानं च चिदाकाशे नवाग्निं च विभाजितम्
पृथिवी वै समारभ्य सौम्यान्तं व्यापकं तथा २११

व्याप्यव्यापकभेदेन यजमानमिति स्मृतम्
शिरोर्ध्वे हृदयं न्यस्त्वा हृदयोर्ध्वे शिवं न्यसेत् २१२
स्पर्शाहुतिविधानेन तत्तन्मूर्तिं च विन्यसेत्
पृथिवीं वै समारभ्य अग्न्यन्तं पिण्डवत्तथा २१३
आकाशं व्यापकं प्रोक्तं तस्योर्ध्वे सर्वव्यापकम्
सर्वभूतस्य चाकाशमाधारमिति कीर्तितम् २१४
आकाशस्याश्रितं प्रोक्तं वायुतत्त्वं प्रकीर्तितम्
एवमेव प्रकारेण कुण्डसंयोजनं परम् २१५
पद्मकुण्डं द्विधा प्रोक्तं बाह्याभ्यन्तरभेदतः
बहिर्बिसनिकं कुण्डं प्रतिष्ठादौ प्रकल्पयेत् २१६
अन्तर्बिसिनिकं कुण्डं क्षुद्रकर्मसु योजयेत्
पञ्चाश्रं चैव सप्ताश्रं नवाश्रं च दशाश्रकम् २१७
एकादशाश्रकं चैव द्वादशाश्रादिकं क्रमात्
प्रतिष्ठादौ वर्जनीयं कृतं चेदशुभावहम् २१८
क्षुद्रकर्मसु कर्तव्यमन्यस्मिन्न कदाचन
अष्टाश्रं च षडश्रं च त्रिकोणं च क्रमाच्छृणु २१९
कोणं बाह्ये प्रकर्तव्यमन्ते च परिवर्जयेत्
प्रायश्चित्ते तथा दीक्षापवित्रारोहणेऽपि च २२०
अन्तःकोणं प्रकर्तव्यं प्रतिष्ठादौ विवर्जयेत्
व्यामोहात्कुरुते मर्त्यो राजराष्ट्रं विनश्यति २२१
तस्मात्सर्वप्रयत्नेन चोक्तमार्गेण कारयेत्
शिरोहृदयं नाभिश्च कण्ठयोनित्रिमेखलाः २२२
अष्टौ कुण्डाकृतिः सा तु अष्टमूर्तिस्वरूपकम्
एकभागविहीनं चेत् तत्कुण्डं परिवर्जयेत् २२३

यावद्विस्तारकं कुण्डं तावत्खातं प्रकीर्तितम्
कुण्डखातं द्विधा प्रोक्तं भूमेरधःप्रदेशके  २२४
चतुरश्रं समं खातं तस्योर्ध्वे च नवांशकम्
मेखलात्रितयं कृत्वा ह्यधस्ताच्चतुरङ्गुलम्  २२५
मध्ये च त्र्यङ्गुलं प्रोक्तमग्रे चैव द्व्याङ्गुलम्
प्रतिष्ठादौ प्रकर्तव्यं दीक्षायामुत्सवेऽपि च  २२६
प्रायश्चित्तादिकार्ये च पवित्रारोहणेऽपि च
खातं पक्षाङ्गुलं प्रोक्तं मेखला च नवांशकम्  २२७
चतुर्विंशत्यङ्गुलं च कुण्डखातं प्रकल्पयेत्
ऊर्ध्वे च चतुरङ्गुल्यं मध्ये चैव त्रयाङ्गुलम्  २२८
अधस्ताद् द्व्यङ्गुलं प्रोक्तं मेखलाङ्गं सुनिर्मितम्
दीक्षादौ च प्रकर्तव्यं प्रतिष्ठादौ न कारयेत्  २२९
कुण्डस्याभ्यन्तरे देशे कुण्डार्धं च प्रमाणतः
तद्भागं भूतसंख्याभिः कल्पयेत्कल्पवित्तमः  २३०
सार्धैकं कुण्डमध्ये च कर्णिकाकारकल्पनम्
भूताङ्गुलसमोत्सेधं कर्णिकां च प्रकल्पयेत्  २३१
सार्धद्व्यं दलं चैव वेदाङ्गुलसमोन्नतम्
दलाष्टकं प्रकल्प्याथ कर्णिकां च समायतम्  २३२
हृदयं चेति विख्यातं तद्बाह्ये परितः क्रमात्
शेषमेकाङ्गुलं वृत्तं त्रयाङ्गुलसमोन्नतम्  २३३
नाभिरेवं समाख्याता प्रतिष्ठादौ सुनिर्मितम्
चतुर्विंशतिभागं च कुण्डगर्तं विभज्य च  २३४
त्रयोविंशत्यङ्गुलोर्ध्वे चैकभागं च कर्णकम्
कङ्कणाकारकं प्रोक्तं कुण्डकर्णं प्रकल्पयेत्  २३५

कर्णस्योर्ध्वे प्रकर्तव्यं मेखलां च विशेषतः
ऊर्ध्वे च मेखलादूर्ध्वे पृष्ठभागं प्रकल्पितम् २३६
कर्णस्याधःप्रदेशान्तं द्व्याङ्गुलसमश्रकम्
नवाङ्गुलसुविस्तारं द्व्याङ्गुलसमोन्नतम् २३७
त्रयोदशसमाङ्गुल्यं दीर्घं चेति प्रकीर्तितम्
अश्वत्थपत्रसदृशं योनिं चैव प्रकल्पयेत् २३८
एवमेव क्रमेणाथ प्रतिष्ठादौ सुनिर्मितम्
दीक्षायां काम्यकर्मादौ पक्षाङ्गुलमथोर्ध्वके २३९
कर्णाकृतिं प्रकल्प्याथ तस्योर्ध्वे च त्रिमेखलाम्
कुण्डस्याभ्यन्तरे देशे कुण्डार्धं च प्रमाणतः २४०
पद्माकारं यथा नाभिं कुर्यात्कुण्डस्य मध्यमे
द्विभागं दलमानं स्यादेकभागं तु कर्णिकाम् २४१
त्र्याङ्गुलसमोन्नत्यं कर्णिकाङ्गं सुनिर्मितम्
उन्नतं च द्व्याङ्गुल्यं दलानि परिकल्पयेत् २४२
हृदयं चेति विख्यातं शेषं वृत्ताकृतिर्भवेत्
नाभिश्चेति समाख्यातः कुण्डस्याभ्यन्तरे तथा २४३
ऊर्ध्वे च मेखलादूर्ध्वे पृष्ठभागं प्रकल्पितम्
कर्णस्याभ्यन्तरे देशे चैकांशमग्रसंयुतम् २४४
कर्णान्तमथवा कार्यं पृष्ठं वस्वङ्गुलायतम्
द्वादशाङ्गुलदीर्घं चाप्येकाङ्गुलसमोन्नतम् २४५
अश्वत्थपत्रसदृशं योनिं चैव प्रकल्पयेत्
चतुरश्रं समारभ्य वृत्तकुण्डसमावधि २४६
सौम्याभिमुखमग्रं च योनिं च परिकल्पयेत्
षडश्रं च समारभ्य चिदाकाशान्तमेव च २४७

योनिं पूर्वाग्रगां कुर्यादन्यथा कर्मनाशनम्
योनौ योनिर्न कर्तव्या पद्मे पद्मं न कारयेत् १४८
चतुरश्रां धरित्रीं वै सर्वात्मान्तरगर्भिताम्
चतुरश्रा भवेद्योनिर्योनिकुण्डे प्रकल्पयेत् २४९
वृत्ताकारं विशेषेण पद्मकुण्डे प्रकल्पयेत्
पद्मे च हृदयं त्यक्त्वा योनौ योनिं परित्यजेत् २५०
योनिर्नाभिरिति ख्याता कुण्डयोर्द्वितयोरपि
दीक्षायां काम्यकर्मादौ विना नाभिं प्रकल्पयेत् २५१
हृदयं च तदेतद्धि उपचारप्रभेदतः
नाभिश्चेति समाख्यातः मुख्यता च न नाभिके २५२
योनौ योनिर्नकर्तव्या पद्मे नाभिं न कारयेत्
चतुरश्रा भवेद्योनिर्योनिकुण्डे प्रकल्पयेत् २५३
वृत्ताकारो भवेन्नाभिः पद्मकुण्डे प्रकल्पितः
पद्मे च हृदयं त्यक्त्वा योनौ योनिं परित्यजेत् २५४
योनिर्नाभिरिति ख्यातः कुण्डयोर्द्वितयोरपि
हस्तमात्रस्य कुण्डस्य हृदयादिप्रकल्पनम् २५५
हस्तादूर्ध्वस्य कुण्डस्य तत्तदाकारवृद्धिदम्
हस्तादि अष्टहस्तान्तं कुण्डमानं प्रकीर्तितम् २५६
अष्टहस्तात्परं नास्ति कृतं चेदशुभावहम्
शिवाग्निं च समारभ्य परिस्तरणकावधि २५७
पञ्चावरणकं प्रोक्तं तत्तत्स्थानं क्रमाच्छृणु
प्रथमं तु शिवाग्निं च द्वितीयं चोर्ध्वमेखला २५८
तृतीयावरणं चाथ मध्यमा मेखला भवेत्
अधस्थमेखलायास्तु तुरीयमिति कीर्तितम् २५९

परितो मेखलायास्तु पञ्चमावरणं स्मृतम्
अग्निं च विष्टरं चैव परिधिं कूर्चकं तथा २६०
परिस्तरणकं चाथ पञ्चस्थानं प्रकीर्तितम्
साङ्गोपाङ्गं च प्रत्यङ्गं त्रिधा भिन्नं शिवाग्निकम् २६१
शिवाग्नि साङ्गमित्युक्तं विद्येशादि गणान्तकम्
उपाङ्गमिति विख्यातं लोकपालास्त्रकावधि २६२
प्रत्यङ्गं च तथा प्रोक्तं त्रिधा चाङ्गमिति स्मृतम्
शिवाग्नेस्त्रिविधो भेदो बाल्ययौवनवृद्धतः २६३
नामान्तं बालमनलं व्रतान्तं यौवनानलम्
विवाहान्तं तु वृद्धाग्निमग्निमाहुस्त्रिभेदतः २६४
एक एव शिवाग्निस्तु तत्तत्संस्कारभेदतः
बाल्ययौवनवार्धक्यसंस्कारस्यानुसारतः २६५
त्रेताग्नीनां शिवाग्नीति नाम वै सामुदायिकम्
शिवाग्नेः परितश्चापि अङ्गरूपप्रकल्पनम् २६६
आहवनीयं च वृद्धाग्निं दक्षिणं यौवनं तथा
गार्हपत्यं च बालाग्निं केवलं चाष्टसंख्यकम् २६७
अङ्गभाव इति प्रोक्तः शिवस्त्वङ्गीति कथ्यते
अङ्गाङ्गिभावसंयोगादग्निश्च नवधा भवेत् २६८
वृद्धरूपं प्रतिष्ठाग्निं नित्याग्निं च तथा भवेत्
यौवनं चोत्सवाग्निं च दीक्षायां वास्तुकर्मणि २६९
प्रायश्चित्तादिकार्येषु बालाग्निमिति कथ्यते
अन्यथा कुरुते मोहाद् राष्ट्रनाशो भवेद् ध्रुवम् २७०
तस्मात्सर्वप्रयत्नेनाप्युक्तमार्गेण कारयेत्
अतुरश्रे तथा कुण्डे वह्निं चाहवनीयकम् २७१

अर्धचन्द्रे दक्षिणाग्निं पद्मे केवलनामकम्
गार्हपत्यं वृत्तकुण्डे योनौ वृद्धाग्निमुत्तमम् २७२
सामान्याग्निं चाष्टकोणे त्रिकोणे यौवनानलम्
बालाग्निं च षडश्रे तु चिदाकाशे शिवाग्निकम् २७३
एवमुक्तक्रमेणाथ नवाग्नीन्स्थापयेद् गुरो
चतुर्विंशतिमानेन विभजेत्कुण्डमण्डलम् २७४
चतुर्विंशत्यङ्गुलात्तु न्यूनं चेद्वर्जयेत्सदा
प्रायश्चित्तादिकार्येषु न्यूनहस्तं न बाधिकम् २७५
तेन मानेन कर्तव्यं समन्ताच्चतुरश्रकम्
चतुरश्रोद्भवं सर्वं कुण्डं सम्यक्प्रकल्पयेत् २७६
पञ्चभागकृतं क्षेत्रं भागैकं बहिर्न्यसेत्
कोणसूत्रं चतुर्भागं चैकैकं पार्श्वकोणयोः २७७
क्षेत्रार्धकोणं संगृह्य क्षेत्रार्धाद् भ्रामयेत्ततः
क्षेत्रार्धावधिकं यावत्तथान्यद् भ्रामयेत्पुनः २७८
सूत्रे संयोजिते योनिर्भवेत् पिप्पलपत्रवत्
उत्तराभिमुखाग्रं च योनिमाग्नेयकोणके २७९
पञ्चभागकृतं क्षेत्रं भागैकं पार्श्वयोः क्रमात्
क्षेत्रं च नवधा भज्य क्षेत्रान्ते चैकभागकम् २८०
आयामोत्तरकं त्यक्त्वा शेषभागे तथा पुनः
सप्तांशं समसूत्रेण भ्रमणादर्धचन्द्रकम् २८१
खण्डं दक्षिणभागे तु अखण्डं चोत्तराग्रकम्
अर्धचन्द्रमिति ख्यातं दक्षिणे च प्रकल्पयेत् २८२
दीक्षायां काम्यकर्मादौ खण्डमुत्तरतो न्यसेत्
अखण्डं दक्षिणाग्रं च भ्रामयेदर्धचन्द्रकम् २८३

खण्डमिन्दुरिति ख्यातमखण्डं सूत्रनामकम्
प्रतिष्ठादिषु कार्येषु ह्युत्तरे सूत्रपातनम् २८४
सप्तभागकृतं क्षेत्रं चैकैकपार्श्वयोर्न्यसेत्
क्षेत्रस्योत्तरबाह्ये वाप्येकभागं बहिर्न्यसेत् २८५
पार्श्वयोर्द्विकयोश्चापि रेखासंयोजितं तु यत्
त्रिकोणमिति विख्यातमुत्तराग्रं प्रकल्पितम् २८६
कुण्डं नैर्ऋतिदेशे तु कल्पयेत्कल्पवित्तमः
सप्तभागकृतं क्षेत्रं चैकभागं बहिर्न्यसेत् २८७
कुण्डमध्यं समारभ्य अन्तसूत्रान्ततः क्रमात्
भ्रामयेद्वर्तुलाकारं वारुणे च प्रकल्पयेत् २८८
क्षेत्रं च सप्तधा कृत्वा चान्ते चैकैकभागकम्
रेखाद्वितयमालिख्य क्षेत्रबाह्यैकभागकम् २८९
द्विद्विरेखामेलनं यत् षडश्रमिति कीर्तितम्
पूर्वाग्रं पश्चिमाग्रं च षडश्रं वायुदेशके २९०
दीक्षायां काम्यकर्मादावुत्तराग्रं प्रकल्पयेत्
प्रतिष्ठादिषु कार्येषु पूर्वाग्रमिति कीर्तितम् २९१
वृत्तकुण्डं पुरा कृत्वा कर्णिकां च द्वयाङ्गुलाम्
कर्णिकाया ह्यधोभागे तथाधो मेखलोपरि २९२
षडङ्गुलसमं दीर्घमग्रे चैकाङ्गुलोन्नतम्
अथवा ह्यङ्गुलं प्रोक्तं कल्पयेद्दलमष्टकम् २९३
उत्तरे पद्मकुण्डं च कल्पयेत्कल्पवित्तमः
दीक्षायां काम्यकर्मादौ कर्णिका चतुरङ्गुला २९४
शेषमंशेन कर्तव्यं दलाष्टकमिति स्मृतम्
क्षेत्रं षोडशधा भज्य क्षेत्रान्ते चैकभागकम् २९५

चतुरश्रं पृथक् कल्प्य तत्क्षेत्रं वसुधा भजेत्
सप्तभागं परित्यज्य भागमेकं च संग्रहेत्  २९६
बाह्यक्षेत्रस्य बाह्ये तु एकभागं च विन्यसेत्
चतुर्दिक्षु चतुश्चिह्नं सूत्रसंयोजितं तु यत्  २९७
अष्टकोणमिति ख्यातं प्रतिष्ठादौ प्रकल्पयेत्
दीक्षायां काम्यकर्मादावष्टकोणं प्रकल्पयेत्  २९८
अष्टाश्रमीशकोणे तु कल्पयेत्तु विशेषतः
इन्द्रईशानयोर्मध्ये पूर्ववद्वृत्तमालिखेत्  २९९
प्रधानकुण्डमाख्यातं चिदाकाशमिति स्मृतम्
एवमेव प्रकारेण तत्तत्कुण्डानि कल्पयेत्  ३००
चतुरश्रावृतं सूत्रं सर्वकुण्डसमावृतम्
सूत्रन्यूनाधिकं चेत्तु तत्कुण्डं परिवर्जयेत्  ३०१
अष्टाश्रं चतुरश्रं च वृत्तं चैव षडश्रकम्
पुँल्लिङ्गमिति विख्यातं योनिः पद्मं च देशिक  ३०२
स्त्रीलिङ्गमिति संप्रोक्तं नपुंसकमतः शृणु
त्रिकोणं चार्धचन्द्रं च नपुंसकमितीरितम्  ३०३
चतुरश्रे तथा योनावर्धचन्द्रे त्रिकोणके
जडाकाशस्वरूपे च वृत्ते चैव क्रमाच्छृणु  ३०४
कुण्डस्थानोर्ध्वके चैव मेखलोर्ध्वे विशेषतः
योनौ सौम्याग्रकं कृत्वा ह्यन्ये पूर्वाग्रकं भवेत्  ३०५
षडश्रे च विशेषेण किंचिद्भेदं शृणुष्व हि
दीक्षायां काम्यकर्मादावुत्तराग्रं प्रकल्पयेत्  ३०६
प्रतिष्ठादिषु कार्येषु योनिः पूर्वाग्रका भवेत्
चतुरश्रादिवृत्तान्तमुत्तराभिमुखं मतम्  ३०७

षडश्रं च समारभ्य चिदाकाशान्तकं क्रमात्
पूर्वाभिमुखमाकल्प्य होमयेत्तु विशेषतः ३०८
दीक्षायां काम्यकर्मादौ षडश्रे चोत्तरास्यकम्
अथातः संप्रवक्ष्यामि शक्तीनां कुण्डलक्षणम् ३०९
स्वतन्त्रा सहजा मिश्रा केवला च चतुर्भवेत्
पञ्चप्राकारसंयुक्ते मर्यादाभ्यन्तरेऽपि च ३१०
पूर्वाभिमुखमाश्रित्य द्वारादीनि प्रकल्पयेत्
वृषादिपरिवारैश्च उक्तमार्गप्रतिष्ठिता ३११
अधिष्ठानस्य सौम्ये वा दक्षिणे वा प्रकल्पिता
स्वतन्त्रा चेति विख्याता सहजां च ततः शृणु ३१२
परिवारविहीने च स्वतन्त्रोक्ते प्रतिष्ठिता
सहजा चेति विख्याता मिश्रां चैव ततः शृणु ३१३
दक्षिणाभिमुखं द्वारमधिष्ठानस्य संनिधौ
गर्भावरणके चापि अन्तर्हारेऽथवा गुरो ३१४
आलयं संप्रकल्प्याथ मिश्रा चेति प्रकीर्तिता
अधिष्ठानं विना शक्तिः केवला च प्रतिष्ठिता ३१५
यत्र द्वारमुखं लिङ्गं तद्वद्द्वारं च शक्तिकम्
अथवा सिंहं हंसं च द्वाराग्रे तु प्रतिष्ठितम् ३१६
पूर्वोक्तविधिमार्गेण रुद्रसूत्रादिकं क्रमात्
दिक्षु योनिः प्रकर्तव्या विदिक्ष्वब्जं प्रकल्पयेत् ३१७
ईशानशक्रयोर्मध्ये वृत्तं चैव प्रधानकम्
त्रयस्त्रिंशत्पञ्चविंशद् दशसप्तनवादिकम् ३१८
पूर्वोक्तविधिमार्गेण कुण्डं सर्वं प्रकल्पयेत्
स्वतन्त्रायास्तथा शक्तेः कुण्डानि परिकल्पयेत् ३१९

पूर्वे तु चतुरश्रं स्याद् दक्षिणे चार्धचन्द्रकम्
पश्चिमे वृत्तकुण्डं च उत्तरे पद्मकुण्डकम्  ३२०
आग्नेयादीशकोणान्तं योन्याकाराणि कल्पयेत्
ईशानशक्रयोर्मध्ये पद्मं चैव प्रधानकम्  ३२१
सहजायाः प्रकर्तव्यं मिश्रशक्तेस्ततः शृणु
पूर्वे तु चतुरश्रं स्यादाग्नेय्यां तु भगाकृति  ३२२
दक्षिणे चार्धचन्द्रं च नैर्ऋते तु त्रिकोणकम्
पश्चिमे वृत्तकुण्डं च वायुदेशे षडश्रकम्  ३२३
उत्तरे पद्मकुण्डं च ईशाने चाष्टकोणकम्
ईशानशक्रयोर्मध्ये चाब्जं चैव प्रधानकम्  ३२४
मिश्रशक्तेः प्रकर्तव्या केवलायास्ततः शृणु
चतुर्दिक्षु तथा योनिं विदिक्ष्वब्जं प्रकल्पयेत्  ३२५
ईशानशक्रयोर्मध्ये योनिकुण्डं प्रधानकम्
केवलायास्तथा शक्तेः कुण्डान्येवं प्रकारयेत्  ३२६
तत्तच्छक्तिक्रमेणैव कुण्डानि रचयेत्तथा
अन्यथा कुरुते मोहात् कर्म कर्ता च नश्यति  ३२७
तस्मात्सर्वप्रयत्नेनाप्युक्तमार्गेण कारयेत्
मारणादिप्रतिष्ठार्थकुण्डानि च शृणुष्व हि  ३२८
पञ्चाश्रादि प्रकर्तव्यं तत्तल्लक्षणकं शृणु
रसभागकृतं क्षेत्रं क्षेत्रान्ते चैकभागकम्  ३२९
वृत्ताकारं विलिख्याथ तद्वृत्तं पञ्चभागकम्
वृत्तं द्वादशधा भज्य सार्धैकं भागमध्यमे  ३३०
परितो तुङ्गचिह्नं च सूत्रसंयोजितं तु यत्
पञ्चाश्रमिति विख्यातं मारणे तु प्रकल्पयेत्  ३३१

चतुर्भागकृतं क्षेत्रं क्षेत्रान्ते चैकभागकम्
वृत्ताकारं प्रकल्प्याथ परितः सप्तभागकम्  ३३२
वृत्तं द्वादशधा भज्य त्रिपादैकेन संयुतम्
तन्मानं भागमध्ये तु परितस्तुङ्गलाञ्छितम्  ३३३
सूत्रे संयोजितं यत्तु सप्ताश्रमिति कीर्तितम्
क्षेत्रे चतुष्टयं भागं क्षेत्रान्ते चैकभागकम्  ३३४
वृत्ताकारं च विलिखेत्परितो नवभागकम्
वृत्तं द्वादशधा भज्य सार्धैकं भागमध्यमे  ३३५
परितस्तुङ्गचिह्नं च सूत्रे संयोजितं क्रमात्
नवाश्रमिति विख्यातं क्षुद्रकर्मसु योजयेत्  ३३६
चतुर्भागकृतं क्षेत्रं क्षेत्रान्ते चैकभागकम्
पूर्ववद्वृत्तमालिख्य तद्वृत्तं दशभागकम्  ३३७
वृत्तं द्वादशधा भज्य पादार्धैनैकभागकम्
भागमध्ये तुङ्गचिह्नं सूत्रे संयोजितं तु यत्  ३३८
दशाश्रमिति विख्यातं स्थापने च विवर्जयेत्
क्षेत्रांशेन समं वृत्तं वसुभागं क्रमात् कुरु  ३३९
क्षेत्रे तुरीयभागैकं वृत्ते वृत्तं समालिखेत्
तद्वृत्तमष्टभागं च बाह्यभागं बहिर्न्यसेत्  ३४०
दलाष्टकं प्रकल्प्याथ कर्णिकया विहीनकम्
अन्तर्बिसिनिकं कुण्डं प्रतिष्ठादौ विवर्जयेत्  ३४१
अन्यथा कुरुते मोहाद्राजराष्ट्रस्य दोषकृत्
तस्मात्सर्वप्रयत्नेन उक्तमार्गेण कारयेत्  ३४२

इत्यजिते प्रतिष्ठातन्त्रे क्रियापादे यागशालालक्षणविधिः
अष्टनवतितमः पटलः

## एकोनशततमः पटलः

## रथोद्धारलक्षणविधिः

देवालयस्य वीथी सा रथवीथीति कथ्यते
सप्तकोटिमहामन्त्रमन्त्रराजोपशोभितः १
रथाङ्गमेकविस्तारमूर्ध्वाधोयोगसंपुटः
ब्रह्मासनसमायुक्तो ह्यनन्तासनसंयुतः २
योगासनसमायुक्तः पद्मासनसमन्वितः
मन्त्रसिंहासने मूर्तिर्विमलासनसंयुतः ३
चिच्छक्त्यासनसंयुक्तः सोमास्कन्दमयः शिवः
मन्त्रप्रासादमेरोश्च देहमध्ये महेश्वरः ४
दहराकारहृदये भूपुराकारमण्डले
मेरुशक्तिमये देहे चित्रशक्त्या परिष्कृतः ५
अस्त्ररज्जुसमायुक्तवेदवाजिसमन्वितः
ब्रह्मसारथिसंयुक्तो वाद्यतालसमन्वितः ६
झल्लरीदुन्दुभीवाद्यशङ्खकाहलनिस्वनैः
ढक्काडमरुनादैश्च नलिकायन्त्रघोषकैः ७
गोपालकृतरज्ज्वङ्गो ह्यक्षान्तर्बहिरर्चितः
चण्डालगणसंकीर्णश‍ृङ्गवाद्यसमन्वितः ८
पटहध्वनिसंघैश्च क्षुद्रघण्टारवैर्युतः
राजवीथ्यां परिभ्राम्य रुद्रकोणे रथे स्थिते ९
ऋग्यजुःसामगानैश्च पृथग्वन्दनकारिभिः
शैववैष्णवसंघैश्च ब्राह्मणैर्वेदपारगैः १०
स्वस्तिवाचनसंयुक्तं रथवीथ्यां जनार्दन

रथासीनस्य देवेश सोमास्कन्दविभोः प्रभोः ११
रथाकर्षणचण्डालस्पर्शदोषनिवृत्तये
महासंप्रोक्षणं कृत्वा तद्रीत्या स्नानमाचरेत् १२

इत्यजिताख्ये महातन्त्रे क्रियापादे रथोद्धारलक्षणविधिः
एकोनशततमः पटलः

## शततमः पटलः

### भैरवीपूजा

अघोरचक्रमूर्ध्नी च पीतवक्त्रा चतुर्भुजा
कोलद्वीपा भगवती कुटजे सर्वकामदा १
पीतवस्त्रा त्रिनयना चार्धचन्द्राङ्कमालिनी
एवं लक्षणमाख्यातं भैरवीलक्षणं शृणु २
उद्वीक्षणा रक्तदंष्ट्रा स्वदन्तैर्दंशिताधरा
रक्ताम्बरधरा रक्ता विशुद्धा साम्बुजा शिवा ३
सहस्रसर्पाभरणा रक्तपुष्पानुलेपना
अतिरिक्तकेशनेत्रजिह्वा सा चाटिकासना ४
ज्वलत्संहारकालाग्निमूर्तिर्भैरवरूपिणी
सिंहतार्क्ष्याहिमहिषसालावृकादिवाहिनी ५
चक्रं शङ्खं शरं चापं वज्राग्निं मुसलं हलम्
अलसां खड्गखेटौ च छत्रपाशकपालकम् ६
नागनाराचपरशुरथस्तम्भाभयं वरम्
सदा हि दक्षिणैर्वामैर्धरन्ती करपङ्कजैः ७
ऊर्ध्वानना भिन्नकरा चानन्ताद्यधिका क्रमात्
संहारचक्रमध्यस्था सायातु प्रधने द्विषाम् ८

सहस्रकोटिसन्दोहसेनास्तम्भनकारिणी
पृथक् पृथक् कोटिकोटिभैरवीभैरवावृता ९
सेव्या सदा वसापूर्णकपालधरपाणिभिः
भैरव्येवं समाख्याता कालरुद्राख्यभैरवी १०
पञ्चवक्त्रा प्रतिमुखं त्र्यक्षा दंष्ट्रासमन्विता
रक्तासृक्चर्ममेदोऽस्थिजनप्राणरतानिशम् ११
दशायुधावरणेन दिग्देवावरणेन च
सदा समन्विता भीमरूपिणी परमेश्वरी १२
आपदि स्मरणीया च कालरुद्राख्यभैरवी
सद्भक्तस्य सदा शीघ्रं सर्वकामफलप्रदा १३
द्वेषिणां तु शिरोमज्ञाः शोषयित्री निकृत्त्वचा
एकान्ते सहजायाता वर्णावर्णस्वरूपिणी १४
स्वभक्तानां सपक्षस्था सन्देहनिधनाय च
अर्घ्यैर्निषेविता साये स्वदन्तैर्मनुजं भुजेत् १५
लम्बमानद्विरदा च साट्टहासा च सर्वदा
सर्पैरुपावृता देवी प्रेतासनसमन्विता १६
लं इन्द्राग्निभैरवाय नन्दाय स्वाहा । अघोराग्निभैरवि चाप्यन्ते
कालाग्निभैरवी कालभैरवो महाश्वानः सर्वसंहारभैरवः ।
प्रचण्डभैरवि आनन्दचण्डभैरवोग्रचण्डभैरव क्रूरचण्डभैरव
सर्ववाहनेभ्यः स्वाहा । सर्वायुधेभ्यः स्वाहा । देवीपुत्र
कोटिभट्टारक भैरवनाथ पञ्चानन कपिलजटाभासुर त्रिनेत्र
ज्वालामालिन् इमं बलिं गृह्णीष्व स्वाहा ।
चण्डिकायै नमः । वसुपिशाचसर्वप्राणिप्रियाय सर्वजनमोहाय
ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु

स्वाहा । ईं षैं रैं च्यों ईं ह्रीं ईं हौं गं गीं रं स्यां रं रं वौं रं हौं रं च्चौं
च्यां ईं भूं इं ईं ह्लां रं भ्रं व्यां चं भ्रां श्रों नमो भगवति वां कालि
रुद्राग्निभैरवि सर्वसंहाररूपिणि भृत्यं सर्वशत्रुक्षयकारि ईं भ्रों
सर्वभूतपिशाचिनि रुद्रि ज्वालामालिनि ईं रुं अस्त्रैरावृते ईं रुं घुं ईं
घुं उच्छ्रे बृहदवतारे सों वार्तालि अस्त्रे रं ह्रीं ईं रं श्रों नमः ।
त्रिपुरभैरव्याः सर्वमन्त्रान् जपेत् ।
श्रीमन्त्रः -- ईं त्रों ईं हौं रं त्रों रं त्रों खं ॥
रं लं रं गन्धरं गराडक्यं रं आत्वष्टिरं कर इषिरं विद्वेषिरं च्चौं ग्रों ईं ग्रों
क्लीं भ्रं रं क्षां हैं सर्वदुष्टानां सर्वस्य तत्चित्तचक्षुमुखगतजिह्वा
स्तम्भनं कुरु कुरु ग्रीं श्रीं क्लीं ईं भ्रैं रं ग्रैं कुरु कुरु क्षं रं लं यं रं प्तां
ईं ठं रं वं क्षुं रं हं रिं नों रौं च्चौं रं स्यों रं स्वाहा रं स्वें रं रिं रं श्रीं
नमः ॥
अष्टत्रिंशत्कलान्यासे पञ्चमूर्धसु पञ्च च
पञ्चवक्त्रेषु च न्यासो हृद्ग्रीवांसनाभिकुक्षिषु १७
पृष्ठे पार्श्वे करे लिङ्गे वक्षोगुह्योरुनितम्बके
जानुजङ्घास्फिग्घ्राणशिरःपादेऽष्टत्रिंशके १८
इत्यजिताख्ये महातन्त्रे क्रियापादे भैरवीपूजाविधिः शततमः पटलः

## एकाधिकशततमः पटलः
## मुहूर्तनिर्णयविधिः

अथातस्ते गुरुश्रेष्ठ देवतास्थापने नवे
मुहूर्तनिर्णयं वक्ष्ये सावधानमनाः शृणु १
उत्तरायणकाले तु लिङ्गसंस्थापनं वरम्
दक्षिणायनकाले तु वर्जयेत्तु विशेषतः २

मेषे च वृषभे चैव मिथुने सिंहमासके
चतुर्मासेषु कर्तव्या प्रतिष्ठा चोत्तमा भवेत् ३
मध्यमा चेति विख्याता पुष्यफाल्गुनमासयोः
तुलाकन्यावृश्चिकेषु मासेष्वधम ईरितः ४
चापं कुम्भं च कटकं त्रिमासं परिवर्जयेत्
शुक्लपक्षेषु कर्तव्यं कृष्णपक्षं परित्यजेत् ५
कृष्णपक्षे विशेषेण पञ्चम्यन्तं शुभावहम्
पञ्चम्याश्चापि परतः कृतं चेदशुभावहम् ६
त्रयोदशी द्वादशी च दशमी च चतुर्दशी
उत्तमा चेति विख्याता मध्यमां तु ततः शृणु ७
एकादशी द्वितीया च प्रतिपत्पञ्चमी तथा
मध्यमत्वेन संप्रोक्ता प्रतिष्ठायां गुरूत्तम ८
तृतीया च चतुर्थी च षष्ठी चैव तु सप्तमी
एताश्चैवाधमाः प्रोक्ता ह्यष्टमी त्वधमाधमा ९
नवमी सर्वथा वर्ज्या प्रतिष्ठायां विशेषतः
सोमः शुक्रो बुधो जीवः प्रतिष्ठावार उत्तमः १०
भानुवारश्च भौमश्च मन्दवारोऽशुभो भवेत्
भानौ कर्तृविनाशः स्याद् भौमे कर्मविनाशनम् ११
मन्दे भोक्तृविनाशश्च त्रिवारं परिवर्जयेत्
अश्विनी रोहिणी चार्द्रा पुष्या चैव पुनर्वसूः १२
ताराश्चैवोत्तमाः प्रोक्ता मध्यमं तु ततः शृणु
मृगशीर्षस्तथा हस्तश्चित्रा चैवानुराधिका १३
उत्तराषाढा चैतानि मध्यमानि भवन्ति हि
प्रोष्ठपद्युत्तराद्या च तथैवोत्तरफल्गुनी १४

श्रवणा रेवती चैव ह्यधमत्वेन कीर्तिताः
अधमाधमा श्रविष्ठा च प्रोक्ता शतभिषक्तथा १५
उत्तमास्तु स्थिराः प्रोक्ता मध्यमाश्चोभयात्मकाः
स्थिरे तु वृश्चिकं कुम्भमुभये चापमेव च १६
राशीनेतान्विवर्जेत प्रतिष्ठायां गुरूत्तम
उच्चस्थानगतश्चन्द्रो यजमानसुखप्रदः १७
चन्द्रस्तु नीचराशिस्थो दारिद्र्यं संप्रयच्छति
मित्रस्थानगतश्चन्द्रो धनमित्रप्रवृद्धिकृत् १८
शत्रुक्षेत्रगते चन्द्रे शत्रुवृद्धिर्भविष्यति
सूरराह्विन्दुसौराश्चेत् स्थापने लग्नसंस्थिताः १९
नाशयन्त्यचिरादेव ग्रामाञ्जनपदांस्तथा
शुभास्तूदयसंस्थाश्चेत् सर्वसौख्यधनप्रदाः २०
धनस्थानगताः पापाः कुर्वन्ति धननाशनम्
शुभास्तु चन्द्रसंयुक्ता धनदास्तत्र संस्थिताः २१
भ्रातृस्थानगतश्चन्द्रो भ्रातृवृद्धिकरो भवेत्
इन्दुस्थानगताः पापाः कुर्वन्ति सुखनाशनम् २२
तदेव वर्धयिष्यन्ति सौम्याश्चन्द्रविवर्जिताः
सुखस्थानगताः क्रूराः कुर्वन्ति सुखनाशनम् २३
तत्र स्थिताः शुभाः सर्वे पुत्रकर्मसुखप्रदाः
पुत्रस्थानगतः कुर्यात् सौख्यनाशं निशाकरः २४
नाशयन्ति रिपून् क्रूराः शत्रुक्षेत्रं समाश्रिताः
शत्रुस्थानगते जीवे शत्रुवृद्धिर्भविष्यति २५
स्थानभ्रंशकरौ तत्र संस्थितौ चन्द्रभार्गवौ
कुर्याज्जामित्रगः सूर्यो यजमानविमोचनम् २६

कुजस्त्वग्निभयं कुर्यात् पिशाचभवनं भृगुः
जीवेन्दू सप्तमस्थौ चेद् धनधान्यागमो भवेत् २७
अष्टमस्था ग्रहाः सर्वे कुर्वन्ति कुलनाशनम्
धर्मस्थानगताः सौम्याः कुर्युर्धर्मविवर्धनम् २८
पापाश्चन्द्रयुताः कुर्युः सौख्यधर्मधनक्षयम्
कर्मस्थानगताः क्रूराः कुर्वन्ति स्थाननाशनम् २९
चन्द्रेण संयुताः सौम्याः पुत्रमित्रसुखप्रदाः
लाभस्थानगताः सर्वे पुत्रायुःश्रीसुखप्रदाः ३०
द्वादशस्था ग्रहाः सर्वे ह्यत्र दारिद्र्यदाः स्मृताः
नक्षत्रान्ते च तिथ्यन्ते वर्षान्ते च धनक्षयः ३१
व्यतिरिक्ते व्यतीपाते ग्रहदोषसमन्विते
मासशून्यदिने राशौ परिवेषे च दुर्दिने ३२
षडशीतिमुखे चैव स्थापनं वर्जयेत्सुधीः
बुधः शुक्रो गुरुश्चैवाप्युदये देशिकोत्तम ३३
वैनाशे त्वष्टमे राशावयने दक्षिणे तथा
विपत्प्रत्यग्वधर्क्षे च प्रतिष्ठा मारणावहा ३४
कुलक्षयः स्याद् ग्रहणे त्वयने मरणप्रदम्
विषुवे वित्तहीनत्वं संक्रान्तौ मूलनाशनम् ३५
ऋृक्षान्ते सुखहीनत्वमयने धर्मनाशनम्
मासान्ते बिम्बनाशः स्याद् वत्सरान्तेऽशुभप्रदम् ३६
विष्कम्भे तु न सान्निध्यं व्याघाते कर्तृनाशनम्
शूले श्रियो विहीनत्वं वज्रे वज्रेण बाधनम् ३७
परिधे कर्तृनाशः स्यात् कालकण्ठे रिपुक्षयः
शकुनादौ च वृष्टिः स्याद् वर्जयेत्करणादि च ३८

वैष्णवे चन्द्रसूर्यौ च वायव्ये चाथ मैत्रके
सिद्धयोगे प्रतिष्ठा चेदुत्तमेति प्रकीर्तिता ३९
मध्यमस्त्वमृतो योगः प्रतिष्ठायां गुरूत्तम
योगेषु प्रतिरायुष्मान्सौभाग्यं च शुभप्रदम् ४०
सुकर्मा च धृतिः प्रीतिर्ध्रुवो वृद्धिः सुखप्रदः
मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः ४१
धनुर्मीनद्वयोर्मन्त्री तुलावृषभयोः कविः
मकरकुम्भयोः सौरिः कटकस्य च शीतगुः ४२
मृगेन्द्रस्य तथादित्यो राशीनामधिपाः स्मृताः
नक्षत्रदोषसंयुक्तं तिथिदोषसमन्वितम् ४३
वारदोषसमायुक्तं गण्डदोषसमन्वितम्
मुहूर्तदोषसंयुक्तं लग्नं पञ्चाङ्गदोषकम् ४४
दिवासूर्ये निशाचन्द्रे लग्नादेकादशस्थिते ४५
कोटिदोषा विनश्यन्ति शिवेन परिकीर्तितम्
वारेश्वरे बलोपेते योगदोषो न विद्यते ४६
वारेश्वरो दुर्बलश्चेद् योगदोषो बलो भवेत्
नीचस्थाः शत्रुगेहस्था वृद्धबालग्रहाः पुनः ४७
क्रूराः शीघ्राः शुभा वक्रा ज्ञेया बलविवर्जिताः
राहुदोषं बुधो हन्ति उभये संस्थिते चरन् ४८
त्रयाणां भूमिजो हन्ति चतुर्णां भृगुपुङ्गवः
पञ्चानां देवमन्त्री च षण्णां दोषं च चन्द्रमाः ४९
सप्तदोषान् रविर्हन्ति विशेषाद्दक्षिणायने
रविर्मेषे तुलायां च चन्द्रस्तु वृषवृश्चिके ५०
कुजश्च मकरकर्के कन्यामीने बुधस्य च

गुरोश्च कर्किमकरौ मीनकन्ये भृगुस्तथा  ५१
तुलामेषौ च मन्दस्य उच्चनीचमुदाहृतम्
पर्वद्वयमतिक्रम्य यदा संक्रमणं रवेः  ५२
अधिमासः स विज्ञेयः शुभकर्म विवर्जयेत्
यस्मिन्मासि न संक्रान्तिः संक्रान्तिद्वयमेव वा  ५३
संसर्पकः स विज्ञेयः सर्वकर्मसु गर्हितः
अहस्पतिरवन्त्यां च संसर्पः केरलेषु च  ५४
मलमासस्तु पाञ्चाले चोलदेशे च विद्यते
सौरं चान्द्रं च भेदेन बार्हस्पत्यमिति त्रिधा  ५५
कारणं सौरमानं स्यात् चान्द्रमानं तु सूक्ष्मकम्
बार्हस्पत्यं तथा स्थूलं मासत्रयमुदाहृतम्  ५६
स्थूलं सूक्ष्मं परित्यज्य कारणं संग्रहेद्गुरुः
सौरमाने प्रकर्तव्यं सर्वं कर्म सुखावहम्  ५७
देहं तु प्रथमं विद्याद् द्वितीयं धनमेव च
भ्रातृस्थानं तृतीयं तु मातृस्थानं चतुर्थकम्  ५८
पञ्चमं तु सुतस्थानं षष्ठं वै ऋणमुच्यते
जामित्रं सप्तमं प्रोक्तमायुःस्थानं तथाष्टमम्  ५९
धर्मस्थानं तु नवमं कर्म वै दशमं स्मृतम्
लाभमेकादशं विद्याद् द्वादशं व्ययमेव च  ६०
प्रवेशे द्वादशे शुद्धिरेकादशे तु पैतृके
दशमे भोजने शुद्धिर्नवमे चौलकर्मणि  ६१
उपनीतावष्टमे च विवाहस्य तु सप्तमे
षष्ठे तु नववस्त्राणां प्रयाणे पञ्चमे तथा  ६२
विद्यारम्भे चतुःशुद्धिरौषधे च तृतीयके

द्वये धान्यसंग्रहणे लग्नशुद्धिश्च संगमे ६३
द्वादशे तु प्रतिष्ठायामुत्तमा परिकीर्तिता
मध्यमा त्वष्टमे शुद्धिः पञ्चमे त्वधमा भवेत् ६४
कलासंग्रहणे काले दशमे शुद्धिरिष्यते
अष्टमे चाष्टबन्धस्य सप्तमे च मृदो ग्रहे ६५
बीजावापनके युग्मस्थानानां शुद्धिरिष्यते
रक्षाबन्धे च नवमं शुद्धमिष्टं गुरूत्तम ६६
कुम्भाद्भिरभिषेके च द्वादशे शुद्धिरिष्यते
शुभेन वीक्षितो युक्तो लग्नो वै शुभदः स्मृतः ६७
अशुभैर्वीक्षितो युक्तो लग्नश्चाशुभ ईरितः
लग्नस्य होरा द्रेक्काणं नवांशं द्वादशांशकम् ६८
त्रिंशांशश्चापि विजयः षड्वर्गाश्चैवमीरिताः
ओजभाश्चैव पूर्वार्धे सूर्यहोराः प्रकीर्तिताः ६९
चतुर्थं सप्तमं लग्नं दशमं केन्द्रसंज्ञितम्
नवमं पञ्चमं चापि त्रिकोणं समुदाहृतम् ७०
दग्धयोगे षड्घटिकामष्टौ ज्वालामुखे तथा
उत्पाते मृत्युयोगे च घटिकात्रयपञ्चकम् ७१
यमगण्डे तु नवमीं घटिकां तु परित्यजेत्
ग्रहणे वर्जनीयानि दिनानि प्रवदाम्यहम् ७२
पूर्णग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम्
त्रिभागे तु सति ग्रस्ते द्विदिनं परिवर्जयेत् ७३
पादोनमण्डले ग्रस्ते त्वेकरात्र्या शुभं भवेत्
घटिकाद्वयं तु ऋक्षान्ते मासान्ते तु दिनत्रयम् ७४
वर्षान्ते वर्जयेत्पक्षं सर्वस्मिन्नपि कर्मणि

लग्नशुद्धिं प्रवक्ष्यामि समासाच्छृणु सांप्रतम् ७५
शतदोषैश्च दुष्टे च लग्ने चापि विशेषतः
चन्द्रात्मजे लग्नगे चेत् केन्द्रस्थानं गतेऽपि वा ७६
शतं लग्नगतं दोषं हन्ति भानुस्तमो यथा
भार्गवे लग्नसंस्थे च लग्नदोषो विनश्यति ७७
वाक्पतिर्द्विगुणं हन्ति लग्नदोषांस्तथामितान्
दिनेशे केन्द्रगे चैव देवेड्ये केन्द्रगे तथा ७८
लग्नदोषशतं हन्ति द्विगुणं त्रिगुणं तु वा
स्नाने दाने जपे होमे स्वाध्याये पितृकर्मणि ७९
देवताराधने चैव त्याज्यदोषो न विद्यते
चतुर्भीरविमुक्ताभिरन्धं नक्षत्रमुच्यते ८०
षड्भिश्चापि द्विनेत्रं तु नवभिस्त्वेकलोचनम्
पञ्चभिर्युग्मनेत्रं स्यात् त्रिभिरन्धं भवेत्ततः ८१
रविमुक्ते स्थिता तारा मृतास्तिस्रो ग्रहे तथा
सप्तस्थास्त्वर्धजीवाश्च एकेऽपि च तथा मृताः ८२
पूर्णजीवास्त्वष्टमे च पादजीवास्तु सप्तमे
त्रिगुणये सूर्यवारादीनश्विन्यादिषु संत्यजेत् ८३
शिष्टे नवसु सूर्यश्चेत् षट्कोणेषु द्वयान्धकः
पादैकदृष्टिर्नवमे दशमे च तृतीयके ८४
द्विपाददृष्टिर्नवके पञ्चके तु त्रिपाददृक्
चतुर्थे वाष्टमे चापि पूर्णा दृष्टिश्च सप्तमे ८५
पाददृष्टिर्बली मन्दश्चार्धदृष्टिर्बली गुरुः
त्रिपाद्दृष्टिर्बली भौमः पूर्णः सप्तमकेन तु ८६
अन्धश्च बधिरः पङ्गुरेवं राशिस्त्रिधा मता

मेषवृश्चिककुम्भाश्च दिवान्धास्ते प्रकीर्तिताः ८७
दिवा तुलाली बधिरौ रात्रौ मकरधन्विनौ
मिथुनं कटककन्ये च रात्र्यन्धत्वेन कीर्तिताः ८८
दिवाकुम्भो निशामीनः पङ्गुश्चापि प्रकीर्तितः
अन्धश्च निष्फलं यत्र बधिरो मरणप्रदः ८९
पङ्गुना कार्यहानिः स्यात्सर्वकर्माणि वर्जयेत्
मेषो मीनो धनुश्चैश्च गमनं चेति कीर्तिता ९०
कर्किवृश्चिकसिंहाश्च स्थानं चापि प्रकीर्तितम्
कुम्भं मिथुनतौली चाप्यासीनं चेति कीर्तितम् ९१
कन्यावृषभनक्राश्च शयनं चेति भाषितम्
गच्छता कलहं घोरं स्थिता लाभं विशेषतः ९२
आसीनात्कार्यसिद्धिः स्याच्छयनान्मृत्युरेव च
अतः परं प्रवक्ष्यामि आसां चामृतकालकम् ९३
मेषवृश्चिकयोः प्रातः स्त्रीकर्की द्वंद्वसंगमे
सिंहकुम्भधनुर्मध्ये त्वपराह्ने तुलावृषौ ९४
सायाह्ने मीनमकरौ मृतवेला समीरिता
सर्वकार्येषु हानिश्च प्राणहानिर्भविष्यति ९५
कृते चैवाग्निनक्षत्रे अग्निबाधा भविष्यति
अयनं मासमेवं च पक्षर्क्षतिथयोऽपि च ९६
लग्नद्रेक्काणहोराश्च वेला दृष्टिश्च जीवितम्
योगश्च करणं चैव शुभाश्चैव विशेषतः ९७
उत्तमं चाप्यनावर्ते त्वावर्ते मध्यमं स्मृतम्
अधमं पुनरावर्ते कन्यसं त्वन्तरीयके ९८
पुनरावर्तकस्याप्यन्तरीयस्य वै तथा

अनयोस्तु विना कालं विना पक्षं दिनं विना  ९९
सर्वकालेषु कर्तव्यं विधिदृष्टेन कर्मणा
अन्यथा कुरुते पुंसामायुःश्रीपुत्रनाशनम्  १००
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इत्यजिताख्ये महातन्त्रे क्रियापादे मुहूर्तनिर्णयविधिः
एकाधिकशततमः पटलः

द्व्यधिकशततमः पटलः
षडध्वन्यासविधिः

अथातः संप्रवक्ष्यामि षडध्वन्यासकं विधिम्
षडध्वा तु परेशस्य स्थानागमनयोः सृतिः  १
सर्वेषां व्यापकस्यास्य व्याप्यव्यापकभेदतः
षडध्वाङ्गं तथाङ्गी स्यादध्वातीतः परः शिवः  २
ब्रह्मा विष्णुश्च रुद्रश्च महेशश्च सदाशिवः
नादो बिन्दुस्तथा शक्तिः शिवश्चेति विभागतः  ३
नवधा मूर्तिभेदेन प्रोक्तः सर्वेश्वरो हरः
तथा च त्रिविधं प्रोक्तमङ्गं सर्वेश्वरस्य तु  ४
भोगाङ्गमधिकाराङ्गं लयाङ्गमिति सत्तम
ब्रह्मा विष्णुश्च रुद्रश्च भोगाङ्गत्वेन कीर्तिताः  ५
अधिकाराङ्गकौ प्रोक्तौ महेशानसदाशिवौ
नादो बिन्दुस्तथा शक्तिः शिवश्चेति लयाङ्गकम्  ६
षडध्वा चैव भोगाङ्गाद्यधिकारान्तमिष्यते
अध्वातीतो लयाङ्गं स्यात्तस्य न्यासो हि निष्कले  ७
कला तत्त्वं च भुवनं वर्णाः पदमनन्तरम्

मन्त्रश्चेति समाख्यातो न्यासस्तस्य षडध्वनः ८
शीर्षं वक्त्रं च हृदयं गुह्यं च चरणं तथा
कल्पयेच्च कलान्यासादिति देशिकसत्तम ९
भुवनेन शरीरं च कल्पयेच्चिन्मयं तथा
वर्णाध्वना त्वचं चैव चिन्मयीं परिकल्पयेत् १०
मन्त्राध्वना च रुधिरं चिन्मयं च प्रकल्पयेत्
तत्त्वपदाध्वना मज्जाशुक्लादीन्यपि कल्पयेत् ११
त्वग्रक्तमांसमज्जादि नास्ति वै परमेश्वरे
मन्त्रात्मनश्चिद्घनस्य त्वगादि ह्युपचर्यते १२
क्रियते नो षडध्वा चेच्छिवस्त्वव्यापको भवेत्
तस्मात्सर्वप्रयत्नेन षडध्वन्यासमाचरेत् १३
कुम्भं वा बिम्बमेवाथ षडध्वकविहीनकम् १४
मूर्तेरावाहनात्पूर्वं षडध्वानं प्रकल्पयेत्
षडध्वानस्त्रिधा भिन्नाश्चैषां लक्षणमुच्यते १५
निष्कलं सकलं चैव तथा सकलनिष्कलम्
कलाध्वानं समारभ्य मन्त्रान्तं सकलं भवेत् १६
मन्त्राध्वानं समारभ्य कलान्तं निष्कलं स्मृतम्
वर्णं च भुवनं चैव तत्त्वं चैव कलां तथा १७
पदं मन्त्रं च विन्यस्यमेतत्सकलनिष्कलम्
कुम्भे भोगाङ्गमूर्तेस्त्वाकर्षणे सकलं स्मृतम् १८
अधिकाराङ्गमूर्तेस्त्वाकर्षणे सकलनिष्कलम्
लयाङ्गमूर्तेः संधाने निष्कलं समुदीरितम् १९
अतः कुम्भे तथा बिम्बे तत्तदावाहनादिके
पूर्वोक्तविधिनानेन षडध्वानं प्रकल्पयेत् २०

इत्यजिताख्ये महातन्त्रे क्रियापादे षडध्वन्यासविधिः
द्व्यधिकशततमः पटलः

## त्र्यधिकशततमः पटलः
## शैवश्राद्धविधिः

अथातः संप्रवक्ष्यामि शैवश्राद्धविधिं शृणु
शैवश्राद्धविधिर्मुख्यो ह्यादिशैवैरनुष्ठितः १
अन्यैश्च कथितं श्राद्धमसद्भावविधानकम्
शैवश्राद्धमकृत्वा यो वैदिकश्राद्धमाचरेत् २
दीक्षितश्च मृतश्चैतावुभौ निरयगामिनौ
मुक्तात्मा च शिवे लीनः काले प्रत्याब्दिकं क्रमात् ३
तस्मिन्मासे च तत्तिथ्यां शैवश्राद्धं क्रमाच्चरेत्
तद्दिने तु पितृश्राद्धं कुलकोटिं समुद्धरेत् ४
उदयाद्यस्तमनान्तं पञ्चभागं विभावयेत्
प्रातः संगवमध्याह्नावपराह्नस्तथैव च ५
सायाह्न इति संज्ञेयः सायाह्नव्यापिनी यदि
परेऽहनि तत्तिथ्यास्तु यत्राधिक्यं दिने भवेत् ६
तद्दिने च पितृश्राद्धं तथाभावे तिलोदकम्
नित्यं नैमित्तिकं काम्यं वृद्धिः पार्वणमेव च ७
एवं पञ्चविधं श्राद्धं ज्ञात्वा च गुरुपुङ्गवः
पार्वणं सृष्टिरित्युक्तं वृद्धिः स्थितिरुदाहृता ८
काम्यं संहार इत्युक्तं नैमित्तं च तिरोहितम्
नित्यमनुग्रहः प्रोक्तं श्राद्धं पञ्चप्रकारतः ९
दिवसे दिवसे कुर्यादेतन्नित्यमितीरितम्

दिवसं प्रति यत्कर्म पितृनुद्दिश्य देशिकः १०
तर्पणादि कृतं कार्यं नित्यश्राद्धमुदीरितम्
मृतेऽहनि तिथौ कार्यं नैमित्तिकमुदाहृतम् ११
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः
पुण्यक्षेत्राटनादौ च श्राद्धं काम्यमुदीरितम् १२
प्रतिदर्शं कृतं श्राद्धं पार्वणं समुदीरितम्
वृद्धिश्राद्धं विवाहादौ पञ्चधा श्राद्धमुच्यते १३
आदिशैवो महाशैवो ह्यनुशैवस्त्रयं गुरो
होमं च चरुभुक्तं च आवाहनं विधानतः १४
शैवश्राद्धे प्रकुर्यात्तु आमरूपं न कारयेत्
आमरूपकृतं श्राद्धमन्त्यशैवैरनुष्ठितम् १५
चतुर्वेदार्थविदुषां ब्राह्मणानां महात्मनाम्
आचार्यैकैकभुक्तेन कोटिं भुञ्जीत यो नरः १६
लक्षं तु साधके भुक्ते पुत्रे दशसहस्रकम्
समयस्थे सहस्रं स्याद्भुक्ते चैवं फलप्रदम् १७
शैवाः सप्तविधा मध्ये आदिशैवो विशेषतः
शिवद्विजादयः सर्वे प्रशस्ताः श्राद्धसंपदि १८
स्वजात्युत्कर्षतो ग्राह्याः स्वस्वजात्युद्भवाश्च वा
तदलाभे महाशैवस्तथा दानप्रतिग्रहे १९
दानप्रतिग्रहादीनां सच्छूद्रं परिवर्जयेत्
सर्वेषां जातिभेदानामादिशैवो विशेषतः २०
श्रोत्रियो वेदविदुषां शास्त्रज्ञो ज्ञानवांस्तथा
शिवपूजापरो विप्रः शिवद्विजकुलोद्भवः २१
शिवदीक्षायुतश्चैव उत्तमः परिकीर्तितः

अपत्नीको वनस्थश्च पाण्डित्यज्ञानहीनकः २२
अदीक्षितश्चाङ्गहीनः काणः पिशुनशुण्डकौ
गोलको दत्तपुत्रश्च ऋतुपत्नीकवर्जितौ २३
दन्तहीनो दुराचारो लोके भवति निन्दितः
धूर्तो बह्वग्निसंतप्तः क्रूरो वाप्यन्यजातिकः २४
दीक्षाविहीनविप्राद्यः पाञ्चरात्रादितन्त्रकः
बौद्धः पाषण्डकः सर्वाञ्शैवश्राद्धे परित्यजेत् २५
अन्यथा कुरुते मोहात्तत्कर्म निष्फलं भवेत्
अभावे ब्रह्मचारी च देशिकः पत्निहीनकः २६
तस्मात्सर्वप्रयत्नेन आदिशैवं तु कारयेत्
आचार्याणां कृते श्राद्धे आचार्यं वरयेद्गुरुः २७
अनाचार्यं वरयेच्चेदायुःश्रीपुत्रनाशनम्
निर्वाणदीक्षितः श्राद्धे विशेषं समयं त्यजेत् २८
समयी च विशेषी च निर्वाणी च त्रिधा भवेत्
तत्तत्संस्कारभेदैश्च भुवने तारतम्यतः २९
पदप्राप्तिक्रमात्सम्यक् तत्तद्भेदविधानतः
आवाहयेत्पितृन्देवाञ्श्राद्धेऽत्वरो विचक्षणः ३०
आचार्यार्थं कृते श्राद्धे शिव ईशसदाशिवौ
शान्तः स्कन्दगणाधीशौ चण्डिकेशश्च सप्त च ३१
शिवः प्रथमतः पूज्यः ईशः शान्तसदाशिवौ
द्वितीये च समावाह्याः स्कन्दश्च गणचण्डकौ ३२
तृतीये च समावाह्या एवमाचार्यसंस्कृते
वरयेद्देशिकान्सप्त अलाभे स्यात्तु पञ्चकम् ३३
साधकद्वितयं देवे पित्रर्थं देशिकत्रयम्

तस्यालाभे द्वयं प्रोक्तं देवपित्रोश्च पूजने ३४
रुद्रोऽनन्तश्च कथितौ विश्वेदेवा इति द्विजाः
ईशः सदाशिवः शान्तः शिवश्राद्धे प्रकीर्तिताः ३५
पूजने च समावाह्या एवं निर्वाणसंस्कृते
समयिविशेषिणोश्च विश्वे देवान्पुरो यजेत् ३६
तत्र नन्दिमहाकालौ द्वौ गणद्वितयस्थितौ
स्कन्दचण्डगणेशानास्त्रयः पित्रर्थमीरिताः ३७
नैमित्तिकविधानेन श्राद्धं सम्यक् शृणुश्व वै
ब्राह्मणान्ग्राहयेद्भक्त्या स्नानानुष्ठानपूर्वकम् ३८
नित्यकर्म प्रकुर्वीत तदैव ब्राह्मणान्वरेत्
निमन्त्रितान्वरेत्पूर्वं पवित्रं धारयेत्ततः ३९
प्रदक्षिणत्रयं पश्चात्कुसराभ्यञ्जनं परम्
विघ्नेशयजनं चैव पुण्याहं पञ्चगव्यकम् ४०
शिवस्य प्राङ्मुखं स्थानमन्येषां च उदग्दिशि
कूर्मासने तु संस्थाप्य त्रिःप्रदक्षिणमाचरेत् ४१
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ४२
सायुज्यादिपदप्राप्तमीशादिपितृदैवतम्
वंशवृद्धिकरं देवं नित्यमेव नमो नमः ४३
शिवज्ञानप्रतीकाशं शिवं सप्तगुरून्सदा
अहं वन्दे महादेवं नित्यमेव नमो नमः ४४
देवानां च पितृणां च गुरूणां शिवयोगिनाम्
प्रदक्षिणत्रयं कुर्वे नित्यमेव नमो नमः ४५
इति मन्त्रान्समुच्चार्य प्रदक्षिणत्रयं कुरु

विज्ञाप्य देशिकान्पश्चाच्छ्राद्धभूमिं विशेषतः ४६
कैलासवत्क्रमाद्ध्यात्वा ध्यात्वा देवं महेश्वरम्
ईशादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तये ४७
अनुज्ञानन्तरं पश्चात्सकलीकरणं तथा
विघ्नेशं प्रार्थयेच्चैव संकल्पं तु ततः परम् ४८
सामान्यार्घ्यं ततः पश्चाद्यागेश्वरस्य पूजनम्
प्रोक्षणं च ततः पश्चाच्चरुशुद्धिं तथैव च ४९
कल्पयेद्देवपित्रर्थमर्घ्यं पात्रेषु पञ्चसु
देवार्थं यवसंयुक्तैः पित्रर्थं तिलसंयुतैः ५०
अर्घ्ये चाप्यमृतं योज्य स्थलशुद्धिं च कारयेत्
ज्ञात्यादिगोत्रसंज्ञाश्च दीक्षानामपुरःसरम् ५१
पुरतः शिवमावाह्य यज्ञसूत्रं च सव्यकम्
प्राचीनावीतकं कृत्वा ईशादिगणपान्तकम् ५२
आवाहयेत्क्रमात्सम्यक् पूर्वोक्तविधिमार्गतः
पाद्यार्थं शुद्धदेशे तु उत्तरे चतुरश्रकम् ५३
वृत्तानि दक्षिणे कृत्वा पूजयेच्च पृथक् पृथक्
पाद्यं च विधिवत्सम्यगलंकारं ततः परम् ५४
वस्त्रयज्ञोपवीतं च भूषणादीनि दापयेत्
पितृकार्ये विधानेन वह्निकार्यं पुरा कुरु ५५
अग्निसंधानविषये किंचिद्भेदः प्रचक्ष्यते
निर्वाणिनः समारभ्य आचार्यान्तं क्रमाच्छृणु ५६
शिवाग्निमुखं संकल्प्य होमयेत्तु विशेषतः
समय्यादिविशेष्यन्तं बालाग्नौ होमयेत्ततः ५७
सर्वपाकविशुद्ध्यर्थं शिवाग्न्याहुतिपूर्वतः

शिवानले करिष्येऽहं तस्माद्धोममिति द्विजाः ५८
कुरुष्वेत्यभ्यनुज्ञातो वह्नौ होमं समाचरेत्
चरुं समिधमाज्यं च विशेषपितृदैवेते ५९
सोमश्च पितृमांश्चैव अङ्गिरो यम एव च
अग्निश्च कव्यवाहाद्यः अर्यम्णोऽग्निष्वात्ताय च ६०
बर्हिषिभ्य आज्यपाय पितरः सोमपाय च
सोमाय पितृमच्छब्दं चतुर्थ्यन्तं स्वधा नमः ६१
ततो यमायेत्युच्चार्य अङ्गिरस्वते स्वधा नमः
उक्त्वाग्नये ततः कव्यवाहनाय स्वधा नमः ६२
अर्यम्णे चाग्निष्वात्ताय बर्हिषिभ्यः स्वधा नमः
सोमपाय च पितृणामाज्यपाय स्वधा नमः ६३
आवाहनाद्यैः संपूज्य प्रत्येकं होमयेत्ततः
चतुर्विंशतिपितृणां स्वधान्तं होममाचरेत् ६४
हुतशेषं प्रदद्यात्तु भोजनेषु नरं स्मरन्
पित्रर्थं चैव पिण्डार्थं दद्याद्विश्वस्य देवयोः ६५
अर्घ्यं च स्थालीपाकं च ब्राह्मणान्भोजयेत्ततः
चतुरश्रं त्रयं वृत्तं गोमयेनैव शुद्धितम् ६६
कदलीपर्णमादाय साग्रं वामे तु निक्षिपेत्
उपपात्रसहोपेतं प्रोक्षयेदस्त्रमन्त्रतः ६७
अन्नं दापयेच्चैव दद्याल्लवणपूर्वकम्
सर्पिषा पयसा चैव दधि मधु फलत्रयम् ६८
व्यञ्जनं पायसान्नं च परमान्नं पृथक् पृथक्
दापयेत्कदलीपर्णे पात्रशुद्धिं च पूर्वतः ६९
अस्त्रेण प्रोक्षयेच्चैव पात्रं वामेन संस्पृशेत्

अपसव्यक्रमेणैव एकवारं प्रदक्षिणम्  ७०
ईशानेनैव मन्त्रेण परिषिच्य विशेषतः
त्रियम्बकेति मन्त्रेण अभ्युक्षणं च कारयेत्  ७१
हव्यं च दैवमन्नं च कव्यं च पितुरन्नकम्
स्वाहां चैव स्वधां चैव शम्भोरन्नं च रक्षयेत्  ७२
तिलाक्षतैः समोपेतमुदकेनैव पूर्वतः
दैवं स्वर्णमयं पात्रं राजतं पितृपात्रकम्  ७३
एकः शम्भुर्महद्भूतं प्रीयतां च महेश्वरः
दत्तं ददेद्विशेषेण उदकं प्राश्य बुद्धिमान्  ७४
प्राणाहुतिं ततः कृत्वा सद्यं जप्त्वा श्रुतिं जपेत्
भोजनानन्तरं तेषां तृप्त्यै विकिरमाचरेत्  ७५
वायसं पिण्डमादाय प्रदद्यान्मन्त्रमुच्चरन्
उच्छिष्टक्षालनं पश्चात्ताम्बूलं दक्षिणां तथा  ७६
वर्धनीमुदकापूर्णां श्राद्धदो दक्षिणाननः
धृत्वा पठेत्स्वधाकारं वदेयुर्वाच्यतामिति  ७७
ईशादित्रितयं पश्चाच्चतुर्थ्यन्तमुदीरयेत्
स्वधान्तं श्राद्धकृत्पश्चादीशाद्याः सर्व एव च  ७८
अस्तु स्वधेति ब्रूयुस्ते भूमौ सिञ्चेत्ततो जलम्
प्रदक्षिणत्रयं कृत्वा नमस्कारं क्रमाद्गुरो  ७९
प्रार्थयेद्दिवसे श्राद्धं शैवश्राद्धफलप्रदम्
अन्नशेषैः किं क्रियतामित्युक्ते श्राद्धकारिणा  ८०
इष्टैः सहैव भोक्तव्यमिति ते ब्रूयुरिष्टदाः
दातारो नोऽभिवर्धन्तां शैवसंततिरेव च  ८१
श्रद्धा च नो मा व्यपगाद्बहु देयं च नोऽस्त्विति

इत्युक्त्वा च प्रिया वाचः प्रणिपत्य क्षमापयेत् ८२
सर्वपाप क्षयार्थं हि सर्वशत्रुविनाशनम्
पञ्चपातकनाशार्थं परचक्राद्भयं विना ८३
सर्वदुःखप्रशमनं सर्वव्याधिनिवारणम्
सर्वोपद्रवदारिद्र्याद्यपमृत्युविनाशनम् ८४
आयुरारोग्यकैश्वर्यधर्मार्थकाममोक्षदम्
पुत्रपौत्रविवर्धनं सर्वकामफलप्रदम् ८५
आशीर्वादं विशेषेण भस्माक्षतपुरःसरम्
यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ८६
पितृपात्रं तदुत्तानं कृत्वा पश्चाद्विसर्जयेत्
गृहीत्वा दर्भपत्रैश्च उद्वासनं तथैव च ८७
कुक्कुटाण्डप्रमाणेन चतुर्विंशतिसंख्यया
पितृणां पिण्डमादाय तस्योपरि तिलोदकम् ८८
पितृणां बलिदानं च पिण्डसंयोजनात्परम्
पिण्डांश्च गोषु विप्रेभ्यो दद्यादग्नौ जलेऽपि वा ८९
प्रक्षिपेत्कुलपत्न्या वा भक्ष्यं पिण्डं पितामहम्
एतदग्निं समभ्यर्च्य कर्मसिद्ध्यर्थहोमकम् ९०
तत्त्वानि पदमन्त्रादीन्स्वाहान्तं होमयेद्गुरो
भवादीञ्शक्तिनामानि सुतपत्नीसमन्वितान् ९१
पञ्चब्रह्मादिनामान्तं हुत्वा पूर्णां समाचरेत्
प्रायश्चित्तविधानेन अघोरेण शतं हुनेत् ९२
अन्तर्बलिं क्रमाच्चैव उपस्थानं तथैव च
तद्देवोद्वासनं पश्चाद्वह्नेरुद्वासनं चरेत् ९३
पवित्रं विसृज्याचम्य होमरक्षां च धारयेत्

यत्किंचित्कर्म हे देव समर्पयेत्सदाशिवे  ९४
परेऽहनि विशेषेण तर्पणं च समाचरेत्
अथवा तद्दिने वापि तर्पणं च क्रमाद्गुरो  ९५
सव्योपवीतिनं पश्चादिष्टं भुञ्जीत यो नरः
अग्नौ हुतेन देवस्थाः स्वर्गस्थाः श्राद्धभोजनात्  ९६
यमस्थाः पिण्डदानेन नारका विकिरेण तु
उच्छिष्टैरपि पैशाचा असुरा भूरिभोजनात्  ९७
दक्षिणाभिर्मनुष्याश्च श्राद्धे सप्तविधास्तथा
शिवश्राद्धे यदा भुङ्क्ते दोषस्तत्र न विद्यते  ९८
पितृशेष इति प्रोक्तः पितृणामक्षयो भवेत्
श्राद्धहीनश्च यो मर्त्यः अपुत्रो वा दरिद्रकः  ९९
एवं यः कुरुते मर्त्यः शिवसायुज्यमाप्नुयात्
अन्यथा कुरुते मोहात्तत्कर्म निष्फलं भवेत्
तस्मात्सर्वप्रयत्नेन आगमोक्तविधानतः  १००

इत्यजिताख्ये महातन्त्रे चर्यापादे शैवश्राद्धविधिः त्र्यधिकशततमः पटलः

## अनुबन्ध १
## रक्षाबन्धनविधिः

अथ वक्ष्ये विशेषेण रक्षाबन्धविधिक्रमम्
स्थापने प्रोक्षणे चैव अयने विषुवे तथा  १
देवस्य चोत्सवारम्भे देवदेव्योश्च कौतुकम्
आचार्यो मन्त्रसिद्ध्यर्थं रक्षाबन्धक्रमेण च  २
कौतुकं बन्धयेद्रज्जुं पञ्चसप्तनवत्रिधा

विश्वेभ्य इति मन्त्रेण बृहत्सामक्षमन्त्रतः ३
पुत्रवान् रोगनाशार्थमार्तश्चौषधमीप्सितम्
विश्वस्य परिरक्षार्थं रक्षाबन्धं समाचरेत् ४
विघ्नेश्वरपूजासंकल्पं कृत्वा रक्षाबन्धकर्म करिष्ये । पुण्याहवाचनं वरुणकुम्भस्थपनं च
करिष्ये इति संकल्प्य अष्टदलपद्ममालिख्य
धान्यतण्डुलतिलमाषलाजदर्भानास्तीर्य तेषूपरि कुम्भं
निधाय जलं पूरयित्वा कुम्भमलङ्कृत्य नालिकेरफलेन पिधाय
वरुणमावाह्य षोडशोपचारपूजां
कृत्वा स्वर्णरजतताम्रनिर्मितपात्रे शुद्धतण्डुलमापूर्य अष्टदलपद्मं
विलिख्य मध्ये नालिकेरताम्बूलं
स्वर्णकार्पासनिर्मितनवतन्तून् क्रमेण संस्थाप्य प्रोक्ष्य हृदयेन
परमीकृत्य संरक्ष्य पुण्याहपञ्चगव्यार्घ्यजलेनास्त्रेण स्थण्डिले ओं हां
आधारशक्तये नमः यन्त्रिकायां त्रियम्बकाय नमः
स्थलिकायां पृथिवीतत्त्वाय नमः तण्डुले सप्तकोटिमहामन्त्रेभ्यो
नमः स्वर्णरजतकार्पाससूत्रे आत्मतत्त्वाय नमः विद्यातत्त्वाय नमः
शिवतत्त्वाय नमः नालिकेरे मायाशक्त्यै नमः भस्मनि लकुलीश्वराय
नमः इति गन्धपुष्पनैवेद्यफलताम्बूलधूपदीपं घण्टारवेण दत्त्वा
प्रतिसरजपं कुरुध्वं इति प्रार्थयेत् वयं कुर्मः इति प्रतिवचनम् ।
प्रतिसरजपः । ॐ तत्सवितुर् त् । ओं अग्निमीळे पुरोहितं स्रवन्तु
नः । कृणुष्वपाजः प्रसितिन्नपृथ्वीं अदेवी इत्यादि जपित्वा ॐ
नमो ब्रह्मणे करोमि । इति त्रिः । प्रणवेनास्थाप्य
सुरभिमयाब्लिङ्गाभिः प्रतिसरसूत्रं कर्तारं च प्रोक्ष्य प्रतिसरसूत्रमादाय
त्र्यम्बकं यजामहे इति भस्मना त्रिरूर्ध्वमुन्मृज्य अग्निरायुष्मान् इति

नालिकेरं दक्षिणहस्ते निक्षिप्य बृहत्सामक्षत्रभृद् रक्षा इति रक्षां कुर्यात् । यो ब्रह्मा ब्रह्मण उज्जहार अक्षितम् । इत्यष्ट ऋृग्भिः बन्धयेत् । रक्षाबन्धनमुहूर्तः सुमुहूर्तोऽस्तु इति प्रतिवचनम् ।

लिङ्गस्य रुद्रभागे तु पीठे च नालमध्यमे
देवानां दक्षिणे हस्ते शक्तीनां वामहस्तके ५
शिवास्त्रमध्यमे भागे वृषस्य दक्षशृङ्गके
ध्वजदण्डस्थिते दण्डे रुद्रभागे तु निक्षिपेत् ६
रथे सिंहासने चैव पूर्वस्तम्भे तु बन्धयेत्
मण्डपादिषु सर्वेषु मुख्यस्तम्भे तु बन्धयेत्
इत्येवं सर्वमाश्रित्य सूत्रधारं तु कारयेत् ७

इत्यजितागमे प्रथमतरङ्गे रक्षाबन्धनविधिपटलः

## अनुबन्धः २

### शिवमण्टपपूजाविधिः

ततो मण्टपपूजाया विधानं वक्ष्यते शृणु
उत्तमं मध्यमं चाथ अधमं चाधमाधमम् १
इति भेदैश्चतुर्भिस्तु युक्तं तत्कुण्डसंख्यया
त्रयस्त्रिंशत्कुण्डयुक्तं पञ्चावरणसंयुतम् २
मण्टपं यागशालाया उत्तमं परिकीर्तितम्
चतुःप्राकारसंयुक्तं पञ्चविंशतिभिस्तथा ३
कुण्डैस्तु यागशालाया मण्टपं मध्यमं भवेत्
तथा कुण्डैः सप्तदशैः प्राकारत्रयसंयुतम् ४
एकावरणसंयुक्तं नवकुण्डैः परिष्कृतम्
अधमं प्रोच्यते यागमण्टपं गुरुसत्तम ५

पञ्चकुरडैस्तथैकेन कुरडेनैव विनिर्मितम्
अधमाधममित्युक्तं यागमरटपकल्पने ६
स्वार्थप्रतिष्ठादीक्षादौ अभावे गुरुसत्तम
पञ्चकुरडैककुरडानि गृह्णीयान्न तु शक्तिमान् ७
अन्तरीतप्रतिष्ठायां प्रायश्चित्तादिकर्मणि
अधमाधममित्युक्तं कृत्स्यसौलभ्यहेतुतः ८
मरटपस्यार्चनाप्येषा त्रिधा वै परिकीर्तिता
सशक्तिका विशक्तिश्च केवलेति विभेदतः ९
मरटपाराधनोक्तानां देवतानां गुरूत्तम
सर्वासामपि च ध्वानावाहनादिपुरःसरम् १०
पूजा या क्रियते सा तु सशक्तिः परिकीर्तिता
आसनैर्मूर्तिमूलैश्चावाह्य यत्पूजनं गुरो ११
विशक्तिः कीर्त्यते चाथ केवला च नमोऽन्ततः
सशक्तिका ह्यनावर्ते पुनरावर्तकेऽपि च १२
आवर्तादौ च कर्तव्या ह्यन्तरीतेऽथ देशिक
दीक्षायामुत्सवे चैव प्रायश्चित्तादिकर्मणि १३
स्वार्थलिङ्गप्रतिष्ठादौ विशक्तिः परिकीर्त्यते
अन्त्येष्टौ केवला प्रोक्ता इति तन्त्रविनिश्चयः १४
उक्तमार्गेण सर्वत्र कुर्याद्देशिकसत्तम
अन्यथा यदि मोहेन कुर्याच्चेत्कर्तृनाशनम् १५
कर्मनाशश्च देशस्य क्षोभश्चेह प्रजायते
तस्मादुक्तविधानेन कुरु सर्वं गुरूत्तम १६
इत्यजिताख्ये महातन्त्रे क्रियापादे शिवमरटपपूजाविधिः

# अनुबन्धः ३

## भैरवपूजाविधिः

अस्य श्री आपदुद्धारणभैरवमहामन्त्रस्य बृहदारण्यक ऋषिः । अनुष्टुप् छन्दः । आपदुद्धारणभैरवो देवता । ह्रां बीजम् । ह्रीं शक्तिः । भै ह्रूं कीलकम् । मम आपदुद्धारणभैरवप्रसादसिद्ध्यर्थे जपे विनियोगः । प्रणवेन प्राणायामः । मम आपदुद्धारणाय ह्रां वां अङ्गुष्ठाभ्यां नमः । ह्रीं वीं तर्जनीभ्यां नमः । ह्रूं वूं मध्यमाभ्यां नमः । ह्रैं वैं अनामिकाभ्यां नमः । ह्रौं वौं कनिष्ठिकाभ्यां नमः । ह्रः वः करतलकरपृष्ठाभ्यां नमः । ह्रां वां हृदयाय नमः । ह्रीं वीं शिरसे स्वाहा । ह्रूं वूं शिखायै वषट् । ह्रैं वैं कवचाय हुम् । ह्रौं वौं नेत्रत्रयाय वौषट् । ह्रः वः अस्त्राय फट् । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

रक्तज्वालजटाधरं शशिधरं रक्ताङ्गतेजोमयं
हस्ते शूलकपालपाशडमरुं लोकस्य रक्षाकरम्
निर्वाणं शुनवाहनं त्रिनयनमानन्दकोलाहलं
वन्दे भूतपिशाचनाथवटुकं क्षेत्रस्य पालं शिवम् १
बिन्दुत्रिकोणषट्कोणवस्वब्जं षोडशं तथा
द्वात्रिंशद्दलसंयुक्तं भूपुरं च त्रयं लिखेत् २
बिन्दुमध्ये लिखेद्वह्निं त्रिकोणे वटुकं लिखेत्

आपदुद्धारणं षट्कोणे अजामलबद्धाय अष्टदले मन्त्रशेषं षोडशदले कादिसान्तं द्वात्रिंशद्दले भूपुरे इन्द्रादिबीजमिति यन्त्रविधानम् ।

पूजाविधानमाह--

बिन्दुमध्ये आपदुद्धारणाय नमः । त्रिकोणे कालभैरवाय नमः । बडबानलभैरवाय नमः ।

रणरङ्गभैरवाय नमः ।
षट्कोणे--
कालभैरवाय नमः । वीरभैरवाय नमः । महाकालभैरवाय नमः । भीषणभैरवाय नमः ।
शंकरभैरवाय नमः । उग्रभैरवाय नमः ।
अष्टदले--
हेतुघ्नाय नमः । त्रिपुरघ्नाय नमः । वह्नये नमः । यमजिह्वाय नमः । कालाय नमः ।
करालाय नमः । एकाङ्घ्रये नमः । भीमाय नमः ।
षोडशदले--असिताङ्गादि ब्राह्म्यादि
द्वात्रिंशद्दले--तत्तन्मातृकादेवताः
भूपुरे--इन्द्रादि
बहिर्भूपुरे--वज्रादि
इति पूजाविधिः
तथा बिन्दुबिले--वं ह्रीं त्रिकोणे वं टुं कं षट्कोणे--
आपदुद्धारणाय अष्टदले--
अजामलबद्धाय षोडशदले--योगीश्वराय मम दारिद्र्यद्वेषिणे महाभैरवाय हुं फट् स्वाहा ।
अन्त्यदले--षोडशाक्षरम् द्वात्रिंशद्दले--कादिसान्तम् भूपुरे--इन्द्रादिबीजम् लं रं हं षं वं यं सं शं ।
ओं ह्रीं वं वटुकाय आपदुद्धारणाय अजामलबद्धाय योगीश्वराय मम दारिद्र्यद्वेषिणे महाभैरवाय हुं फट् स्वाहा ।
ओं हां भां महाकालभैरव ईशानमूर्धाय नमः ।
ओं हां भां महाबलभैरव तत्पुरुषवक्त्राय नमः ।

ओं हां भां अघोरभैरव अघोरहृदयाय नमः ।
ओं हां भां वज्रवीरभैरव वामदेवगुह्याय नमः ।
ओं हां भां क्रोधकालभैरव सद्योजातमूर्तये नमः ।
इति मूर्धादिपञ्चवक्त्रेषु विन्यसेत् ।
ॐ ह्लां भां वं नमः । पराय महाकालभैरव निवृत्तिकलात्मने नमः
।
ॐ ह्लीं भीं विं नमः । पराय महाकालभैरव प्रतिष्ठाकलात्मने नमः
। ओं ह्लूं भूं वुं नमः पराय
अघोरभैरव विद्याकलात्मने नमः । ॐ ह्लैं भैं वैं नमः पराय
वज्रवीरभैरवशान्तिकलात्मने नमः
ॐ हौं भौं वौं नमः पराय क्रोधकालभैरवशान्त्यतीतकलात्मने नमः
इति जानुगुह्यहृदयवक्त्रमूर्धसु कनिष्ठादिक्रमेण विन्यसेत् ।
ॐ हां भां अनन्तभैरवाय नमः
ॐ हां भां सूक्ष्मभैरवाय नमः
ॐ हां भां शिवोत्तमभैरवाय नमः
ॐ हां भां एकनेत्रभैरवाय नमः
ॐ हां भां एकरुद्रभैरवाय नमः
ॐ हां भां त्रिमूर्तिभैरवाय नमः
ॐ हां भां श्रीकण्ठभैरवाय नमः
ॐ हां भां शिखण्डिभैरवाय नमः
इत्यष्टविद्येश्वरभैरवान् विन्यसेत् । तदुक्तम्--
पञ्चमूर्तीः षडङ्गं च प्रथमावरणे स्मृतम् ३
अष्टविद्येश्वरांश्चैव द्वितीयावरणे तथा
ब्राह्मयादि शक्तिसहितानसिताङ्गांस्तृतीयके ४

चतुरिन्द्रादिकं चैव वज्रादीन् पञ्चमे तथा
पञ्चावरणसंयुक्तं भैरवं तं प्रपूजयेत् ५
नीलजीमूतसंकाशं नीलाञ्जनसमप्रभम्
शुद्धस्फटिकसंकाशमभिरक्तशिरोरुहम् ६
दंष्ट्राकरालवदनं किरीटमकुटोज्ज्वलम्
भुजङ्गमेखलोपेतं मणिरत्नविभूषितम् ७
खड्गं वामे सव्यपाणौ शूलं चैव तथा पुनः
कपालमभयं वरदं डमरुं भुजगं तथा
दण्डपाणिं महाबाहुं ध्यात्वा मन्त्रं सदा जपेत् ८
इत्यजिताख्ये महातन्त्रे क्रियापादे भैरवपूजाविधिपटलः

## अनुबन्धः ४

अन्तर्बलिबहिर्बलिविधिः
बलिदानं द्विधा प्रोक्तं बहिरन्तर्विभागतः
आदावन्तर्बलिं कुर्याद्बहिर्बलिमतः परम् १
मेखलासु प्रकुर्वीत कुण्डस्यैव यथाविधि
कुण्डहीनप्रदेशे तु तस्य चाग्नेयकोणतः २
मण्डलं परिकल्प्याथ कुर्याद्वै बलिदानकम्
प्रधानकुण्डे संप्रोक्तं नियमेन बलेर्द्वयम् ३
अष्टस्वन्येषु कुण्डेषु कुर्यादेकं बहिर्बलिम्
पञ्चावरणसंयुक्तो विभाति परमेश्वरः ४
प्रथमावरणे ब्रह्मपञ्चकं चैव देशिक
विद्यादेहश्च हृदयं नेत्रं मूर्धा शिखा तथा ५
कवचं च तथैवास्त्रं शिवाग्नौ जुहुयाद्गुरो

अन्येष्वावरणेष्वेवं स्थितानां तु दिवौकसाम् ६
बलिदानं प्रकुर्वीत न कुर्यादाहुतिं गुरो
द्वितीयस्मिन्नावरणे स्थितानां तु दिवौकसाम् ७
विद्येश्वराणामष्टानां तृतीयावरणे तथा
नंद्यादीनां तथाष्टानां कुर्यादन्तर्बलिं क्रमात् ८
चतुर्थावरणस्थानामिन्द्रादीनां सुपर्वणाम्
बहिर्बलिं प्रकुर्वीत विधिवद्देशिकोत्तम ९
प्रथमावरणं शुद्धं द्वितीयं मिश्रमुच्यते
तृतीयं च तथा मिश्रं चतुर्थावरणं पुनः १०
अशुद्धमिति संप्रोक्तं पञ्चमं च तथा भवेत्
द्वितीयस्य तृतीयस्य मिश्रत्वेनैकता कृता ११
मेखलायां तथा चोर्ध्वे चाष्टविद्येश्वरान्सुरान्
मेखलायां तथा मध्ये नंद्यादीन्वै तथा सुरान् १२
ध्यात्वान्तर्बलिना चैवं पूजयेद्गुरुपुङ्गव
मेखलायां तथा चाधश्चेन्द्रादीनां दिवौकसाम् १३
बहिर्बलिं क्रमात्सम्यग्दापयेद्गुरुसत्तम
चतुर्थावरणस्थानामायुधान्येव पञ्चमे १४
तदेतेषां न कुर्वीत पृथग्वै बलिकल्पनम्
कुण्डं विना स्थण्डिलादौ कल्पितस्याशुशुक्षणेः १५
होमादौ पदपूजायां बलिदानविधिक्रमम्
वक्ष्यते श्रद्धया सार्धं शृणु नान्यमना गुरो १६
स्थण्डिलादेस्तथाग्नेयभागे संस्कृतभूतले
हरिद्रारेणुभिः सम्यग्वृत्तं वा चतुरश्रकम् १७
कारयेन्मण्डलं चान्तर्द्वादशाङ्गुलविस्तृतम्

चतुरङ्गुलं बाह्ये तु परितोऽन्यत्प्रकल्पयेत् १८
अन्तर्मण्डलके क्षिप्तो बलिरन्तर्बलिर्भवेत्
बहिर्मण्डलके क्षिप्तो बलिश्चैव बहिर्बलिः १९
पूर्वतोऽन्तर्मण्डलस्य रुद्रेभ्य इति मन्त्रतः
दक्षिणे मातृभ्य इति गणेभ्य इति पश्चिमे २०
यक्षयेभ्य इत्युत्तरे च ग्रहेभ्य इति चैशके
वसुभ्य इति चाग्नेये रक्षोभ्य इति नैर्ऋतौ २१
नागेभ्य इति वायव्यामृक्षेभ्यश्चैशदक्षिणे
निर्ऋत्युत्तरतश्चैव राशिभ्य इति मध्यमे २२
क्षेत्रपालायेति ततो ॐ हां पूर्वेभ्य एव च
स्वाहान्तेभ्यो बलिं कुर्यादेवमन्तर्बलिक्रमः २३
बाह्ये तु मण्डले चैवं मघवानं च पूर्वतः
आग्नेयेऽग्निं यमं चैव दक्षिणे नैर्ऋतौ तथा २४
निर्ऋतिं पश्चिमे चैव वरुणं वायुकोणतः
वायुं च उत्तरे सोममीशानं चैव तद्दिशि २५
ईशानदिग्दक्षिणे च ब्रह्माणं च विभाव्य च
निर्ऋत्युत्तरतो विष्णुमों हां बीजसमन्वितम् २६
चतुर्थ्यन्तान्वितं चैव स्वाहान्तं चैव देशिक
कल्पयेन्मन्त्रमुच्चार्य बहिरेवंविधो बलिः २७
मेखलायां विनिक्षिप्तौ बहिरन्तर्बली गुरो
प्रतिष्ठादौ शिवादीनां कल्पयेतां विधानतः २८
मण्डले कल्पितावेतौ बहिरन्तर्बली क्रमात्
नियमेन विधीयेतां वास्तुशान्त्यादिकर्मणि २९

इत्यजिताख्ये महातन्त्रे क्रियापादे अन्तर्बलिबहिर्बलिविधिः

# अनुबन्धः ५
## प्रायश्चित्तविधिः

प्रासादे मनुजे जाते मृते राज्ञो भयं भवेत्
मृतादि तत्प्रदेशात्तु विसृज्याथ बहिस्ततः १
प्रोक्षयेद्गोमयाम्भोभिर्येन देशेन ते गताः
ततो विशेषतःकुर्यात्पुण्याहप्रोक्षणं च वै २
मृतप्रसूतदेशे तु खानयोग्यं खनेत्तु वै
परित्यज्य मृदोऽशुद्धाः शुद्धाभिः पूरयेत्ततः ३
प्रक्षाल्यासन्नकुड्याद्यं गोमयालेपिते स्थले
पुण्याहं तत्र गव्येन प्रोक्षणं च क्रमान्नयेत् ४
शैवसंभोजनं चान्ते जलसंप्रोक्षणं नयेत्
स्नपनं शान्तिहोमं च यदि गर्भगृहे भवेत् ५
शान्तिहोमादिकं कुर्यादर्धमण्डपके सति
प्रतिमामण्डपे शान्तिहोमं च स्नपनं विना ६
अन्तःसालान्तरे चेद्धि जलसंप्रोक्षणं नयेत्
अन्तःसालास्थदेवानां स्नपनं शान्तिहोमकम् ७
गव्येन प्रोक्षयेत्तत्स्थपीठानामपि शुद्धये
त्यजेन्मार्त्तिकभाण्डानि क्षालयेद्दारुजं जलैः ८
अन्तःसालाया बाह्ये स्यात्स्नपनेन दिशाहुतिः
पाकस्थानादिदेशेषु मरणादेश्च संभवे ९
पूर्ववच्छुद्धिमापाद्य पर्यग्निकरणं नयेत्
दिशाहोमं ततः कुर्यान्मूर्तिहोममथाचरेत् १०
प्राकारद्वयबाह्ये तु शान्तिहोमं तु कारयेत्

धाम्नो द्वादशदण्डान्ते वास्तौ मर्त्या मृता यदि ११
परित्यज्य ततः कुर्यान्नित्यनैमित्तिकादिकम्
कृतं चेद्ग्रामनाशः स्यात्तदर्थं स्नपनं चरेत् १२

इत्यजिताख्ये महातन्त्रे क्रियापादे प्रायाश्चित्तविधिः

Reference:
Bhatt, N.R., *Ajitāgama, Edition Critique*, vols. I, II, and III, Institute Francais de Pondichery: Pondichery, 1991.